श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

## ( दशम-पूर्वार्ध-तामस-फल-प्रकरणम् । )

( अध्यायाः २६-३२. )

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

श्रीकङ्करपल्लीस्थतृतीयपीठाधीश्वरनित्यलीलास्थश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणस्मरणार्थं 'तद्गृहसेवक सद्गत वैष्णव हरिजीवनदास पुरुषोत्तमदास' इत्यनेन सांप्रदायिकसाहित्यसमुद्धारार्थं निर्दिष्टद्रव्यसंग्रहतो 'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए., एलूएल्. बी., वकील हाइ कोर्ट' 'सुरतिस्थ धैर्यलाल व्रजदास सांकलीया, बी. ए., एलूएल्. बी., वकील हाइ कोर्ट' इत्येताभ्यां संशोध्य 'निर्णयसागर' मुद्रणालये मुद्रयित्वा प्रकटीकृता ।

श्रीवल्लभाब्दाः ४४५. संवत् १९८०.

मूल्यं रूप्यकत्रयम् ।

We express our heartfelt thanks to the trustees Messrs. Harilal Desaibhai Desai and Motilal Govindlal who supplied us with the required funds, for the publication of this work.

M. T. Teliwala.
D. V. Sankalia.

---

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya-sagar' Press, 23, Kolbhat Lane, Bombay.

---

Published by Mulachandra Tulsidas Telivala B. A., L L. B., Vakil, High Court, Khakkar Buildings, C. P. Tank Road, Girgaon, Bombay.

# EDITORS' NOTE.

Srimad Bhagavata *is the fruit of* Veda Kalpavriksha and Tamasa Phala Prakarana which is now published is the best portion of it All Vaishnavas like it the most. The reason is plain For removing the pain of separation, Para Brahman Himself comes down into the world, and being रसो वै सः, gives आनन्द to souls devoted to Him in various ways The culminating point is reached in रासपञ्चाध्यायी in which His contact or Leela with His souls is described in five different ways आत्मा, मनस्, प्राण, इन्द्रिय and शरीर. In the last chapter of Geeta, it is stated that after one becomes ब्रह्मभूत, he gets the भक्ति of कृष्ण This भक्ति or भजनानन्द is therefore a stage reached after ब्रह्मभाव and is superior to it To be continuously enjoying the bliss of रसो वै सः is the final goal of life, and in the last chapter of this Prakarana an idea is given as to how the souls of Gopikas were always engrossed in God All this cannot be fully understood unless the reader has a clear grasp of the meaning of Srimad Bhāgavata as explained by Srimad Vallabhacharya, who calls himself वाक्पति वैश्वानर, who came here to explain the meaning by the command of God It was our desire to write a long introduction explaining how रसो वै सः manifests Himself to His souls, but we have been obliged for various reasons to leave it for some future occasion We were able to collect six good manuscripts, the best of which we got from Mr Mohanlal of Sankheda It is a very well-preserved and extremely correct mss written in Samvat 1703 It was originally written for Sri Vithalraiji the grandson of Sri Giridharji, the first son of Shri Vitthalesha the second son of Sri Vallabhacharya himself In this mss the portions of Sri Vitthalesha incorporated into Subodhini have been bracketed. We have also bracketed these portions and drawn the attention of readers to them The second mss was one on which notes have been written by Tuljaram Bhatta, a pupil of Sri Purushottamaji. The mss is a very correct one, and we got it from Sri Vrajaratnaji of Surat The third mss was obtained from the late Mr Tansukhram M Tripathi One mss of Kaka Sri Vallabhaji was received from Broach We have tried to settle the text of the Slokas of Sri Bhāgavata according to Sri Vallabhāchārya A translation in Gujarati of the Bhāgavata verses is given Sri Vallabhaji's Lekh is also printed We have added portions of Nibandha, and incorporated all available Svatantra Lekhas on various portions of Subodhini Full details of all these are given in sanskrit preface We have already published Sri *Goswamiji's Tippani, and Sri Purushottamaji's Prakāśa on this portion The reader* has now before him all available literature on this most important portion except योजना and we are very glad that we have been able to help him so far Indexes of Slokas and Kārikās have also been given and quotations traced to their sources as far as we could. The funds for this publication have been supplied by the Trustees of the late Harijivandas Purushottamdas—a very pious Vaishnava of Dhandhuka—in pursuance of the directions in his will, and we are glad to note that this most important work, carried through the press with great care and devotion, will be available to the Vaishnava public, at cost price or even less, and thereby they will get its full benefit, and thus this publication will be able to render help for the revival of learning in our Sampradāya

This work is inscribed to the memory of the late Sri Purushottamaji Mahārāja of Kankroli the guru of the testator The first edition of this work was also published with the help of the funds of Seth Harijivandas Trust in memory of Sri Balakrishnalalji Maharaja of Kankroli.

With feelings of joy, we offer this fruit of our labour of love at the Lotus Feet of Lord Sri Krishna.

श्रीकृष्णाय नमः ।

# प्रस्तावना ।

श्रीमत्याः सुबोधिन्या दशम-उत्तरार्ध-राजस-साधन-प्रकरणस्य प्रकाशनं श्रीमद्गोस्वामिकुलतिलकश्रीगोवर्धनलालचरणद्रव्यसाहाय्येन कृतम् । तत्र श्रीवल्लभकृतलेखो मुद्रितः । तामेव पद्धतिमनुसृत्य दशम-पूर्वार्ध-तामस-फल-प्रकरण-श्रीसुबोधिन्या मुद्रणं 'भगवद्धर्मपरायण सद्गत धन्धुकानिवासि हरिजीवनदास पुरुषोत्तमदास' इत्यस्य साम्प्रदायिकसाहित्यसमुद्धरणार्थं निर्दिष्टद्रव्यसङ्ग्रहतस्तद्गुरुचरणनित्यलीलास्थश्रीमद्गोस्वामिश्रीपुरुषोत्तममहाराजचरणस्मरणार्थं तद्द्रव्यसङ्ग्रहव्यवस्थापकाभ्यां वितीर्णद्रव्यसाहाय्येनास्माभिः क्रियते । अत्रापि श्रीवल्लभकृतलेखो मुद्रितः ।

एतत्प्रकरणमुद्रणे श्रीमदाचार्याणां श्रीमत्प्रभुचरणानां वा मूलपुस्तकं तु नैव दृष्टम् । तामससाधनश्रीसुबोधिनीपुस्तकं तादृशं प्राचीनं श्रीमद्गोस्वामिनीश्रीकृष्णप्रियाणां मन्दिरे सेवायां विराजते । एतत्प्रकरणस्य पाठादिनिर्णये श्रीमत्प्रभुचरणप्रपौत्राणां श्रीदामोदरात्मजश्रीविठ्ठलरायाणां पुस्तकं बहु साहाय्यमकरोत् । अत्यन्तं शुद्धमेतत्पुस्तकं प्राचीनं च । महानुभावैः श्रीविठ्ठलरायैरेतत्पुस्तकं बहुवारं वाचितमिति प्रतिभाति । विरामास्तैरेवास्मिन् पुस्तके निर्दिष्टाः । मूलश्लोकस्य विवरणं यत्र समाप्तं भवति, तदपि सूक्ष्मेक्षिकयात्र निर्दिष्टम् । अन्योपि विशेषोऽस्माभिरस्मिन् पुस्तके दृष्टः । श्रीमदाचार्यकृतश्रीसुबोधिन्या विचारणावसरे श्रीमत्प्रभुचरणैः क्वचित् स्वतन्त्रटिप्पणं व्याख्यानं वा निजपुस्तकोपरि लिखितम् । कालेन एतदेव टिप्पणं व्याख्यानं वा यद्यपि श्रीमत्प्रभुचरणैः स्वतन्त्रतया लिखितम्, तथापि लेखकदोषाद्वा श्रद्धाधिक्याद्वा आचार्यप्रभ्वोस्तारतम्यं नास्तीति माननाद्वा श्रीमदाचार्यलिखितमूलश्रीसुबोधिन्यामन्तर्गतमभूत् । एतत्स्वतन्त्रलिखनं व्याख्यानं वा टीकाकारैः श्रीसुबोधिनीत्वेन स्वीक्रियते । एतावत्पर्यन्तं तथैव प्रचलति । तथापि सूक्ष्मदृष्ट्या विचारकाणां तु श्रीमत्प्रभुचरणलेखनरीतिः श्रीमदाचार्यलेखनरीतितो विलक्षणा प्रतिभात्येव । एतादृशं वैलक्षण्यं श्रीमत्पुरुषोत्तमैर्दृष्टम् । तथैव ज्ञापितं च तैर्यथावसरं निजग्रन्थेषु । श्रीमत्पुरुषोत्तमानामयं निर्देशः काल्पनिको नैवासीत् । लेखनरीतिः श्रीमत्प्रभूणां भिन्ना वर्तत इति ज्ञात्वा श्रीपुरुषोत्तमैः श्रीमत्प्रभुभिर्निजश्रीहस्ताक्षरलिखितस्वतन्त्राणां सङ्ग्रहार्थं प्रयत्नः कृतो दृश्यते । श्रीमत्प्रभुचरणश्रीहस्ताक्षरलिखितानि स्वतन्त्रलिखनानि स्वयं सम्पादितानि निजमन्दिरे सेवायां तै रक्षितानि । प्रयत्ने कृतेपि सर्वेपि स्वतन्त्राः श्रीमत्प्रभुचरणानां निजश्रीहस्ताक्षरलिखिताः श्रीपुरुषोत्तमैर्लब्धा इति तु नैव प्रतिभाति । तस्माद्वा प्रसङ्गाभावाद्वा श्रीपुरुषोत्तमैः दशमश्रीसुबोधिनीप्रकाशे प्रभूणां सर्वेपि स्वतन्त्रा नैव निर्दिष्टाः । अतः प्रश्न उपस्थितः कथमेतत् सम्पादनीयमिति । अस्मत्कल्पनया कृतमेतन्नैव प्रामाणिकं

भवेत्। तथापि प्रभुचरणकृपयैतदपि साङ्गोपाङ्गं सम्पन्नम्। यतः श्रीविठ्ठलरायाणां पुस्तके सर्वेपि प्रभूणां स्वतन्त्राः ( ) चिह्नान्तर्गतत्वेन निर्दिष्टाः। एतेन एवमपि भाति यदेतत्पुस्तकं मूलपुस्तकत एव लिपीकृतं स्यादिति। एतत्पुस्तकाधारेणैव श्रीमत्प्रभुचरणानां सुबोधिन्यामन्तर्गताः सर्वेपि स्वतन्त्रा अस्माभिः ( ) चिह्नान्तर्गतत्वेन निर्दिष्टा इति। एतत्पुस्तकमस्माभिः संखेडास्थभगवद्धर्मपरायणमोहनलालसकाशादुपलब्धम्। एतत्पुस्तकं तेनापि श्रीगोकुले दर्भावतीस्थमोहनलालचुनीलालद्वारा विक्रयेण प्राप्तम्। सम्वत् १७०३ वर्षे पौषवद्यिप्रतिपदि रविवासरे लिखितमेतदिति।

द्वितीयं पुस्तकं श्रीविठ्ठलरायसूनुश्रीवल्लभानाम्। इदं सम्वत् १७१४ वर्षे लिखितम्। भृगुपुरस्थश्रीगोकुलनाथचरणसेवापरायणनवनीतलालसकाशादुपलब्धम्। इदमपि प्रायः शुद्धम्। तृतीयं सम्वत् १७०७ वर्षे लिखितम्। इदं सद्गततनसुखरामत्रिपाठीसकाशादुपलब्धम्। इदमपि प्राचीनम्। अस्मिन् मूलश्लोका वर्तन्ते। चतुर्थं श्रीमद्गोस्वामिश्रीव्रजरत्नानाम्। इदमपि प्राचीनम्। अस्मिन् पुस्तके क्वचित् स्वतन्त्रं टिप्पणमपि लिखितं दृश्यते। श्रीहस्ताक्षरसाम्येन श्रीपुरुषोत्तमानामन्तेवासितुलजारामभट्टेन लिखितमेतत्स्यादिति प्रतिभाति। एतट्टिप्पणमस्माभिः मुद्रणे संगृहीतम्। अस्मिन् मूलश्लोकाः सन्ति। पञ्चमं श्रीव्रजरत्नानाम्। पञ्चाध्यायीपरिमितम्। एतदपि प्राचीनं प्रायःशुद्धं च।

षष्ठं मोहमयीस्थश्रीमद्गोस्वामिश्रीगोकुलनाथानाम्। प्रायः प्रभूणां सर्वेषां स्वतन्त्राणां सङ्ग्रहोत्र कृतो दृश्यते। इदमपि प्राचीनं प्रायः शुद्धं च।

सप्तमं नित्यस्वरूपब्रह्मचारिणा श्रीवृन्दावने मुद्रितम्। अष्टमं भगवदीयमनोमोहनदासशास्त्रिवसन्तरामाभ्यां राजनगरे मुद्रितम्। नवमं हस्तलिखितं शुद्धं प्राचीनं च 'भट्टछन्नुलालजी' इत्येतेषाम्। मुद्रणे सम्पन्ने तत्प्राप्तम्।

एतदष्टपुस्तकाधारेण तामसफलश्रीसुबोधिनीस्थाः पाठा निर्णीता अस्माभिः। मूलश्लोकास्तु श्रीसुबोधिन्यनुसारेण योजिताः। गुर्जरभाषान्तरः मूलश्लोकानां श्रीसुबोधिन्यनुसारेण योजितम्। मूलश्लोकस्य टिप्पणरूपेण मुद्रितम्।

श्रीमद्वल्लभकृतलेखः पुस्तकचतुष्टयाधारेण शोधितः। पुस्तकद्वयं पं. गट्टूलालजीसद्गृहस्थम्। उभयमपि प्राचीनं प्रायः शुद्धम्। तृतीयं श्रीरणछोडलालानाम्, शास्त्रिहरिकृष्णेन दत्तम्। एतदपि प्राचीनं शुद्धं च। चतुर्थं च नटपुरस्थवैष्णवत्रिभुवनदासस्य। एवं पुस्तकचतुष्टयाधारेण यथामति संशोध्य मुद्रितोऽस्माभिः।

उत्तरार्ध-राजस-साधन-प्रकरणवदत्रापि श्रीमदाचार्यकृतैतत्प्रकरणस्य निबन्धो मुद्रितः। श्रीपुरुषोत्तमकृततद्योजनापि संगृहीता। श्रीघनश्यामभट्टकृतैतत्प्रकरणार्थः श्रीगोकुलरायकृतैतत्प्रकरणाध्यायार्थश्च मुद्रितौ। श्रीमदाचार्यकृतपुरुषोत्तमनामसहस्रत एतत्प्रकरणीयनामानि संगृहीतानि। त्रिविधनामावलीतोपि एतत्प्रकरणीयनामानि सङ्कलितानि। श्रीमदाचार्य-

कृतैतत्प्रकरणीयानुक्रमणिका च निवेशिता । अस्मिन् प्रकरणे बहूनि स्वतन्त्राणि टिप्पणानि व्याख्यानानि च । श्रीटिप्पणीमुद्रणावसरे मिलिताः प्रभूणां स्वतन्त्रलेखा अस्माभिस्तत्रैव संगृहीताः । अवशिष्टाश्च अद्ययावत् यावन्तोऽस्माभिरुपलब्धास्ते सर्वेपि संगृहीताः । अत्र प्रकीर्णव्याख्यानानि प्रायः श्रीहरिधनचरणकृतानि । तान्यपि संगृहीतानि । एतेषां व्याख्यानानां दर्शनेनास्माकमिदं स्फुरति । यद्यपि श्रीहरिरायैराद्यन्तं समग्रं व्याख्यानं श्रीसुबोधिन्या न कृतम्, तथापि तैस्तत्र तत्र विषमस्थलेषु स्वतन्त्रं व्याख्यानं लिखितम् । एतादृशानि बहूनि संगृहीतान्यस्माभिरत्र, तथापि नैवावशिष्टं किमपि व्याख्यानं श्रीहरिरायाणामिति तु वक्तुं नैव शक्यते । यदि सर्वेषां श्रीहरिरायाणां प्रकीर्णटिप्पणानां सङ्ग्रहः क्रियेत, तदा विजिज्ञासूनां यादृशं दर्शनं श्रीसुबोधिन्याः श्रीहरिरायाणामभूत्, तज्ज्ञातं भविष्यति । सम्प्रदायस्य भावनादृष्ट्या विचारकाणामेतत्कर्तव्यमावश्यकमेव । द्वितीयपीठाधीश्वरश्रीमद्गोस्वामिश्रीगोपेश्वराणामिदमतीवावश्यकम् । श्रीरघुनाथात्मजश्रीदेवकीनन्दनानां 'एतच्च भजनं न विषयवदि'त्यत्र स्वतन्त्रं टिप्पणमेकमेव प्राप्तम् । तदप्यत्र संगृहीतम् । एतेषां श्रीदेवकीनन्दनानामपि बहूनि एतादृशानि व्याख्यानानि स्युरिति मन्यामहे । तत्पीठाधिष्ठितश्रीमद्गोस्वामिश्रीवल्लभैरेतानि संगृह्य रक्षणीयानि । श्रीगोकुलनाथानामपि स्वतन्त्रटिप्पणानि सङ्ग्राह्याणि । श्रीमत्प्रभूणां स्वतन्त्रलेखा अस्माभिरत्र संगृहीताः, तथाप्यधुना नावशिष्यते कोपीति तु नैव वक्तुं शक्यम् । कस्यचिद्भगवदीयस्य हरिकृष्णपाहाडस्य 'भजत' इत्यत्रोपलब्धा प्रकीर्णदीपिकापि मुद्रिता । श्रीपुरुषोत्तमानामन्तेवासितुलजारामकृतं रासस्थषोडशगोपिकासङ्ख्यातात्पर्यवर्णनमपि मुद्रितम् । अत्राद्यं पत्रद्वयं तु लुप्तम् । एतेषां स्वतन्त्राणां मुद्रणं नैवास्मत्सन्तोषप्रदम् । क्वचिदेकमेव पुस्तकं मिलितम्, तदपि नैव शुद्धम् । एतच्छोधनार्थं साम्प्रदायिकाः प्रयत्नं कुर्वन्त्विति प्रार्थयामहे । अस्मिन् सङ्ग्रहे पं. गट्टूलालाजीसंस्थाया उपकारस्त्वविस्मरणीयः । श्रीरणछोडलालानां तदाश्रितशास्त्रिहरिकृष्णस्यापि तथैवोपकृतिः । मगनलालशास्त्रिभिः भट्टवल्लभद्रशर्मभिरपि बहूपकृतम् ।

ग्रन्थान्ते श्रीसुबोधिनीस्थकारिकाणां मूलश्लोकानां चानुक्रमौ निवेशितौ । तौ चास्मदीयेन 'नटवरलाल धीरजलाल साङ्कलीया'इत्यनेन सम्पादितौ । एतत्प्रकरणे श्रीमदाचार्यैरुपन्यस्तानां वाक्यानां सूचिपत्रमपि यावच्छक्यं सम्पाद्य निवेशितमस्माभिः ।

एतद्ग्रन्थस्य साहित्यदानेन पूर्णत्वसम्पादकानामुपरिनिर्दिष्टानामाचार्यवंश्यगोस्वामिबालकानां साम्प्रदायिकविदुषां द्रव्यसाहाय्यसम्पादकानां भगवदीयानां चोपकारं मुक्तकण्ठेन उद्घोषयामः । तेषां कृपयैवैतत्प्रकरणं सर्वाङ्गसम्पन्नमभूदिति । विस्तरस्तु वेणुनादे द्रष्टव्यः ।

श्रीसुबोधिनीप्रणेतॄणां श्रीमदाचार्यश्रीमद्वल्लभाधीशचरणानामैतिह्यं तु साम्प्रदायिकानां सुविदितमेवेति नेह विस्तरः । श्रीसुबोधिनीलेखकाराणां विषये किमप्यस्माभिः राजससाधन-प्रकरणे लिखितम् । तदनन्तरं शास्त्रिनन्दकिशोरैः श्रीपुरुषोत्तमकृतश्रीवल्लभानां

मतस्योपन्यासो जन्मप्रकरणप्रकाशे दर्शितः । स उपन्यासस्त्वेवम् । 'यथानेवंविद्'इत्यत्र एकपदमिति । वेदनं वित् । भावे क्विप्××× इत्यर्थ इति श्रीवल्लभः । तन्ममापि सम्मतमिति' १०-४-२०. । प्राचीनतमप्रकाशपुस्तकेषु 'श्रीवल्लभ' इति दृश्यते । प्रसिद्धश्रीवल्लभकृतलेखेऽयं भागोऽक्षरश उपलभ्यते । एतेन श्रीवल्लभानां श्रीसुबोधिनीलेखप्रणेतृत्वं सुष्ठु निश्चीयते । श्रीपुरुषोत्तमैः प्रायः सर्वेषामेव निजपूर्वजानामुपन्यासो निजग्रन्थेषु कृतो दृश्यते । 'इति श्रीद्वारकेश्वराः' 'इति श्रीदेवकीनन्दनाः' 'इति श्रीकल्याणरायाः' 'चचा श्रीगोपेशाः' 'श्रीगोकुलनाथाः' 'श्रीहरिरायाः' 'श्रीव्रजराजाः' इत्येवं सर्वत्रोपन्यस्तपूर्वजस्य बहुवचनेनोपन्यासः कृतः । अत्र तु श्रीसुबोधिनीलेखकाराणां 'श्रीवल्लभ' इत्येकवचनेनोपन्यासः कृतः । एतेन श्रीवल्लभानां श्रीपुरुषोत्तमेभ्योऽर्वाचीनत्वं सूच्यते । श्रीवल्लभाः श्रीपुरुषोत्तमानां प्रीतिपात्रमासन्निति तदन्तिमदानपत्रे तत्कृतसम्मत्यानुमीयते । इदं दानपत्रं वेणुनादे मुद्रितमेव । एतादृशां महानुभावानां श्रीवल्लभानामुपन्यासः श्रीपुरुषोत्तमैरेकवचनेन क्रियते, तेन तेषां श्रीपुरुषोत्तमेभ्यः कनीयस्त्वं तत्प्रीतिपात्रत्वं च सूच्यते । अन्यथा सर्वत्र बहुवचनेन पूर्वजानामुपन्यासकर्तृभिः श्रीपुरुषोत्तमैः कथमत्रैवैकवचनेन श्रीवल्लभानामेवैवमुपन्यासः कृत इति सम्यङ्मनसि नायाति । निजपूर्वजानां श्रीवल्लभानां श्रीपुरुषोत्तमैरेव एकवचनेनोपन्यासः कृत इत्यपि नैव सुवचम् । यतो दृष्टेषु पूर्वजमतोपन्यासेषु सर्वत्र तैर्बहुवचनमेव प्रयुक्तम् । अतः यः कोपि श्रीवल्लभः श्रीपुरुषोत्तमात्कनीयान् तन्मित्रं चासीत्, स एव श्रीसुबोधिनीलेखस्य प्रणेतेति सम्भवति । तादृशश्च सम्प्रदाये एक एव श्रीरघुनाथवंश्यः श्रीविठ्ठलेशात्मजः श्रीवल्लभ आसीत् । अतोयमेव श्रीवल्लभः श्रीसुबोधिनीलेखप्रणेतेति सुष्ठु निश्चीयते । एतेन कल्पपादपे निर्भयरामोक्तं समर्थितं भवति । निर्भयरामोपि 'अयमेव श्रीवल्लभः श्रीसुबोधिन्या व्याख्याते'ति तत्र प्रतिपादयति । प्राप्येषु बहुषु लेखपुस्तकेषु दृश्यमाना 'श्रीविठ्ठलेशात्मजश्रीवल्लभकृत'इतीतिश्रीरप्येवं समर्थिता भवति । मन्यागहे च श्रीपुरुषोत्तमैः प्रथमसुबोधिनीतः प्रकाश आरब्धः, श्रीवल्लभैश्च दशमसुबोधिनीत इति । एतेन दशमप्रकाशे श्रीपुरुषोत्तमकृतः श्रीवल्लभमतोपन्यासः सुष्ठु सङ्गच्छते । इमे श्रीवल्लभाः श्रीमत्प्रभुचरणपञ्चमपुत्रश्रीरघुनाथतश्चतुर्थीं सहर्चां विभूषयन्तः सम्वत् १७२९ वर्षे कार्तिककृष्णद्वादश्यां प्रादुर्भूताः । श्रीविठ्ठलरायाणां कनीयांसः सूनवः । षोडशग्रन्थोपरि तेषां विवरणानि सुबोधिन्यनुसारीणि दृश्यन्ते । एतैर्वयस्य विभागत्रयं कृतम् । प्रथमे विभागे श्रीगोकुलेन्दुं सेवमानाः श्रीगोकुले श्रीकाम्यवने वा व्यरीरजन् । द्वितीये कदम्बखण्ड्यां निवसन्तो ग्रन्थान् विवरणानि चापूपुजन् । तृतीये च सदुपदेशैर्जीवानुद्धर्तुं भारतवर्षं पर्यटन्तः तत्सेवां स्वीकृतवन्तः । श्रीगोपीनाथदीक्षितवंश्यश्रीरघुनाथात्मजश्रीव्रजनाथानामेते गुरव आसन्निति तत्कृताणुभाष्यप्रभामङ्गलश्लोकतोऽवगम्यते । एतेषां प्राचीनं चित्रं चतुर्थपञ्चमपीठाधीश्वरश्रीवल्लभानां सङ्ग्रहे वर्तत इति तच्छि-

व्यकार्यवाहकसद्गतवैष्णवगिरिधरदासतो ज्ञातम्। तत्प्रात्यर्थं महाराजान् वयं विज्ञापितवन्तः। तथाप्युत्तरं नोपलब्धम्। अतस्तच्चित्रनिवेशनार्थमस्मदीयो मनोरथोऽधुना नैव सफलः। श्रीमन्महाराजानां कृपायां सत्यां सोपि प्रभुकृपया कदाचित् सफलो भविष्यतीति मन्यामहे इति।

तामस-फल-श्रीसुबोधिनी-साधनेषु श्रीमत्प्रभुचरणकृतटिप्पणी तु मुद्रितैवास्माभिः। श्रीपुरुषोत्तमकृततत्प्रकाशोऽपि प्रकाशितः। उभयमपि श्रीहस्ताक्षरपुस्तकतः संशोध्य मुद्रितमस्माभिः। अधुनावशिष्यते लालूभट्टकृतैतत्प्रकरणयोजना, निर्भयरामभट्टकृतकारिकार्थश्च। तत्र योजनायाः भट्टबलभद्रशर्मदत्ततन्मूलपुस्तकतः संशोधनं कृतम्। यथावकाशं तामपि प्रकाशयिष्यामः। निर्भयरामकृतकारिकार्थश्च श्रीटिप्पणीप्रकाशलेखानां कारिकाव्याख्यानसङ्ग्रहरूपो वर्तते। सोऽपि श्रीसुबोधिनीकारिकापाठकर्तॄणामत्यन्तमुपकरोति। ततश्च तन्मुद्रणमपि साम्प्रदायिकानां हितावहमिति। प्रथमद्वितीयमूलसुबोधिन्या मुद्रणं तु यथातथा बलभद्रशर्मभिः कृतमेव। तृतीयसुबोधिनीमुद्रणं श्रीनाथद्वारे सुदर्शनयन्त्रालये आरब्धम्। श्रीरणछोडलालैः दशमपूर्वार्धसुबोधिनीमुद्रणं सर्वाङ्गसमेतं प्रतिज्ञातम्। तस्यारम्भोत्सवोऽपि जातः, मुद्रणं तु सम्पन्नं कदा भविष्यतीति भगवानेव जानाति।

भगवतो रसात्मकत्वम्, रसनिष्पत्तिप्रकारः, तत्प्रणाडी, तन्निर्दोषत्वं, परमफलत्वं, इत्येतत्सर्वप्रतिपादकोपोद्घातस्यात्रैव निवेशनार्थमस्मन्मनोरथ आसीत्। तथापि प्रतिबन्धानां बाहुल्यात् भगवदावेशस्य तिरोधानात्स्वल्पत्वाद्वाधुना तदाग्रहोऽस्माभिस्त्यक्तः। श्रीमत्प्रभुचरणकृपया सोपि कदाचित् फलिष्यतीति।

एवं यथाशक्ति सर्वाङ्गसम्पन्नत्वमस्य प्रकरणस्य सम्पादयितुं प्रयासः कृतः। एतेन कस्यचिदपि भगवदीयस्य तामसफलप्रकरणावगाहने किमपि सौकर्यं भविष्यतीति विचारेण परमप्रेम्णा परिश्रमेण च सिद्धमेतत्प्रकरणं श्रीसुबोधिन्याः श्रीमत्प्रभुचरणकमलेषु समर्पयाम इति। श्रीकृष्णार्पणमस्तु।

मुम्बई सम्वत् १९८०
दोलोत्सवः।

मूलचन्द्र तेलीवाला.
धीरजलाल साङ्कलिया.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीसुबोधिनी ।

## ( दशमतामसफलप्रकरणम् । )

### श्रीमद्वल्लभाचार्यप्रकटिता ।

### श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखसमेता ।

---

ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजने ।
लीला या युज्यते सम्यक् सा तुर्ये विनिरूप्यते ॥ १ ॥
लौकिकत्वीपु संसिद्धस्तद्द्वारा पुरुषे भवेत् ।
स्वानन्दानुभवार्थं हि योग्यतापि निरूपिता ॥ २ ॥
ततो हि भजनानन्दः स्त्रीषु सम्यग् विधार्यते ।
तद्द्वारा पुरुषाणां च भविष्यति न चान्यथा ॥ ३ ॥

---

## श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

श्रीकृष्णाय नमः । षड्विंशे । ब्रह्मानन्दादिति । समुद्धृत्य सर्वान् गोकुलस्थानिति शेषः । भजनानन्देति । मुख्या गोव्रजयोषितश्चेत्सुभपन्निपानामपि गोपिकानामिति शेषः । देवयात्राप्रसङ्गस्तु सामान्यतः सर्वेषामन्यभावान्निवृत्तिबोधकः, प्रकृते गोव्रजयोषितां तथात्वबोधनायोक्तः । अत एव तदध्यायकारिकाया'मेकत्रिंशे सर्वभावान्निवृत्तानां तु पूर्ववत् । गानेन रमणं चक्रे' इत्यनेन गोव्रजयोषितामेव रमणमध्यायार्थ उक्तः । अतो गोपिकानामेव भजनानन्ददानमत्र प्रकरणार्थो, न तु गोपानामिति भावः । क्त्वाप्रत्यये समानकर्तृकत्ववत् समानकर्मकत्वनियमाभावाद्ब्रह्मानन्दयोजनं सर्वेषामेव, भजनानन्दयोजनं गोपीनामेवेत्यतः कथं संगतिरिति पूर्वपक्षस्य नावसरः । ब्रह्मानन्दात् सर्वानुद्धृत्य गोपीनां भजनानन्दयोजने भगवता कर्तव्ये सति या लीला युज्यते सा निरूप्यते इत्यन्वयः । तासामेव तद्दाने को हेतुरिति शङ्कानिरासायाग्रिमकारिकेति टिप्पण्यामुक्तम् । एतादृशयोग्यता गोपेष्वपि संपन्नेत्यरुच्या टिप्पण्यां द्वितीयपक्ष उक्तो यद्वेति । तर्हि 'स्त्रियो वा पुरुषो वापी'त्यत्रोक्ता पुरुषेपि सा गतिर्योग्यताभावान्न स्यादित्यरुच्या तत्रैव तृतीयः पक्ष उक्तो यद्वेति । फलितमनुवदन्ति ततो हीति कारिकया । तद्द्वारेति । एतद्विधभगवद्योग्यस्त्री-

स्त्रिय एव हि तं पातुं शक्तास्तासु ततः पुमान् ।
अतो हि भगवान् कृष्णः स्त्रीषु रेमे ह्यहर्निशम् ॥ ४ ॥
बाह्याभ्यन्तरभेदेन आन्तरं तु परं फलम् ।
ततः शब्दात्मिका लीला निर्दुष्टा सा निरूप्यते ॥ ५ ॥
ततो रूपप्रपञ्चस्य पञ्चधा रमणं मतम् ।
आत्मना प्रथमा लीला मनसा तु ततः परा ॥ ६ ॥
वाक्प्राणैस्तु तृतीया स्यादिन्द्रियैस्तु ततः परा ।
शारीरी पञ्चमी वाच्या ततो रूपं प्रतिष्ठितम् ॥ ७ ॥
षड्विंशे तु हरिः पूर्वं जीवानानन्दयत्स्वयम् ।
ते चेत् समर्पितात्मानस्तत्रोपायश्च रूप्यते ॥ ८ ॥
आत्मा यावत् प्रपन्नोऽभूत्तावद्धै रमते हरिः ।
सोऽन्तःकरणसम्बन्धी तिरोधत्ते हरिश्च सः ॥ ९ ॥

प्रथमं भजनानन्दं निरूपयितुं स्त्रीषु स्वानन्दः स्थापनीय इति तासु रत्यर्थमिच्छां

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

स्वलक्षणशक्तिप्रवेशेनैतदनुग्रहेण वा भवतीत्यर्थः । नित्यलीलास्थभक्तविशिष्टप्रभुदर्शने तासामनुग्रहेण तादृशो भावः श्रुतीनां जातः । 'यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिका' इति श्रुतिभिरुक्तम् । तथा गोपेष्वेतद्भावायोग्यताभावान्न तद्दानमिति भावः । अत्रोभयत्रापि पुरुषपदेन 'स्त्रियो वापी'ति वाक्योक्ता ज्ञेयाः, न तु गोपाः । शब्दात्मिकेति । शब्देनात्मा स्वरूपं यस्येति विग्रहः । शब्दस्य लीलेति टिप्पणीस्वारस्येनार्थः । रूपप्रपञ्चस्येति । रूपस्य प्रपञ्चो विस्तारस्तत्प्रकारकरमणं तदानन्दस्थापनमित्यर्थः । सम्बन्धमात्रविवक्षया षष्ठी । टिप्पण्यां बलं हि प्राणानां धर्म इति । 'अन्नेन प्राणाः प्राणैर्बल'मिति श्रुतेर्बलस्य प्राणजन्यत्वादितिभावः । अयं भाव इति । स्वामिनीविषयकभावकृतस्तत्प्राधान्यात्मभावः स्वामिनीप्राधान्यमिति यावत् । संबन्धी तथा हरिरिति । एतस्याग्रिमेण तथेत्यनेनान्वयः । पत्यादिवद्धरिस्तथा अन्तःकरणसम्बन्धीत्यर्थः । तद्व्युत्पादितं सर्वेत्यारभ्येतीत्यन्तेन । गीतगोविन्दादिष्विति । अत्र तु कायिकानन्ददाने मानो न जात इति तथाऽकरण-(बहिरेव मानापनोदाकरणं)मिति भावः ।

सुबोधिन्यां भगवानपीत्यस्याभासे । प्रथममिति । पञ्चप्रकारकमध्ये आत्मनेत्यर्थः । स्त्रीष्विति । प्रसादयुक्तेष्वात्मस्वित्यर्थः । स्वानन्द इति । आत्मानन्द इत्यर्थः । तास्विति । तत्सम्बन्धिरान्निदर्शनस्य हेतुत्वोक्तयेति भावः । मनःस्वरूपस्य करणासम्भवात्तद्धर्मस्यैव करणमित्याशयेनाहुः इच्छामिति । काममित्यर्थः । उद्गतेच्छाया एव कामत्वो-

---

१. महाफलमिति पाठ । २. मानसीत्यपि पाठ ।

कृतवानित्याह भगवानपीति ।

श्रीशुक उवाच—**भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ।**
**वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः ॥ १ ॥**

'मयेमा रंस्यथ क्षपा' इति या रात्रयो वरत्वेन दत्ताः, स्त्रीणां रमणार्थाः, ता रात्रीर्भगवान् परिगृह्य, सर्वास्वेव रात्रिषु ता आधिदैविकीरारोप्य, पूर्णत्वात्तासां पूर्णिमारूपाः कृत्वा, ऋतुमपि शरदमेव कृत्वा, तस्यापि कार्यं पुष्पाण्येव कृत्वा, रसोद्दीपकत्वेन सर्वां सामग्रीं विधाय, पश्चाद्रमणार्थं स्वानन्दप्रकाशकं कामपितामहं मन उत्पादितवान् । तत्र सर्वासु संकल्पः स्वस्मिन्नपि बोधनीयः । तत्र वेणुरपि सहायतां प्राप्स्यति । ततः कामवर्णनम् । अतः प्रथमं तादृशं मनः कृतवान् । यद्यपि एतत्प्रणालिकाव्यतिरेकेणापि स्वानन्दं तत्र स्थापयितुं शक्तः, तथापि मर्यादा तिष्ठत्विति भगवानपि मनश्चक्रे । नन्वेवं सति स्वानन्दः स्थानत्यागात् अन्यथा भवेत्, ततः स्वरूपादपि प्रच्युतः स्यादित्याशंक्याह योगमायामुपाश्रित इति । योगमाया हि यथास्थितमेवान्यत्र स्थापयति, यथा सङ्कर्षणम् । लीलार्थं सापि पूर्वं परिगृहीतेति नापूर्वं किञ्चित् । यथा प्रमाणे रक्षायां च

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

चेतेरिति भावः । व्याख्याने परिगृह्येति । ईक्षणे नायकभावरूपविशेषस्य हेतू रात्रिपरिग्रह इत्यर्थः । परिग्रहं विवृण्वन्ति सर्वास्विति आरोप्येत्यन्तेन । वीक्षणहेतवो विशेषाः परिगृह्येत्यारभ्य विधायेत्यन्तेनोक्ताः । कामपितामहमिति । रन्तुं मनश्चक्रे इत्युक्ते रमणस्य कामसाध्यत्वात् कामस्य संकल्पजत्वान्मनसः कामपितामहत्वं सम्पादितवानिति सम्पन्नम् । तथा चाग्रे कामवर्णनात् सङ्कल्पं ततः कामं च कृतवानित्यर्थः । तत्र सर्वास्विति । देव-(भगवन्मनोरूपचन्द्रसाहित्येनेत्यर्थः) साहित्येन कामजनने सति स्वस्मिन् स्थितोपि सङ्कल्पः सर्वासु बोधनीयः । गानेनेति शेषः । स्वसङ्कल्पबोधनेन तासामपि सङ्कल्पोदयो जातः । स च ( वामदृशां ) मनोहरमिति पदेनोक्तः । गानं मनो हरति स्वाधारविषयकसङ्कल्पयुक्तं करोतीत्यर्थः । तत्रेति । बोधने गानं करणम्, वेणुः सहायः । केवलगानेन तावद्दूरं शब्दो न गच्छेदिति भावः । कामवर्णनमिति । अनङ्गवर्धनमितिपदेन तत्स्थित( गीतस्थित )-कामवर्णनमित्यर्थः । एवं सतीति । रमणेन स्वानन्दस्थापने कृते सतीत्यर्थः । स्वानन्द इति । आत्मानन्दो, न तु धर्मरूप इत्यर्थः । स्थानत्यागादिति । स्वरूपस्य स्वाधारत्वाद्यदानन्दस्य स्थानं स्वरूपमेव, हस्तपादादेर्देह इवेत्यर्थः । अन्यथा भवेदिति । जीवधर्मत्वं प्राप्नुयादित्यर्थः । स्वरूपादपीति । अन्यत्र गतौ तस्य पुरुषोत्तमानन्दत्वं न स्यादित्यर्थः । ( *प्रमाणे इति निमित्तसप्तमी । प्रमाणसम्बन्धिनि कार्ये तद्विरोधपरिहारार्थं

---

१. शरद् ऋतुमां प्रफुल्लित मल्लिकाना पुष्पोवाळी ते रात्रिओनुं निरीक्षण करीने भगवाने पण योगमायानो निकट आश्रय करीने रमणार्थं मन उत्पन्न कर्युं. *बोधनम् ।

चलभद्रोपयोगः, एवं कार्ये योगमायायाः । तत्राप्यन्तरङ्गा योगमाया, अन्यत्र स्थितं प्रमाणमन्यत्रापि योजयति, अन्यत्र स्थितं चानन्दमन्यत्र । अतः प्रमाणातिरिक्तमार्गो भक्तिमार्गश्चाग्रे विततौ भविष्यतः । याश्च रात्रयो रमणार्थमेव निर्मिताः, ता एव परिगृहीताः, अन्यथा साधारणीपरिग्रहे सर्वत्रैवानन्दः स्यात् । शरदि ऋतावुत्फुल्ला मल्लिका यासु । ता दृष्ट्वा रमणार्थं मनः कृतवान् । योगमायां च समीप एवाश्रित्य स्थितः ॥ १ ॥

नूतने तस्मिन् मनसि देवता नास्तीति, अनधिष्ठितं च कार्यं न साधयिष्यतीति तदधिष्ठातृदेवं चन्द्रं च ससृज इत्याह तदोडुराज इति ।

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

चलभद्रोपयोगः । तदुक्तं वत्सासुरप्रसङ्गे दर्शयन् बलदेवायेत्यत्र । वत्सवधस्यानुचितत्वमाशङ्क्य वेदरूपबलदेवाय तत्सम्मत्यर्थं प्रदर्शनमिति । रक्षायामिति । प्रतिबन्धकानागमनेन रसरक्षार्थमित्यर्थः । तत्राप्यन्तरङ्गेति । स्वरूपानन्दविरोधनिवर्तिकेत्यर्थः । विरोधपरिहारमाहुः योजयतीति । युक्तं भवति तथा स्थापयतीत्यर्थः । एतदाशयेनैव टिप्पण्यां 'रसं लब्ध्वानन्दी भवती'ति श्रुतिस्थरसपदस्यार्थः सर्वात्मभावलक्षणस्थायिभाव उक्तः । अत्रायं भावः । छान्दोग्ये 'भूमा कस्मिन् प्रतिष्ठित' इति प्रश्ने 'स्वे महिम्नी'त्युत्तरम् । स्वरूपभूते सर्वात्मभावलक्षणे महिम्नि प्रतिष्ठित इति तदर्थः । योगमाया सर्वात्मभावमुद्बोधयति, तदा तस्मिन् प्रतिष्ठितौ तस्य स्वरूपभूतत्वान्न स्थानत्यागशङ्केति । स्वे महिम्नीति पदद्वयकथनेन तस्य स्वरूपत्वं धर्मत्वं चोक्तम् । तेन स्वरूपत्वमादाय भूमप्रतिष्ठाधर्मत्वमादाय तस्य भक्तेषु स्थितिश्चाविरुद्धा । अतस्तस्य स्वरूपभूतत्वे तस्याप्यन्यत्र स्थितिः कथमिति शङ्काया नावसरः) । साधारणीपरिग्रहे इति । यासु रात्रिषु बाललीला अन्याश्च (रमणव्यतिरिक्ताः) तादृश्यो लीला जायन्ते तासामेवैतल्लीलायामपि परिग्रहे इत्यर्थः । सर्वत्रैवेति । गोगोपादिष्वपीत्यर्थः । 'न चैवं विस्मय' इत्यस्य द्वितीयव्याख्याने 'इयं च लीला स्वरूपानन्दरूपा तादृश्येवे'ति वक्ष्यते । स्वरूपमेव य आनन्दस्तन्निरूपिकेयं लीलेति तदर्थः । तथा च स्वरूपस्यापरिच्छिन्नत्वात्तदानन्दः स्वाधाराधेयेषु सर्वेष्वेव प्रकटः स्यादिति भावः । शरदेति तृतीयाया अर्थमाहुः शरदि ऋताविति । तादृग्वृत्तौ सत्येवं जातमतो हेतौ तृतीयेत्यर्थः । योगमायां चेति । रमणार्थं मनःकरणं योगमायाश्रयणं चेति चकारः । तथा च मूले रन्तुमित्यस्योभयत्राप्यन्वयः । टिप्पण्यां शरदि ऋतावित्यस्याभासे । ननु सर्वज्ञस्येति । सार्वदिकमिति । लौकिकरात्रिषु रमणकालेपि विद्यमान(रात्रिदर्शन)मित्यर्थः । तथाचैतद्रात्रिदर्शनस्यैवालौकिकरमणेच्छायां हेतुत्वोक्तेस्तस्य च लौकिकरात्रिरमणेपि विद्यमानत्वेन तास्वप्यलौकिकरमणं स्यात् । तदा च तासामपि रात्रीणामलौकिकीत्वमेव स्यादिति भावः । एतद्रात्रिदर्शनेऽलौकिकरमणे नियमोपि नास्तीत्याशयेनाहुः ईश्वरस्येति ।

१ देवमिति पाठः । २ लौकिकरात्रीणाम् ।

**तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ।**
**स चर्पणीनामुदगाच्छुचो हरन् प्रियः प्रियाया इव दीर्घदर्शनः ॥२॥**

यदैव मनः कृतवान्, तदैव तस्याधिदैवतमुडुराज उदगात्, उदितो जातः । यद्यप्येकदा रात्रयो दृष्टाः, तथापि क्रमेणैव तासां स्थितिः । भगवन्मनश्चन्द्रस्याधिदैविकत्वात् पूर्ण एव सः, निष्कलङ्कश्च । मनस्येवाविर्भूते तस्याविर्भावः, क्रीडायामुपरतायामुपरतिः, मध्याकाशपर्यन्तमेव गमनम्, नास्तमयः कदाचिदपि । सोऽपि चन्द्रः, स्त्रीणां मनांसि उडुस्थानानीति तेषामपि रक्षकः । इदं प्रथमतया जात इति पूर्वस्यामेव दिशि तस्योदय उच्यते । 'सा दिग्देवाना'मिति । तस्या दिश इन्द्रो देवता अधिपतिश्च । इदानीं भगवानेवेन्द्र इति तस्य रेतोरूपः तस्यामुद्गतः । अतः प्राच्याः ककुभः मुखं मध्यभागं स्वकरैः स्वकिरणैः विलिम्पन् उदगात् । तस्या मुखे न रागः स्थितः, प्रतिस्पर्धिन्यां सूर्यसम्बन्धेन रागसंभवात्, अतः अस्या अपि मुखं कुङ्कुमसदृशैः करैरारक्तं क्रियते । यदि चन्द्रः स्वदिशो मुखं न रञ्जयेत्, तदा भगवन्मनोऽपि स्त्रीणां हृदयं न रञ्जयेत् । कराः

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

सुबोधिन्यां तदोडुराज इत्यस्याभासे । चन्द्रं चेति । मनश्चक्रे चन्द्रं च ससृजे इत्यन्वाचयः । व्याख्याने पूर्ण एव स इति । आधिदैविकस्य भगवत्त्वात् षड्धर्मा आधिभौतिकविलक्षणा उक्ताः । उडूनामिव स्थानं स्थितिर्येषाम् । यथोडवो रात्रिष्वेव प्रकाशमानाः, तथैतान्यप्येतद्रात्रिष्वेव प्रकाशमानानीत्यर्थः । तेषामपीति । भगवन्मनसो देवत्वाद्रक्षकत्वान्मनसां च रक्षक इत्यपिशब्दः । इदं प्रथमतयेति । एतल्लीलार्थमेव जातत्वाल्लीलास्थलस्य वृन्दावनस्य सचर्षणीस्थानान्नन्दग्रामात्प्राच्यां दिशि सत्त्वेन तस्यामेव दिश्युदय इत्यर्थः । सा दिगिति । देवानां लीलोपयोगिपदार्थानां तत्रैव स्थितत्वादित्यर्थः । वृन्दावने रमणनिश्चयादेतासां मनस्तद्दिश्येव स्थितमिति तादृशोडूनां राजापि तत्रैवोदित इति भावः । आर्थं समाजमाहुः तस्या दिश इति । मध्यभागमिति । वृन्दावनमित्यर्थः । अत एव वनस्य तत्कोमलगोभिरञ्जितत्वं वक्ष्यते । प्रतिस्पर्धिन्यामिति । सायंकालेन हेतुना भगवतो वृन्दावनात् प्रतीच्यामागतत्वेन तत्र शयनारात्रिकसामयिकवेणुनादादिना रागसम्भवादित्यर्थः । इदं टिप्पण्यामित्येतत् सर्वं हृदिकृत्वेत्यत्र सर्वशब्देन सूचितम् । तत्रापि ता लीलाः करोति वृन्दावनेपि गतवानिति अस्या अपि इत्यपिशब्दः । अयमेव चन्द्रो नानाप्रकारैः सर्वत्र सर्वं सम्पादयतीति पञ्चमाध्याये टिप्पण्यां वक्ष्यते । स्वदिश इति । एवंप्रकारकचन्द्रोदयोत्रैवेति स्वस्येयमेव दिगिति भावः । चन्द्रस्य दिक्पतित्ववद्भगवन्मनसः स्वामिनीमनःपतित्वम् । तथा च स्वदेवे स्वकीयरञ्जनरूपधर्माभावे भगवन्म-

---

२. प्रिया दीना दीर्घ समय पछी दर्शन देता प्रिय पतिना माफक पूर्व दिशानुं मुख किरणोथी अरुण रंगे रंगता अने शीतळ सुखद किरणोथी चर्षणीओना दुःख दूर करता नक्षत्रराज चन्द्रमानो तेज समये उदय थयो.

शन्तमाः, शीतलत्वात् तापहारकाः । किञ्च, अरुणेन गुणेन कृत्वा अत्यन्तं कल्याणरूपाः । अरुणो हि रागप्रधानः । पुरुषोऽपि यद्यनुरागेण स्पृशति, तदा सुखं भवति । ननु अस्य चन्द्रस्य यदि अधिष्ठातृत्वमात्रम्, तदा मनस्येव उदयो भवेत्, यद्यन्धकारनिवृत्तिः प्रयोजनम्, तदा भगवतैव अन्धकारो निवर्तेत, यदि वा उद्दीपकत्वम्, तदापि भगवतैव तत्संभवः, अतोऽस्यासाधारणं कार्यं वक्तव्यमिति चेत्, अत आह स चर्षणीनां शुचो हरन्निति । चर्षण्यः सर्वत्र परिभ्रमणशक्तयः । ताः सर्वत्र परिभ्रान्ता अपि न क्वापि परमानन्दसम्बन्धिन्यो जाताः । यदि वा कश्चिन् मुच्येत, तथापि ता न प्रवेशं लभन्ते । ततः पूर्वमेव ता निवृत्ता भवन्ति । अतस्तासां शोकस्तिष्ठत्येव । चर्षणीसहितानां जीवानां वा । तासां शोकः इदानीमेव निवृत्तः । शक्तिसहितानामेव परमानन्दानुभवस्य वक्तव्यत्वात् । प्रायेण तदानीन्तना जीवाः तादृशशक्तियुक्ताः । तस्मिन्नुदिते परमानन्दानुभवोऽवश्यंभावीति । तथा सति प्रयोजनत्रयम्, दिग्देवताया मुखसम्मार्जनं, चर्षणीनां शोकदूरीकरणं, अन्धकारनिवृत्त्यादिश्च । कण्ठोक्तं द्वयमपि तदेकसाध्यमिति वक्तुं दृष्टान्तमाह प्रियः प्रियाया

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नसि स धर्मो न भवेदित्यर्थः । किञ्चेति । शन्तमत्वमात्रेण तापहरणं प्राप्तम् । शन्तमत्वस्यारुणगुणजत्वकथनेन सुखजनकत्वं च प्राप्तमित्यर्थः । चर्षण्य इति । सर्वत्र भक्तेषु परिभ्रमणयुक्ताः प्रसादनिरूपकशक्त्यंशभूताः शक्तयः । भगवन्मनस इति शेषः । ता यथायोग्यं सर्वत्र भक्तेषु परिभ्रमन्ति कुब्जादिष्वपि । तथापि नैतदानन्दसम्बन्धः, किन्तु मुक्तिरेवेति भावः । अन्यत्राधिकाराभावान्न दानमिति ज्ञात्वा स्वामिनीष्वधिकारं निश्चित्य तदाशया स्थिताः । अत्रापि विलम्बात्तासां शोकः । विद्यमाने तत्प्रसादे मुक्तिं न दद्यादेवेति सूचनाय मुक्तेः पूर्वं तन्निवृत्तिरुक्ता । समुदितस्त्रीत्वलक्षणा शक्तिः कात्यायनी । तदंशभूतास्तासु तासु स्थिता एता इति भावः । टिप्पण्यां यौगिकार्थकथनं द्वितीयपक्षस्थम् । तस्मिन् पक्षे योगमायांशभूता एतासु सर्वात्मभावजनिकाः शक्तयश्चर्षण्यः । योगमाया हि भगवतो यत्र यथा लीला चिकीर्षिता, तत्र तदनुरूपभावं सम्पादयति । यत्र पितृत्वादिचिकीर्षा, तत्र तथैव । अत्र सर्वात्मभावलीला चिकीर्षितेति योगमायांशभूतास्तासु तासु स्थिताः सगुणनिर्गुणाद्यनेकप्रकारैस्तत्तद्भावं सम्पादयन्ति । पक्षद्वये चर्षणीस्वरूपभेदस्तु टिप्पण्यामाद्यपक्षे त्विति तुशब्देन पक्षान्तरनिरासकेन स्फुटमेवोक्तः । लीलासमयेपि तत्तदनुरूपभावजननार्थं शक्तीनां तत्र स्थितिरिति शक्तिसहितानामित्युक्तम् । अत एव भगवद्विचारितानुपूर्विकस्वरजात्युन्नयनमिति भावः । तदानीन्तना इति । अवतारसामयिका इत्यर्थः । उदासीनेषु तदभावात् प्रायेणेत्युक्तम् । तादृशेति । तत्तल्लीलाचिकीर्षानुरूपतत्तद्भावसम्पादकयोगमायांशभूतशक्तियुक्ता जीवा इत्यर्थः । शोकनिवृत्तौ हेतुमाहुः तस्मिन्निति । अवश्यमिति । अधुनैवेति शेषः । तदेकसाध्यमिति । मुखसम्मार्जनस्यापि तदेकसाध्यत्वेप्यनतिप्रयोजनत्वान्नोदयहेतुत्वम्, किन्तु प्रासङ्गिकत्वमित्याभासे तथोक्तम् ।

इति । दीर्घकाले दर्शनं यस्य । महता कालेनागतो भर्ता प्रियः प्रियायाः पतिव्रतायाः शोकं दूरीकृत्य मुखसम्मार्जनं च करोति । न चैतत्कार्यमन्यथा सिध्यति ॥ २ ॥

एवं मनस उत्पत्तिमुक्त्वा तद्देवतायाश्च ततः सङ्कल्पोत्पत्त्यर्थं *तच्छब्दयोनित्वं निरूपयन् तद्दर्शनेन वेणुनाद उत्पन्न इत्याह दृष्ट्वेति ।

**दृष्ट्वा कुमुद्वन्तमखण्डमण्डलं रमाननाभं नवकुङ्कुमारुणम् ।**
**वनं च तत्कोमलगोभिरञ्जितं जगौ कलं वामदृशां मनोहरम् ॥३॥**

कुमुद्वांश्चन्द्रः, पृथिव्यां सर्वत्रैव मुदं कृतवानिति । तथाकरणे सामर्थ्यं अखण्डमण्डलमिति । न खण्डं मण्डलं यस्य । एतस्य रसोत्पादने [1]विभावत्वमप्यस्तीति ज्ञापयितुं रमाननाभमित्युक्तम् । लक्ष्म्या अयं भ्राता भवतीति, रमाया आननवत् आभा यस्य, तथोक्तः । किञ्च, नवकुङ्कुमवदरुणवर्णमपि । तेन विवाहसमये यथा लक्ष्मीमुखम्, तथायं वर्तते । अतो नूतनकामजनकः । किञ्च, वनमपि रसपोषकम् । तस्य कोमलगोभिरल्पकिरणैः अभितो रञ्जितमारक्तमुक्तम् । ( [2]किरणानां रसदोग्धृत्वम् । वन एव पाल्यमानत्वं

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

चन्द्रस्य मनोधिष्ठातृत्वाच्चर्षणीनां च मनःशक्तित्वाच्चन्द्रस्य चर्षणीभर्तृत्वम् । दिग्देवताभर्तृत्वं तु स्पष्टमेव । मुखसम्मार्जनं चेति । प्रयोजनद्वये एव दृष्टान्तोक्तेरिति भावः । मुखसम्मार्जनं प्रासङ्गिकमिति तत्र चकार उक्तः । अतः स चर्षणीनामित्यस्यासमासेन न विरोधः ॥ २ ॥

सङ्कल्पोत्पत्त्यर्थमिति । स्वामिनीष्विति शेषः । इदं मूले वामदृशां मनोहरमिति क्रियाविशेषणेन सूचितम् । गानं मनो हरति स्वाधारविषयकसङ्कल्पयुक्तं करोतीत्यर्थः । नाद उत्पन्न इति । यथा भावोद्रेके स्वत एव गानं जायते तथेत्यर्थः । भगवांस्तद्भाववशः सन् गानं कृतवानिति सूचनाय नादस्य स्वातन्त्र्यमुक्तम् । मूले दृष्ट्वा जगावित्युक्तेर्भावोद्रेकस्य गाने हेतुत्वमायाति । भावोद्रेके तु रसिकस्यास्वातन्त्र्यं भवत्येवेति निगूढाशयः । दृष्ट्वेत्यत्र । पृथिव्यामिति । 'कासुचिद्भूमिषु निजानन्दसुधां ववर्ष'ति विद्वन्मण्डनसम्मत्या स्वामिनीरूपभूमावित्यर्थः । तथा च पूर्वोक्तस्य चर्षणीशोकहर्तृत्वस्यानुवादोऽयमिति भावः । अखण्डेति । सर्वविषयकः पूर्णो भावो, न तु क्वचिदपि खण्डित इत्यर्थः । विभावत्वमपीति । मनोधिष्ठातृत्वादनुभावत्वमुक्तम् । रमाननाभत्वाद्विभावत्वमप्यस्तीत्यर्थः । किञ्चेति । अतोपि विभावत्वमित्यर्थः । पूर्वेणालम्बनसादृश्यमुक्तम्,

१. पृथ्वीमां सर्वत्र मोद करनार, अखंडित मंडलवाळा, रमाना मुखना जेवी कान्तिवाळा युक्त, अने नवा कुंकुमना जेवा अरुण चन्द्रने, तथा एना, चन्द्रना, अल्प किरणोथी सर्वत्र रंजित, रंगाएला वनने जोईने सुन्दरदृष्टिवाळी स्त्रीओने मनोहर एवुं अव्यक्त मधुरगान प्रभुए कर्युं. *तस्य ।

१. विभावत्वमिति शोधितपाठः । २. ( ) चिह्नान्तर्गतं प्रक्षिप्तम् ।

च ज्ञापयितुं गोपदम् । रमाननाभत्वेन पूर्वं निरूपणाद्यथा तत्रूतनकटाक्षा भावोदयहेतवः, तथैतेऽपीति ज्ञापनाय च । गोपदमिन्द्रियस्यापि वाचकमिति तथा । अधुना भावोत्पत्तिरेव । तत्पोषस्तु स्वामिन्यागमनादिनाग्रे भावीति ज्ञापयितुं कोमलपदम् । यत्र तेन वनमपि रज्यते, तत्र यदर्थमागतः तद्रागं कथं न कुर्यात् । ) ततः सङ्कल्पद्वारा कामजनने सर्वं कार्यं भविष्यतीति फलं यथा भवति तथा जगौ, गानं कृतवान् । तच्च गानं वामदृशां सुन्दरदृष्टीनां स्त्रीणां मनोहरमिति । 'तस्माद्गायन्तं स्त्रियः कामयन्त' इति श्रुतेः । अर्थाद्गीतेन सर्वाः समाहृता इति । यदि व्यक्तमधुरं गीतं कुर्यात्, तदा गीतमेव शृण्वन्त्यः तत्रैव स्थिता भवेयुः । यासां पुनर्दृष्टिर्नोत्तमा, तास्तु नाकारिता एव ॥ ३ ॥

ततः सर्वाः स्त्रियः समागता इत्याह निशम्येति ।

***निशम्य गीतं तदनङ्गवर्धनं व्रजस्त्रियः कृष्णगृहीतमानसाः ।***

**आजग्मुरन्योन्यमलक्षितोद्यमाः स यत्र कान्तो जवलोलकुण्डलाः ॥४॥**

यद्यपि भगवता कुमारिका एवाहूताः, तथापि आह्वानं सदृशमिति, निरोधोऽपि कर्तव्य इति सर्वा एव समागताः । किञ्च, यद्भगवता गीतं तदनङ्गमेव वर्धयति, अङ्गं तु

श्रीविट्ठलरायात्मजश्रीवल्लभकृततलेखः ।

अनेनोद्दीपनविभावत्वमुच्यते इति विभेदः । एवं कुमुद्वद्दर्शनेन नादोत्पत्तिरुक्ता । वनदर्शनेनापि नादोत्पत्तिरित्याहुः किञ्चेति । यदर्थमागत इति । चर्वण्यर्थमागत इत्यर्थः । तत इति । रागानन्तरमित्यर्थः । अर्थाद्गीतेनेति । तथा च स्वविषयकसङ्कल्पजननमाह्वानपदार्थ इति भावः । यदि व्यक्तमधुरमिति । तथा च बर्हापीडेति श्लोकोक्तवत्स्वरूपगुणलीलानुभावनेनाभिरमणसम्पादकं तत्रैव स्थितानां नेत्यर्थः । यासां पुनरिति । पूर्वं तथोत्तमत्वेपि पश्चात् पर्वादिबुद्धिर्यासामित्यर्थः ॥ ३ ॥

निशम्येत्यत्र । आहूता इति । भगवदाह्वानविषयाः स्वविषयकसङ्कल्पजननरूपे आह्वाने ईप्सिततमा इत्यर्थः । आह्वानमिति । आहूयतेऽनेनेति आह्वानं गानमित्यर्थः । उभयश्रुतमपि गानं सदृशमेवेत्यर्थः । सादृश्ये हेतुमाहुः निरोधोऽपीति । निरोधार्थकत्वेन सादृश्यमित्यर्थः । स्वरूपानन्दोपि देय इत्यपिशब्दः । हेत्वन्तरमाहुः किञ्चेति । अनङ्गवर्धकत्वेनापि सादृश्यमित्यर्थः । टिप्पण्यां पूर्वस्य स्पष्टत्वादयमेव हेतुः पूर्वत्र मेलयित्वा व्याख्यातः । पुनर्हेत्वन्तरमाहुः द्वितीयकिञ्चेति । कृष्णमानसविषयकत्वेन सादृश्यम् । अन्यपूर्वानन्यपूर्वयोः कृष्णगृहीतमानसत्वेन सादृश्याद्विषयसादृश्यकृतमुभयश्रुतगानसादृश्यमित्यर्थः । पूर्वत्र निरोध्यत्वेनानङ्गवत्त्वेन च विषययोः सादृश्यं ज्ञेयम् । अनङ्गमेवेति । प्राकृताङ्गरहितं स्वरूपात्मकं काममित्यर्थः । अङ्गं त्विति । अर्शआद्यच् । प्राकृतविभा-

४. अनंगनी वृद्धि करनार ते गीतनुं श्रवण करीने, कृष्णथी जेमना मन गृहीत छे, जेमने एक बीजानो करेलो उद्यम अजाण्यो छे, तथा जेमना त्वराना वेगथी हालता कुंडलो छे, एवा व्रजस्त्रीओ ज्यां कान्त छे, त्यां आव्या.

नाशयत्येव । अतो नूतन उत्पन्नः कामः ता आनीतवान् । किञ्च, व्रजस्य स्त्रियः पूर्वमपि भगवदीयाः, अतः कृष्णेनैव गृहीतं मनो यासाम् । अतः शीघ्रमेव यत्र कान्तस्तत्रागताः । अनेन आकारिता एव प्रथममागता इत्युक्तम् । तासां मुख्यः कान्त इति । अत एवान्योन्यमलक्षित उद्यमो यासाम् । ता हि प्रत्येकमेव भगवन्तं पतित्वेन स्वीकृतवत्यः । स पूर्वमुपात्तो यः कान्तः । तासां शरीरविचारोऽपि दृष्टिर्न जातेति वक्तुं जवेन लोले कुण्डले यासामिति कर्णपीडाननुसन्धानं प्रदर्शितम् । ताः स्त्रियो गौडदेशस्थाः । तत एव कुमारिकाः समागता इति । पूर्वं मथुरादेशस्थितानामपि अनागरीणां कुण्डले एव । ताटङ्कयोरेव वा कुण्डलत्वम् ॥ ४ ॥

प्रसङ्गादन्यासामप्यागमनमाह दुहन्त्य इति ।

**दुहन्त्योऽभिययुः काश्चित् दोहं हित्वा समुत्सुकाः ।**
**पयोऽधिश्रित्य संयावमनुद्वास्यापरा ययुः ॥ ५ ॥**

तासां वा त्रियापराणाम् । तत्र काश्चन षोडशसहस्रव्यतिरिक्ताः नवविधाः समागताः, दशविधा वा । गुणानां त्रैविध्यान्नवविधत्वम् । निर्गुणाश्चैकविधाः । जातिकुललोकधर्मपराः तिस्रस्तिस्र उदीरिताः । तत्र गोपजातीयाः दुग्धपराः । तत्र दुग्धस्योत्पत्तिस्थितिप्रलयान् कुर्वन्ति तास्तिस्रः प्रथममुदीरिताः । एवंविधा अपि गणश इति वक्तुं सर्वत्र बहुवचनम् । काश्चिद्दुहन्त्य एव दोहं दोहनलक्षणं कर्म मध्ये त्यक्त्वा भगवदाभिमुख्येन ययुः । गौर्वत्सश्च बद्धौ, दोहनपात्रं च अर्धदुग्धम्, यः समयः सर्वथा त्यक्तुमशक्यः, तस्मिन् समये समागताः । तथा समागमने हेतुः समुत्सुका इति । सम्यगुत्सुकाः, को वेद क्षणान्तरे भगवान् क्व गमिष्यतीति । अन्याः पुनः पयः अधिश्रित्य तथैव ययुः । भोजनार्थं पयसि पच्यमानाः गोधूमकणाः संयावशब्देनोच्यन्ते । तेषां दाहे सर्वनाश इति । पक्वदशैव संयावशब्देनोच्यते । अतस्तदप्यनुद्वास्य काश्चन अभिययुः । अपरा इति सर्वत्र गुणैर्भिन्नस्वभावत्वम् । एवं तिस्रो राजस्यः ॥ ५ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

बाधद्वयुक्तमित्यर्थः । तासां चेति वक्ष्यमाणपक्षमभिप्रेत्यैवं व्याख्यायते । प्रसङ्गादिति पक्षे तु यथाश्रुतमेव ज्ञेयम् । तं पक्षमाहुः अनेनेति । कान्तपदेनेत्यर्थः । प्रथममिति । अस्मिन् श्लोके इत्यर्थः । तत्र हेतुः तासामिति । 'पतिं मे कुरु'ति तासामेव प्रार्थनादिति भावः । अत एवेति । प्रत्येकप्रार्थनादित्यर्थः । विशदयन्ति ता हीति ॥ ४ ॥

दुहन्त्य इत्यत्र नवविधा इति । निर्गुणत्वं षोडशसहस्रेष्वस्तीति तद्व्यतिरिक्ता याः समागतास्तद्धर्मो नवान्यतमविधत्वमेवेति । अभावस्य प्रतियोगिप्रसिद्धिसापेक्षत्वान्निर्गुण-

---

५. केटलाक वळी उत्सुक थइने दोहता दोह छोडीने आव्या, अने बीजा चूला उपर दूध राखेला हतीने, तो बीजा घउंनी खीर चूला उपरथी उतार्या विना आव्या.

सात्त्विकीराह परिवेषयन्त्य इति ।

**परिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशूनथ ।**

**शुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम् ॥ ६ ॥**

भर्तुरपत्यस्यापि सेवा स्त्रीधर्मः । तत्र भर्तुर्भोजने शयने च सेवा स्वधर्मः । अतिबालकानां पुत्राणां स्तनदानं च । परिवेषणं च सृष्टिरिव, रेतस उत्पादकत्वात् । स्तनदानं पालनम् । शिष्टमन्यत् । सर्वत्र तत्तद्धित्वेति ज्ञेयम् । अन्या इत्यपि । तामसीराह अश्नन्त्योऽपास्य भोजनमित्यादि ॥ ६ ॥

**लिम्पन्त्यः प्रमृजन्त्योऽन्या अञ्जन्त्यः काश्च लोचने ।**

**व्यत्यस्तवस्त्राभरणाः काश्चित्कृष्णान्तिकं ययुः ॥ ७ ॥**

लिम्पन्त्यः शरीरानुलेपनं कुर्वन्त्यः, प्रमृजन्त्य उद्वर्तनादिकं कुर्वन्त्यः, गृहं वा लिम्पन्त्यः, प्रमृजन्त्यः आभरणानि, भाण्डानि वा प्रमृजन्त्यः । अत्रापि पूर्ववदेव क्रमः । शरीरसेवातः गोसेवा मुख्या, ततः पतिसेवेति । 'अञ्जन्त्यः काश्च लोचन' इति गुणातीताः । अतः 'काश्च लोचने' इति दुर्लभाधिकारः सूचितः । ज्ञानमार्गशोधिका इति निर्गुणत्वम् । तासामागमने दैहिकविचारोऽपि न जातः, किम्पुनस्तद्धर्माणामिति वक्तुं वस्त्राभरणयोर्व्यत्यासमाह व्यत्यस्तेति । व्यत्यस्तानि विपरीतानि वस्त्राण्याभरणानि च यासाम् । एवमुत्तमः सर्वासामेव साधारणो निरूपितः । 'व्यत्यासो मार्गगता' विति केचित् । तन्मध्येऽपि काश्चित्कृष्णान्तिकं ययुः, काश्चिन्न । याः पुनः शब्दपरा जाताः, ता उद्युक्ता अपि नागताः, याः पुनः शब्दापेक्षां त्यक्तवत्यः, ताः सर्वतो निरपेक्षाः विपरीतावश्यकदेहधर्माः भगवदन्तिकमागताः ॥७॥

सर्वासामनागमने हेतुमाह ता वार्यमाणा इति ।

**ता वार्यमाणाः पतिभिः पितृभिः पुत्रबन्धुभिः ।**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्वमपि षोडशसहस्रेषु नास्तीत्याशयेन पक्षान्तरमाहुः दशविधा वेति । आद्यपक्षे 'अञ्जन्त्य'-इत्यनेन षोडशसहस्राण्युक्तानीति ज्ञेयम् । शतुर्वर्तमानार्थत्वं विवृण्वन्ति गौर्वत्सश्चेति ।

व्यत्यस्तेत्यस्याभासे । तद्धर्माणामिति । त्रपादीनामित्यर्थः । अत्र व्यत्यासेपि इष्टरूपे तु योगमाया सर्वं सम्पादयिष्यत्येवेति भावः । शब्दपरा इति । पत्यादिकृतनिवारणशब्दं श्रुत्वा पुनस्तद्विचारपरा इत्यर्थः । हेतुमाहेति । वारणं हेतुरित्यर्थः । एतादृशीनां निवृत्त्यभावस्य स्वतः प्राप्तत्वाद्वारणं वाक्यार्थः । तथा च वारणाद्धेतोः शब्दपराणामनागमनमित्यर्थः ॥७॥

---

६. केटलाक गोपीजनो पीरसता हता ते पीरसवुं छोडीने आव्या, तो केटलाक बालकोने स्तनपान करावता हता, तेनो त्याग करीने आव्या. केटलाक पतिओनी परिचर्या करता हता तेनो त्याग करीने आव्या, तो केटलाक अन्यगोपीजनो भोजन करता हता, ते भोजननो त्याग करीने आव्या.

७. केटलाक शरीरने अनुलेपन करता अथवा गृह लींपता, केटलाक स्नान करता, तो अन्य लोचनमां अंजन आंजता, जेमना वस्त्र तथा आभरण उलटासुलटी थई गया छे तेवा केटलाक कृष्णनी समीप चाल्यां.

**गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिताः ॥ ८ ॥**

'रक्षेत्कन्यां पिता विन्नां पतिः पुत्रस्तु वार्धके । अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रिया' इति चत्वारो रक्षकाः । अतो यथायथं पतिभिर्वार्यमाणा जाताः, काश्चन पितृभिः, तथैव पुत्रैर्बन्धुभिश्च । ते हि निरुद्धा अपि फलरसानभिज्ञाः, साधनप्रवणाः । स्वद्वारैव स्त्रीणां भजनं भजनं मन्यन्ते, न तु स्वातन्त्र्येण । तथापि गोविन्देनापहृतः आत्मा अन्तःकरणं यासाम् । निवारणं हि श्रौत्रम् । प्रवर्तकश्च भगवान् । अन्तःकरणारूढाश्च पुरुषाः । न हि नौका प्रवाहवेगाद्गच्छन्ती तिष्ठ तिष्ठेत्युक्ता तिष्ठति । भयं स्वधर्मो वा तासां नास्तीत्याह मोहिता इति । यदि ताः कृष्णान्तिकं न गच्छेयुः, तदा मूर्च्छिता इव प्राणाँस्त्यजेयुः । ( सर्वात्मभावज्ञापनायैवाधुना व्रजस्थानामेतदागमनज्ञानं कारितवानिति ज्ञेयम् । अन्यथाग्रे 'मन्यमानाः स्वपार्श्वस्था'निति वाक्याद्यथा वनस्थितज्ञानं सम्पादितवान्, एवं पूर्वमेवागमनाज्ञानमेव कथं न सम्पादयेत् । 'प्रक्षालनाद्धि पङ्कस्ये'ति न्यायेन तज्ज्ञानं सम्पाद्य तत्सम्भावितदोषाभावसम्पादनात्तदसम्पादनस्यैव वरीयस्त्वादिति ) ॥ ८ ॥

एवं दशविधानां भगवत्समीपगतिमुक्त्वा, यासां कालः प्रतिबन्धकः ।

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ता वार्यमाणा इत्यत्र । प्रवर्तकश्चेति । अन्तःकरणस्येति शेषः । अन्तःकरणारूढा इति । तद्वशा इत्यर्थः । नौकादृष्टान्तसामञ्जस्यायारूढपदम् । पुरुषा इति । 'काममयः पुरुष' इत्यत्रेव 'पुरि शेते' इति व्युत्पत्त्या स्त्रीपुंससाधारण्येन जीवा इत्यर्थः । तथा चैता अन्तःकरणवशाः । अन्तःकरणं तु भगवान् स्वस्मिन् प्रवर्तयति । अतस्तत्रैव गता इत्यर्थः । प्रवर्तकत्वसाम्येन प्रवाहस्थानीयो भगवानिति ज्ञेयम् । एतेन शब्दपराणामन्तःकरणं भगवान्न प्रवर्तितवान्, अतस्तासां तद्विचारपरत्वमिति सूचितम् । तथा च मूले वार्यमाणाः सर्वा जाताः, तासु मध्ये या गोविन्दापहृतात्मानः, ता न न्यवर्तन्तेत्यन्वयः । भयमिति । पत्यादीनामिति शेषः । स्वधर्म इति । मर्यादामार्गीय इति शेषः । प्राणांस्त्यजेयुरिति । अन्तःकरणस्य तत्र गतत्वेन तद्राहित्यादित्यर्थः । तथा च प्राणत्यागोपस्थितौ भयस्वधर्मविचाराभावः शास्त्रोक्त एवेति भावः । बुद्धिरूपान्तःकरणसम्बन्धानन्तरमेव प्राणेन्द्रियसम्बन्धस्य पुरञ्जनप्रसङ्गे निरूपितत्वात् । अत्रापि 'लोकवत्तु लीलाकैवल्य'मितिन्यायेन तथेति भावः । अत एव मोहिता इति । मुह वैचित्ये । चित्तरहिता इत्यर्थः । मूर्छायामपि तादृशो मोहोस्तीति तद्दृष्टान्तः । परं तत्र बुद्धेः सूक्ष्मतया स्थितत्वान्न प्राणत्यागः । अत्र तु सर्वथा गमनाद्यथेति भावः ॥ ८ ॥

अन्तर्गृहेत्यस्याभासे । कालः प्रतिबन्धक इति । तृतीयस्कन्धे दशमाध्याये

---

૮. પતિઓથી, માતા પિતાથી, પુત્રોથી, સંબન્ધીઓથી તેઓ રોકાયલા છતાં જેમના આત્મા ગોવિન્દથી અપહરણ થયલા છે, અને જેઓ મોહિત થયલા છે, તેઓ નિવૃત્ત થયા નહિ, પાછા ફર્યા જ નહિ.

१ ( ) चिह्नान्तर्गतं प्रमूलमिति ।

पूर्वमेव भक्तियुक्ताः, ता भजनानन्दमननुभूयैव, प्रतिबद्धा एव, भगवत्सायुज्यं प्राप्तवत्य इत्याह अन्तर्गृहगता इति त्रिभिः ।

**अन्तर्गृहगताः काश्चिद् गोप्योऽलब्धविनिर्गमाः ।**
**कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ॥ ९ ॥**
**दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ।**
**ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १० ॥**
**तमेव परमात्मानं जारबुद्ध्यापि सङ्गताः ।**
**जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥**

दैवगत्या काश्चिद्गृहमध्ये स्थिताः, गोपभार्याः चातुर्यानभिज्ञाः, अप्रौढाः पतिसहिताः, पतिभिरेव संरक्षिताः, अलब्धविनिर्गमा जाताः । ततः प्रतिबन्धनिवृत्त्यर्थं कृष्णमेव ध्यातवत्यः, परं तद्भावनायुक्ताः, भगवान् जारः स्वयमभिसारिका इति । अन्यथा प्रतिबन्धो न स्यात् । तादृश्योऽपि मीलितलोचनाः सत्यो भगवन्तं दध्युः ध्यातवत्यः, ततो मुक्ता जाताः । ननु तत्र ज्ञानाभावात् विहितभक्त्यभावात् भगवतोऽपि सान्निध्याभावात् कथं मुक्ता इत्याशंक्य, कर्मक्षयात् मुक्ता इति वक्तुं कर्मक्षयप्रकारमाह दुःसहेति । दुःसहो यः प्रेष्ठविरहः स एव महानग्निः, तस्य यस्तीव्रस्तापः, तेन धुतानि निर्धूतानि ज्वलितानि[1] भस्मसात्कृतानि अशुभानि यासाम् । फलभोगे कर्म क्षीयत इत्यविवादम् । कोटिब्रह्मकल्पेषु कुम्भीपाकादिनरकेषु यावत् दुःखं भवेत्, तावत् दुःखं भगवद्विरहे क्षणमात्रेण जातम् । ततः सर्वपापफलभोगः समाप्तः । पुण्यक्षयप्रकारमाह ध्यानप्राप्तेति । सर्वपापक्षये भगवान् ध्याने प्राप्तः । अच्युतः परमात्मा । न तु समागतोऽपि जारत्वेन, अन्यथा ततोऽपि कर्मशेषः[2] स्यात् । तस्य योऽयमाश्लेषः, तेन या निर्वृतिः, तया क्षीणं मङ्गलं पुण्यं यासाम् । कोटिब्रह्मकल्पेषु स्वर्गादिलोकेषु यावत्सुखमनुभूयते, तावत् भगवदाश्लेषे क्षणमात्रेणैवानु-

श्रीविट्ठलराधात्मजश्रीवल्लभकृतलेखः ।

अभगवदीयानां कालमात्रात्वं निरूपितम् । तथा च पतयो भजनप्रतिबन्धकत्वात् कालमात्रारूपा इति भावः । पूर्वमेवेति । साधनदशायामेव भक्तिः । फलदशायां तु जारत्वबुद्धिरित्यर्थः । सान्निध्याभावादिति । बहिःप्राकट्याभावादित्यर्थः । कामादीनां हेतुत्वस्य वक्ष्यमाणत्वेऽप्यवान्तरव्यापारत्वं कर्मक्षयस्येति ज्ञेयम् ॥ ९, १० ॥

९-१०-११. अन्तर्गृहगत केटलाक गोपीजनोए गृह बहार नीकलवानो मार्ग नहि प्राप्त करवाथी नेत्रनिमीलन करीने ते भावथी युक्त थईने कृष्णनुं ध्यान धर्युं. दुःसह एवा प्रियतमना विरहना तीव्र तापथी जेमना अशुभ पाप भस्म थईगया छे, ध्यानमां प्राप्त थयला अच्युतना आश्लेष-संग नी निर्वृति-सुखथी जेमना मंगल-पुण्य क्षीण थई गया छे. तेज परमात्माने जारबुद्धिथी पण तेओ संगत थया तेथी ते एमना बन्धन प्रक्षीण थया, अने तेमणे तरतज गुणमय देहनो त्याग कर्यो.

१. क्षालितानीति पाठः । २. कर्मक्षय इति पाठः ।

भूतम्। अतः पुण्यक्षयोऽपि जातः। ततो मुक्ता जाता इत्याह **तमेव परमात्मानमिति**। सुखभोगार्थमेव भगवान् पूर्वमाश्लिष्टः, भोगे जातेऽपि वियोजकपापाभावात् न वियुक्ताः, अतः संगता एव स्थिताः। शरीरं तु प्रारब्धकर्मनिर्वाणमपतत्। यद्याश्लिष्टो भगवान् न भवेत्, तदा तत्र प्रविष्टाः तद्गतं धर्माधर्मफलं बुभुजुः, भगवति प्रविष्टत्वात् मुक्ता एव जाताः। तदाह **तमेव परमात्मानमिति**। पूर्वं सम्बन्धसमये यद्यपि जारबुद्ध्यापि संगता एव, ततः कर्मबन्धस्य प्रक्षीणत्वात् गुणमयं देहं जहुः। तदा अज्ञानमन्यथा ज्ञानं वा त्रिक्षणावस्थायीति न तयोः प्रतिबन्धकत्वम्, वियोजकाभावात् शरीरान्तरोत्पादकाभावाच्च। अविद्या परं तिष्ठति, सा भगवच्छक्तिः, भगवत्संगतं न व्यामोहयतीति सापि निवृत्ता। ततः मुक्ता जाता इत्यर्थः॥ ११॥

अत्र राजा श्रुतिविरोधमाशङ्कते कृष्णमिति।

राजोवाच—**कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने।**
**गुणप्रवाहोपरमस्तासां गुणधियां कथम्॥ १२॥**

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति श्रुतौ ज्ञानमेव साधनत्वेनोक्तम्। तत्रैव पुनः 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्। स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम्'। उभयोश्च निर्णयः, 'ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः। द्वयोरप्येक एवार्थो भगवच्छब्दलक्षण' इति। 'भक्त्या मामभिजानाती'त्यपि भगवतोक्तम्। ततो मर्यादायां ज्ञानेनैव मुक्तिः, पुष्टौ भक्त्या ज्ञानेन वा। एतासां तु न द्वयम्। भक्तिरपि सगुणा, ज्ञानमपि सगुणम्, उभयं च तामसम्। अतः कथं मुक्तिरिति। तदाह ताः कृष्णं

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

तमेवेत्यत्र। प्रविष्टा इति। शरीरान्तरे प्रविष्टा इत्यर्थः। तदाहेति। प्रवेशाश्रयस्य परमात्मत्वमाहेत्यर्थः। *प्रक्षीणबन्धनत्वं विवेचयन्ति तदेत्यारभ्य निवृत्तेत्यन्तेन।* अज्ञानपदेनाद्यं पर्वोक्तम्, अन्यथाज्ञानपदेन पर्वान्तराण्युक्तानि, अविद्यापदेन शक्तिरुक्तेति विभेदः। तदेति। भगवत्सङ्गे सतीत्यर्थः। आद्यक्षणे सङ्गो, द्वितीयक्षणे सङ्गस्थितिः, तृतीयक्षणे तयोर्नाशः। एवं त्रिक्षणावस्थायित्वं ज्ञेयम्। उभयोस्तथात्वे क्रमेण हेतू आहुः वियोजकेति। शरीरेति। भगवद्वियोगे स्वरूपाज्ञानं स्थिरं भवेत्, शरीरान्तरे सति पर्वान्तराण्यन्यथा ज्ञानरूपाणि स्थिराणि स्युः, तदुभयाभावात्तयोस्त्रिक्षणावस्थायित्वमित्यर्थः। गुणातीतत्वप्राप्त्यभिप्रायेण 'मुक्ता जाता' इत्युक्तम्। एतासां देहादिसङ्घाते अमङ्गलतानिवृत्तयेऽक्रूरस्येव व्यवहारसिद्ध्यर्थं जीवमन्यं भगवान् स्थापितवानिति ज्ञेयम्॥ ११॥

कृष्णमित्यत्र। तत्रैवेति। मुक्तिसाधनविचारे एवेत्यर्थः। भक्तिरपि सगुणा, ज्ञानमपि सगुणमिति। गुणशब्देनोपाधिस्तत्सहितमित्यर्थः। उभयं चेति। जारत्वमुपाधिः, नतु

---

१२- हे मुनि तेओए कृष्णने परकान्त जाण्या, नहि के ब्रह्मताथी, तो आवा गुणबुद्धिवाळाओनो गुणप्रवाहनो उपरम-नाश-केम थयो?

कान्तं परं विदुः । कान्तः पतिर्जारो वा, न तु ब्रह्मतया विदुः । मुन इति सम्बोधनमत्र निर्णयपरिज्ञानार्थम् । विरोधस्तु स्पष्टः । तासां भगवति स्वस्मिंश्च गुणबुद्धिरेव । गुणबुद्धिश्च गुणप्रवाहस्य मूलम्, अन्यथा गुणबुद्धिनिवारकाणि सर्वाण्येव शास्त्राणि व्यर्थानि भवेयुः । वैदिकपक्षस्त्वसंभावित एव ! अतो गुणधियां गुणबुद्धियुक्तानां गुणप्रवाहोपरमः कथम् १२

तत्रोत्तरमाह उक्तमिति चतुर्भिः ।

श्रीशुक उवाच—**उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः ।**
**द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥**
**नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।**
**अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥ १४ ॥**
**कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा ।**
**नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥**
**न चैवं विस्मयः कार्यो भवता भगवत्यजे ।**
**योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥**

एतत्सप्तमस्कन्ध एवोक्तं शिशुपालमुक्तौ । यथा शास्त्रद्वयं भक्तिज्ञानप्रतिपादकं साधनम्, तथा भगवत्स्वरूपमपि । भगवान् हि मुक्तिदानार्थमेवावतीर्णः । सच्चिदानन्दरूपेण प्रकटः । अतो यः कश्चन येनकेनाप्युपायेन भगवति सम्बन्धं प्राप्नोति, स एव मुच्यते । ज्ञानभक्त्योस्तु आविर्भावार्थमुपयोगः । आविर्भावश्चेदन्यथा सिद्धः, तदा न ज्ञानभक्त्योरुपयोगः । अत्र तु भगवान् स्वत एवाविर्भूतः, मुक्तिदानार्थं सर्वसाधारण्येन, ईश्वरेच्छाया

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

भर्तृत्वादिकं धर्मरक्षकत्वादिकं वा । अतो भक्तिर्ज्ञानमुभयमपि तामसमित्यर्थः । ननु ब्रह्मणः सर्वरूपत्वात्तथा बुद्धावप्यज्ञानान्यथाज्ञानाभावपूर्वकं ब्रह्मज्ञानं सिद्धमेव । अत एव 'सर्वेपामात्मजो ह्यात्मे'त्यादिवाक्यानीत्याशङ्क्य, साङ्ख्योक्तस्यात्मानात्मविवेकस्यैवाभावे 'एतस्मादात्मन आकाशः सम्भूत' इत्यारम्य 'स य एवं नि'दित्यन्तेन विवृतम् । सर्वात्मत्वेन ब्रह्मवित्त्वं तु सम्भावयितुमेव न शक्यमित्याशयेन राज्ञा साङ्ख्यपक्षः पृष्ट इत्याशयेनाहुः वैदिकेति । ब्रह्मवित्त्वे परप्राप्तिपक्ष इत्यर्थः ॥ १२ ॥

---

१३-१४-१५-१६ पूर्वे तने कह्युं छे के हृषीकेशनो इन्द्रियना ईश भगवानूनो द्वेष करतो पण चैद्य, शिशुपाळ, जेम सिद्धि पाम्यो, तो पछी अधोक्षजप्रियाओ, हरिप्रियाओ सिद्धि पामे तेमां शुं आश्चर्य ? हे नृप, अव्यय अप्रमेय निर्गुण गुणात्मा भगवानूनुं प्राकट्य नरोना आत्यन्तिक श्रेयने माटे छे. काम क्रोध भय स्नेह ऐक्य अथवा सौहृद नित्य हरिमां विधारण करनारा तेओ तन्मयता प्राप्त करेछे. जेनाथी आ मुक्त थायछे ते अज योगेश्वरना ईश्वर कृष्णमां आपे विस्मय आम न करवो.

यत्पत्यपत्यसुहृदामनुवृत्तिरङ्ग
स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ।
अस्त्वेवमेतदुपदेशपदे त्वयीशो
प्रेष्ठो भवाँस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ॥

यदपि भगवतोक्तं 'स्त्रीणां स्वधर्मपरित्यागोऽनुचित' इति, अतः 'एषा रजनी घोररूपा, नेह स्त्रीभिः स्थेय'मिति । तत्राप्याहुः यत्पत्यपत्येति । पतिरपत्यानि सुहृदश्च । एषामनुवृत्तिः स्त्रीणां स्वधर्म इति धर्मविदा त्वया उक्तम् । बहिर्मुखा हि धर्मशास्त्रज्ञाः, शारीरमेव धर्मं स्वधर्ममाहुः । नत्वात्मधर्मं भगवद्धर्मं वा । यतस्ते अनात्मविदः । तथा धर्मविदेव त्वया, नत्वस्मान् विचार्य, आत्मानं वा, त्वयोक्तम् । तस्याप्यस्माभिर्विषयनिर्धारः क्रियते, न तु दूष्यते । तदाहुः अस्त्वेवमेतदिति । स्त्रीभिः स्वधर्मः कर्तव्य इति यदुक्तम्, तदेवमेवास्तु । नहि पत्यादयः धर्मस्वरूपम्, नाप्याधारः, किन्तु निमित्तम् । स च धर्मः अनुष्ठीयमानः प्रमीयमाणश्च भवति । अनुष्ठीयमाने पुत्रादयो निमित्तम् । प्रमीयमाणे गुरुः । अतः सा अनुवृत्तिः प्रथमतो गुरावस्तु, अन्यथा स्वधर्मो ज्ञात एव न स्यात् । न च भगवद्वाक्यमनुवादकम् । पूर्वमस्माकं धर्मज्ञानाभावात् । अन्यथा तदेव क्रियेत । नापि सेवाव्यतिरेकेणायं धर्मः स्फुरति । अन्यथा वचनमात्रेणैव गत स्यात् । अत उपदिष्टस्य सिद्ध्यर्थं सेवां कारय । उपदेशस्य पदमाश्रयः कर्तैव भवति । अङ्गेति कोमलसम्बोधनात् नास्माभिः प्रतिकूलतया निरूप्यते । किञ्च, स्वधर्मा अनेकविधाः, स्वापेक्षयोत्कृष्टविषयाः, समानविषयाः, हीनविषयाश्च । तत्र पूर्वपूर्वधर्मप्राबल्यम् । यथा स्त्रीणां पतिपुत्रादीनां स्वसमानानां सेवा धर्मः । एवं स्वनियामकस्येश्वरस्यापि अनुवृत्तिर्मुख्यो धर्मः । अन्यथा तत्प्रेरणाभावे पतिसेवादौ न प्रवर्तेत । अतः प्रकृतेऽपि भवानीश्वरः अन्तर्यामी । तादृशोऽपि भूत्वा पतिपुत्राद्यर्थं न प्रवर्तयसे, किन्तु स्वसेवार्थमेव प्रेरयसि, अतो वाक्योक्तधर्मसिद्ध्यर्थमपि भवानादौ सेव्यः । किञ्च, धर्मो धर्मिमूलः, तदविरोधेन कर्तव्यः, फलार्थं च

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख ।

यत्पत्यपत्येत्यत्र । नत्वस्मानिति । एताः स्वरूपसम्बन्धिन्यो, न धर्मसम्बन्धिन्य इत्यस्मत्स्वरूपं विचार्य, पुरुषोत्तमप्राकट्यं भजनसम्पादनार्थमेवेत्यात्मस्वरूपं वा विचार्य, नोक्तमित्यर्थः । स्वनियामकस्येति । अन्तर्यामिण इत्यर्थः । प्रकृतेपीति । बहिः प्राकट्येपि भवानीशोन्तर्याम्येवेत्यर्थः । अत इति । यतो न प्रेरयसि, अतो ज्ञायते सेवया प्रसन्नः प्रेरयिष्यसीति । तदा वाक्योक्तधर्मसिद्धिर्भविष्यतीत्यर्थः । धर्ममूलत्वादपि त्वदनुवृत्तिः कर्तव्येत्याहुः किञ्चेति । धर्मिमूल इति । धर्मकर्ता धर्मी, तन्मूल इत्यर्थः । तदविरोधेनेति । कर्तुः स्वरूपाविरोधेनेत्यर्थः । फलार्थं चेति । कर्त्रा स्वस्मिन् फलसम्पादनार्थमित्यर्थः ।

३२ हे भगवन्, धर्मवेत्ता आपे आज्ञा करीके पति, पुत्रो, मित्रोनी अनुवृत्ति सेवा करवी ए स्त्रीओनो स्वधर्म छे, तो आपज देहवाळाना प्रेष्ठ, बन्धु, आत्मा, सर्वरूप छो, तेथी आपतो उपदेशना आश्रयरूप ईश्वर छो, तेथी ए आपने विषेज थाओ.

कर्तव्यः, अन्यथा चेत्, अनिष्टेऽपि पुरुषं प्रवर्तयन् अनाप्तः स्यात् । अत एव धर्मशास्त्रे प्रियत्वात् शरीरस्य तदनुरोध उक्तः । 'द्रव्यसंस्कारविरोधे द्रव्यं बलीय' इति न्यायाच्च । तत्कस्यचित् प्रियो देहः, कस्यचिदात्मा, कस्यचित् परमात्मा, कस्यचिन्निर्वाहकः । भवाँस्तु सर्वरूपो भवति, यतः अत्यन्तं प्रेष्ठः परमप्रेमास्पदमानन्दः । बन्धुर्देहनिर्वाहकश्च । किञ्च, न केवलमस्माकम्, किन्तु तनुभृतां सर्वेषामेव देहधारिणाम् । ('भवाय' नाशाये'त्यत्र त्वया दत्तमेव शरीरं त्वद्विचारितप्रयोजनार्थं जीवो गृहीत्वा तिष्ठतीति निरूपितम् । अतः स देहः भगवदीयः भगवतैव स्थापितः, तस्मै निवेद्य, तदनुपयोगे जाते, पश्चादन्यस्मै देयः । चेतनो हि प्रेर्यः । अतः यावद्भगवदुपयोगं ज्ञास्यति, तावन्नान्यस्मै दास्यति, बोधितोऽपि ।) यतस्तनुभृतां त्वमेव प्रेष्ठः । प्रेष्ठाय च देयं प्रियं वस्तु । अत्रार्थे किलेति प्रसिद्धिरेव प्रमाणम् । किञ्च, न केवलं देहदाता, किन्तु बन्धुरपि, येन प्रयत्नेन शरीरं बिभर्ति स बन्धुः, आत्मा धारकश्च । अतः अन्तरङ्गबहिरङ्गन्यायेन नित्यानित्यन्यायेन वा भ(ग)वत्स्वैव मुख्या । यदा पुनस्त्वदनुपयोगः, तत्रापि चेत्तथा प्रेरणम्, तदान्यस्मै दास्यामो, नान्यथेति । धर्मिविचारो धर्मादप्यधिकः । एतच्च त्वदनङ्गीकृतं सर्वमेव विरुद्धं

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अविरोधः फलसम्पादनं च कर्तुरेवेति चकारः । अनिष्टे इति । अफले इत्यर्थः । तथा धर्मबोधको वेदो नाप्तः स्यादित्यर्थः । अत एवेति । धर्म्यविरोधेन कर्तव्यत्वादित्यर्थः । शरीरस्यानात्मत्वात्तदनुरोधः कुत उक्त इत्यत आहुः प्रियत्वादिति । प्रीत्या तत्रात्मत्वमेव स्वीकृतमित्यर्थः । तथा च प्रियस्य धर्मित्वं सिद्धमिति भावः । धर्मस्य धर्मिमूलत्वे न्यायमप्याहुः द्रव्येति । संस्कारो धर्मो, द्रव्यं धर्मि, तद्बलिष्ठमित्यर्थः । तदिति । शरीरानुरोधकथनेन प्रियाविरोधपूर्वकं प्रिये फलसम्पादनार्थं च कर्तव्यतायां सिद्धायामित्यर्थः । देह आत्मा परमात्मा निर्वाहकश्चेति चतुष्टयमुक्तम् । एतच्चतुष्टयरूपत्वं भगवत आहुः परमेति । आद्येन देहरूपत्वमुक्तम् । आनन्दपदेनात्मत्वमुक्तम् । आनन्दस्यैव बीजत्वेन सर्वात्मत्वादिति भावः । बन्धुपदेन परमात्मोक्तः । अन्तर्यामिणो जीवसखत्वादिति भावः । चतुर्थस्तु स्पष्ट एव । प्रेष्ठपदेनैतावद्रूपत्वकथनेन धर्मित्वं सम्पादितम् । तथा च धर्ममूलत्वादपि त्वदनुवृत्तिः कर्तव्येत्यर्थः । तनुभृतामित्यनेन स्वमात्रसम्बन्ध्यपेक्षया सर्वसम्बन्धिनो मुख्यत्वादपि त्वमेव सेव्य इति किञ्चेत्यनेनोक्तम् । किलपदसूचितां युक्तिमाहुः चेतनो हीति । प्रेरणं चेतनस्यैव सम्भवतीति हिशब्दः । चेतनस्तु प्रियं वस्तु प्रेष्ठायैव दास्यतीति भावः । अत्रार्थे इति । चेतनो हीत्यारभ्योक्तेर्थे इत्यर्थः । येन प्रयत्नेनेति । येन पुरुषेण हेतुना यदर्थमित्यर्थः । प्रयत्नेन करणेनेत्यर्थः । तादृशो बन्धुः, आत्मा धारकश्च, त्वमेवेति शेषः । अत्र न्यायमाहुः अन्तरङ्गेति । शरीरभरणहेतुभूतः शरीरधारकश्चान्तरङ्गो नित्यश्च । शरीरसम्बन्धिनो बहिरङ्गा अनित्याश्चेति बहिरङ्गादन्तरङ्गस्यानित्या-

१. ( ) चिह्नान्तर्गतं प्रभूणा स्यादिति । २. स्थापितमिति पाठः ।

भवतीति प्रार्थ्यते अस्त्विति । सर्वरूपत्वात् त्वमेव सेव्य इति वा । अन्यत्र एकदा सर्वसेवा प्राप्ता, अंशतो बाधिता स्यात्, विनिगमनाभावाच्च । अनेन स धर्मोऽपि न भवति, यः कालादिना बाध्यते, अशक्यश्च भवति । न हि प्रमाणं विरुद्धं विधत्ते । अतः पत्यादिसेवाविधायकं च शास्त्रं त्वत्सेवामेव विधत्ते । अतः अनुवादपक्षे स्वतन्त्रविधानपक्षे वा भवत्सेवैवोचितेति भावः ॥ ३२ ॥

एवं राजसीनां निरूप्य सात्त्विकीनां निरूपयति कुर्वन्ति हीति ।

**कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्**
**नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ।**
**तन्नः प्रसीद वरदेश्वर मा स्म छिन्द्या**
**आशां धृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥**

यद्यप्युक्तं 'मातरः पितर' इति, 'मा कृढ्वं बन्धुसाध्वस'मिति, तत्किमिदं प्रथमतयास्माभिरेव क्रियते, आहोस्विदन्येऽपि कुर्वन्ति । तत्रापि किमधमाः मात्राद्यनुवृत्तिं कुर्वन्ति, आहोस्विदुत्तमाः । उत्तमा अपि त्वत्सेवायामशक्ताः, आहोस्वित् शक्ता इति विचारणीयम् । अस्मिन्नर्थे निर्णायकं महतां चरित्रमाहुः । ये स्वात्मनि कुशलाः आत्महितार्थिनः, न तु देहेन्द्रियाणाम्, ते त्वय्येव रतिं कुर्वन्ति । स्नेहेन हि क्रिया भवति । भगवत्कृतमेव

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नित्यस्य वा बलवत्त्वाद्भगवत्सेवैव मुख्येत्यर्थः । सर्वरूपत्वादिति । त्वत्सेवाया इति शेषः । प्रथमपक्षे न्यायद्वयेन भगवत्सेवायाः प्रबलत्वमुक्तम् । अत्र तद्रूपत्वमुच्यत इति विशेषः । प्रेष्ठत्वबन्धुत्वात्मत्वकथने पतिसुहृदपत्यरूपत्वं क्रमेणोक्तम् । अतः पत्यादीति । चकाराद्भगवत्सेवाविधायकमपि । तथा च सर्व त्वत्सेवामेव विधत्ते, अन्यसेवां तु रागतः प्राप्तामनुवदतीत्यर्थः । अत इति । उभयसेवाविधानेपि पत्यादिसेवाया अंशतोबाधितत्वाद्रागतः प्राप्ता सानूद्यते, भगवत्सेवैव विधीयते इति पक्षे विहितत्वात्त्वं सेव्यः । स्वतन्त्रतया पतिसेवापि विधीयत इति पूर्वव्याख्यानपक्षे धर्मप्रमादिप्रयोजनार्थं त्वं सेव्य इत्यर्थः ।

राजसीनामिति । वाक्यमुभयत्रापि शेषः । कुर्वन्ति हीत्यत्र । आत्मनि कुशला इति कथनात् स्वार्थं पूजां कुर्वाणाः पूजामार्गीया अत्रोच्यन्ते । तेषां रतिकरणे हेतुमाहुः स्नेहेन हीति । आत्महितार्थं भगवद्विषयिणी क्रिया आवश्यकी । सा तु रतिं विना न सम्भवतीति रतिं कुर्वन्तीत्यर्थः । तर्हि स्नेहक्रिययोः

३३ माटे ज चतुर लोको आप नित्यप्रिय पोताना आत्मरूपने विषे प्रीति करेछे. दुःखदेवावाला पति पुत्रादिथी तेमने शुं ? माटे हे वरदान देनाराओना ईश्वर ! अमारा पर प्रसन्न थाओ, अने हे कमलनयन ! आपने विषे घणा समयनी राखेली अमारी आशाने छेदो नहि

१. विनिगमनाभावादिति पाठः ।

जीवगामि भवतीति । तदुपपादितम्, 'तच्चात्मने प्रतिमुखस्थे'त्यत्र । प्रीत्या च सेवा भवति । यदि पुत्रादिसेवापि धर्मः स्यात्, तदा पुरुषार्थत्वेनात्मपर्यवसायिनी स्यात् । 'कुशला' इत्यनेन तेषां कौशलमेतत्, प्रवृत्त्यपेक्षया निवृत्तिरुत्तमा । इन्द्रियदमनसामर्थ्याभाव एव अन्यगामि कर्तव्यम्, 'यतो यतो निवर्तते'त्यत्र निरूपितम् । निरुद्धानीन्द्रियाण्यात्मगामीनि भवन्ति । तत्राप्यात्मगामीनि तदैव भवन्ति, यदि त्वदर्थमुपयुक्तानि भवन्ति । अतः केवलनिग्रहकर्त्रपेक्षया ये त्वयि रतिं कुर्वन्ति, ते कुशला इति हिशब्दार्थः । त्वयीत्येकवचनेन च पूर्ववदेकत्र सर्वसंभवो निरूपितः । किञ्च, भवान् स्वात्मा स्वरूपभूतः, नत्वध्यासन्यायेन तथा जातः । किञ्च, प्रियस्य हि सेवा कर्तव्या, स चेत्प्रियः कालपरिच्छेद्यो न भवति, स भवानेव, अन्यथा जारसेवापि धर्मः स्यात्, जन्मवत् दिनस्यापि परिच्छेदकत्वात् । किञ्च, पतिसुतादयश्च न धर्महेतवो भवितुमर्हन्ति । यतः आर्तिदाः । न हि धर्मनिमित्तानि कदाचित् दुःखदानि भवन्ति । अन्यथा संसारो न स्यात् । अतस्तैः किम् । तेषां भयमस्तु, अन्यद्वा, न तैः किञ्चित्प्रयोजनमित्यर्थः । परमेकमेव प्रार्थनीयम्, यदभावे सर्वं शास्त्रं युक्तिश्च व्यर्था स्यात् । तदाहुः, तत्तस्मात् प्रसीद, त्वं प्रसन्नो भव । त्वदप्रसादादेव लोका भ्रान्ताः दुःखहेतुष्वपि प्रवर्तन्ते । ननु किं साधनं प्रसादे भवतीनामिति चेत्, तत्राहुः वरदेश्वरेति । ये हि वरान् प्रयच्छन्ति, ते लोकानां क्लेशं ज्ञात्वा, यतो दयालवः, अन्यथा तपसि क्रियमाणे वरं न प्रयच्छेयुः । तेषामपि त्वमीश्वरोऽतिदयालुः । तद्द्वारापि सर्वेषां दुःखशमनं करोषि । अतो वयं क्लिष्टाः । क्लेश एव साधनम्, तपोवत् । निषिद्धप्रकारस्तु यद्यत्र कश्चन भविष्यति, स न कर्तव्यः । ननु यथैतावन्तं कालं पतिसेवा कृता, एवमेवाग्रेऽपि कर्तव्या, प्राप्तत्वात् । गौणमपि कर्म समारब्धं समापयेदिति, तस्मादविचार्यैव पतिसेवां कुरुतेति चेत्, तत्राहुः मास्म छिन्द्या आशां धृतामिति । नास्माभिः पतिसेवा कृता, तदर्थं वा स्थितम्, त्वदाशया स्थितम्, मध्ये स्थितिनिर्वाहार्थमेव तदङ्गीकारः । इदानीं चेत् समागतानामभिलषितार्थो न सिध्येत्, तदा आशा भग्ना भविष्यति । तस्यां गतायां प्राणा एव गमिष्यन्तीति । अत एव

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

समानविषयकत्वनियमाद्भगवद्विषयक एव स्नेहः सिध्येत्, नात्मविषयक इत्याशङ्क्य, औत्सर्गिकत्वं टिप्पण्यां विवृतम् । भगवत्यौपाधिको, मुख्यस्त्वात्मन्येव स्नेह इति भावः । ननु भगवत्सेवाया इव पुत्रादिसेवाया अपि प्रमाणबोधितत्वादात्महितार्थं सापि भवेदित्यत आहुः प्रीत्या चेति । पुत्रादिषु सेवामात्रं विहितम् । न तु प्रीतिः । तया विना च सा न भवतीत्यर्थः । तर्हि प्रीतिराक्षेपलभ्या स्यादित्याशङ्क्य तस्य धर्मत्वमपि नास्तीत्याहुः यदीति । अतस्तत्र न चोदना, किन्तु रागतः प्राप्ताया अनुवाद इति भावः । अन्यगामीति । इन्द्रियं पत्यादिगामि कर्तव्यमित्यर्थः । अध्यासन्यायेनेति । देहेन्द्रि-

केनचित् स्त्रीहृदयज्ञेन निरूपितम्, 'आशाबन्धो हृदयं रुणद्धी'ति । एतस्य मूलमपि स्त्रीशास्त्रे भविष्यति । चिरात् त्वय्येव धृताम्, तस्यां छिन्नायां अवलम्बनाभावात् अधः पतिष्याम इति । सेत्ययमर्थः प्रसिद्धः । अरविन्दनेत्रेति सम्बोधनं दृष्ट्यैवाप्यायकत्वं निरूपयति । (आशाहेतुरप्यनेनोक्तः, तापहारकदृष्ट्या दर्शनात् । भावोद्धारिण्या एव तथात्वात् । इयदवधि जीवनमप्यत एवेति भावः ।) ॥ ३३ ॥

यदुक्तं 'वनदर्शनार्थं किमागता' इति, ततश्च वनवर्णना कृता, तत्राहुः **चित्तं सुखेनेति** ।

> **चित्तं सुखेन भवतापहृतं गृहेषु**
> **यन्निर्विशत्युत करावपि गृह्यकृत्ये ।**
> **पादौ पदं न चलतस्तव पादमूला-**
> **द्यामः कथं व्रजमथो करवाम किं वा ॥ ३४ ॥**

वनदर्शनेच्छा तदा भवति, यदा चित्तं स्वस्मिन् तिष्ठेत् । तत्तु त्वयैवापहृतम्, तत्रापहारे न तव प्रयासः, तथा सति सर्वं नापहृतं स्यात्, तदाह सुखेनेति । भवता वा आनन्दरूपेणापहृतम् । न हि साक्षात् परमानन्दे सति कश्चित् परम्परया पाक्षिकं साधनं गृह्णाति । वनदर्शनं दूरे, गृहेऽपि यच्चित्तं निर्विशति । अनेन ज्ञानशक्तेरपहार उक्तः । नापि मन्तव्यं वनं किञ्चित् कार्यार्थमागता इति । तदर्थं क्रियाशक्तेरप्यपहारमाह **उत करावपीति** । यौ गृह्यकृत्ये निर्विशतः, दूरेणापास्तं वनकृत्यम्, कामेन चलस्य हृतत्वात् । त्वत्स्पर्शेनैव करौ सजीवौ भवतः । नो चेन्मृतौ । अतः सेवाविधिरपि हस्ताभावात् कुण्ठितः । न हि कररहितं कर्मणि कश्चिन्नियुंक्ते । किञ्च, यत् व्याघुट्य गन्तव्यमित्यभिप्रायेण वनदर्शनं जातमित्युक्तम्, तदप्यसम्भावितम् । यतोऽस्माकं पादौ द्वावपि तव पादमूलादस्मात् स्थानात् एकमपि पदं न चलतः, नान्यत्र गच्छतः । पादानां गतिमुक्तानां मूलभूतौ त्वत्पादौ, तस्यापि चेन्मूलं गताः, तदा कथमन्यत्र गच्छेयुः, अन्यथा वृक्षाणामपि गतिः स्यात्, मूलं गतानाम् । 'अस्मात् स्थाना'दिति वक्तव्ये, यत्'तव पादमू-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

यादीनामात्मत्वन्यायेनेत्यर्थः । स्व आत्मन्नित्यस्यावृत्तिः ।

चित्तमित्यत्र । पादानामिति । पादौ गोलकं गतिरिन्द्रियमिति । सेन्द्रियाणां गोलकानां आधिदैविकौ विष्णुरूपौ त्वत्पादावित्यर्थः । अस्मदाधिदैविकानां भगवद्गोलक-

३४ तमे आनन्दरूप एवा आपे गृहमां जे चित्त लागतुं होय ते चोरी लीधुं छे, अने अमारा हाथ पण गृहकृत्यमां लागता नथी, अने आपना चरणना मूळथी एक डगलुं पण अमारा पग चालता नथी, तो व्रजमां केम करी जइए? अने जइने पण शुं करीए?

१. ( ) चिह्नान्तर्गतं प्रक्षिप्तम् ।

ला'दित्युक्तम्, तत् त्वद्गमनेन सर्वत्र गन्तुं शक्यते, न तु त्वद्व्यतिरेकेणेति ज्ञापितम् । अतः कथं यामः । शकटादिना प्रेषणीया इति चेत्, तत्राहुः । अथो अथ तत्र गत्वा किं वा करवाम । यथा शकटादिकं गृहे यातनार्थं साधनमस्ति, न चैवं हस्तयोः कार्यकरणे किञ्चित् लोकसिद्धम् । न केवलं गमनेन प्रयोजनम्, किन्तु पित्रादिसेवार्थं गमनम्, तदभावाद् व्यर्थमेव गमनमिति भावः । तदाहुः । अथो अथ किं वा करवामेति । हस्तनिरपेक्षा कृतिः भिन्नप्रक्रमेण भगवद्भावेन भवतीति तथोक्तम् । अनेन स्तनपानमप्यशक्यं निरूपितम् । आशाऽभावे सर्वत्रैव शोषात् ॥ ३४ ॥

यद्भगवता शीघ्रं गच्छतेत्युक्तम्, तत्राहुः सिञ्चाङ्गेति ।

**सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण**
**हासावलोककलगीतजहृच्छयाग्निम् ।**
**नो चेद्वयं विरहजाग्न्युपयुक्तदेहा**
**ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥**

वयं शीघ्रमेव गमिष्यामः, यदि त्वं प्रतिबन्धं न करिष्यसि । अनेन तूष्णींभावेऽपि मरणम्, परावृत्तौ तु न किञ्चिद्वक्तव्यम् । हे अङ्ग ! त्वदधरामृतपूरकेण त्वदधरामृतप्रवाहजलेन नो हृच्छयाग्निं सिञ्च । स चाग्निः त्वयैवोत्पादित इति । तत्कारणमाहुः **हासावलोककलगीतजेति** । तव योऽयं हासपूर्वकः अवलोकः कलगीतं च, ताभ्यां जातो यो हृच्छयः कामः, स एवाग्निः । हासः कामजनकः, अवलोकः सन्धुक्षणकर्ता । गीतं वायुरिव, तत्रापि कलगीतं सर्वतो वायुः । सोऽपि जातो हृदये । हृदयगामि च त्वदधरामृतमेव । पूरो हि वस्तु प्रवाहयति, तस्मात्र सिञ्चनकरणत्वेनोक्त्याऽग्नेरतिमहत्त्वं ध्वन्यते । अतो युक्ता सिञ्चनोक्तिः । अलौकिकश्चाग्निः अलौकिकेनैव शाम्यति । कन्दर्पो हि मृतो ज्वलति, स हि जीवन्

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्वात् । ननु कराभावेऽत्रापि स्थित्वा किं कर्तव्यमित्यत आहुः हस्तेति । अत्रत्यकृतिस्तु हस्तनिरपेक्षा इन्द्रियजन्या न भवतीत्यर्थः । तत्र हेतुः **भगवद्भावेनेति** । भगवदावेशेन भवतीत्यर्थः । सा भिन्नप्रक्रमेण कृतिस्तत्र न सम्भवति । अतस्तत्र गत्वा किं करवामेत्यथो इत्यस्यार्थ उक्तः ।

सिञ्चाङ्गेत्यत्र । विधेर्बलवदनिष्टाननुबन्धित्वात्तदनिष्टमुत्तरार्धोक्तं विवृण्वन्ति अनेनेति । अधरामृतपूरस्य कं जलं तेनेति विग्रहमभिप्रेत्याहुः प्रवाहजलेनेति । त्वदधरामृतमेवेति । देवभोग्यममृतं नास्मद्धृदयगामि भवतीत्येवकारः ।

---

३५ हे सखा ! आपना अधरामृतना पूरथी अमारा आपना हास्यपूर्वक अवलोकनथी अने अव्यक्त मधुरगीतथी उत्पन्न थएला विरहाग्निनुं सिंचन करो. जो आप एम नहि करो तो विरहथी उत्पन्न थएला अग्निथी उपभुक्त थएला देहवाला अमे ध्यान वडे आपश्रीना चरणनी पदवीने पामीशुं.

अन्यवस्थां त्यजति, नान्यथा, अमृतेनैव च जीवति, तत्रापि न देवभोग्येन, अन्यथा तैरेव जीवितः स्यात् । सृष्टिकारणत्वात् नास्य मोक्षः । अतोऽतिगुप्तेनैवाधरामृतेन तस्य जीवनम् । अतः सिञ्चनमेवोक्तम् । अन्यथा निर्वापणमेव प्रार्थयेयुः । कामे जीवति जीविष्यामः, अन्यथा स स्वयं ज्वलन् अन्यानपि ज्वालयिष्यति । तदाहुः नो चेदिति । सिञ्चनेन यदि मन्त्रवादीव न जीवयिष्यसि, तदा विरहेण जनितो योऽग्निः, तेनोपभुक्तदेहाः ध्यानेन ते पदयोः पदवीं यामः । स्वयं स्वतन्त्रमार्गाज्ञानात्, त्वं च सखा येन मार्गेण गमिष्यसि, तेनैव वयमपि यास्यामः । (यथा त्वमधुनास्मभ्यमार्तिप्रदः, तथा वयमपि तथाभूतास्तुभ्यं पश्चात्तापादिहेतवो भविष्याम इति गूढाभिसन्धिः'ते पदयोः पदवीं यामे'ति वक्रीणामिति ज्ञेयम् ।) देहे गते त्वन्तर्यामिणा क्वचिद्गन्तव्यम्, देहान्तरस्य तु नोत्पत्तिः, बीजस्य दग्धत्वात् । हरेणैव दग्धो न कामः प्ररोहति, स विपरीतो रहो भवति । तत्रापि विशिष्टो विरहः एकान्ताभावरूपो वा । अनेन त्वया सह एकान्ताभावे विरहत्वम् । यद्यपि पूर्वोक्ताग्निनैव दाहः सम्भवति, तथापि भस्मसात् करणे न तस्य सामर्थ्यम्, यावत् सर्वाङ्गेषु सूक्ष्मावयवेष्वप्यग्निः प्रविश्य नोद्बुद्धो भवति । यथा वह्निसम्बन्धेन शुष्कं काष्ठं ज्वलति । तत उपाधेरत्यन्तं गतत्वात् ते पदयोर्गमनम् । अतो गमनं दूरापास्तम्, प्रत्युत मरणमुपस्थितमिति शीघ्रं प्रतीकारं कुरु ॥ ३५ ॥

किञ्च, यदप्युक्तं 'अथवा मदभिस्नेहात् आगता'इति, यदस्माकं स्नेहः स्तुतः, तत्र याथार्थ्यं शृण्वित्याहुः यर्हीति ।

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
 दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत् प्रभृति नान्यसमक्षमङ्गः
 स्थातुं त्वयाभिरमिता बत पारयामः ॥ ३६ ॥

हे अम्बुजाक्ष, दृष्टैव तापनाशक, यर्हि यस्मिन् क्षणे तव पादतलं अस्प्राक्ष्म,

श्रीविट्ठलेश्वरप्रभुचरणविरचितः टिप्पणी ।

ज्वलतीति । विरहजत्वादुज्ज्वलत्वं विहायाग्निरूप एव सन्नित्यर्थः । पदयोः पदवीं विवृण्वन्ति देहे इति । यत्रान्तर्यामिणा गन्तव्यम्, सा भगवत्पदवीत्यर्थः । बीजस्येति । वासनादेहस्य विरहजाग्न्युपभुक्तत्वादित्यर्थः । दग्धपदं विहायोपभुक्तेति कथनेन वासनात्मकस्यापि दाहः सूचित इति भावः ।

३६ हे कमलनयन! वनमां विचरनार जन उपर प्रीति राखनार आपनुं पादतल के जेनी सेवा लक्ष्मीजीने कोईकज वखत मळे छे, तेने ज्यारथी अमे स्पर्श कर्यो छे, त्यारथी आनन्द पाम्या छीए, त्यारथी अमे अन्यनी समक्ष उभा रही शकता नथी. १. ( ) चिह्नान्तर्गतं प्रक्षिप्तम् ।

तत्प्रभृति नान्यसमक्षं अज्ञः सामस्त्येनापि स्थातुं पारयामः । साक्षात् चरणस्पर्शो दुर्लभः । यत्र पुनः पादः प्रतिफलितः, तत्पादतलमुच्यते । रमापि तेनैव जीवति । तदुक्तं नागपत्नीभिः । 'तवांघ्रिरेणुस्पर्शाधिकारः यद्वाञ्छये'ति । अतस्तत् फलस्थानीयम् । रमायाः क्षणं सुखं तेनैव दत्तम्, क्वचिद् हृदये समागतम्, सुखं तत्रैव भवतीति तत्र स्पर्श एवास्माकं भूमिष्ठस्य, न तु लक्ष्मीवत् हृदये तत्तलमायाति । अस्माभिर्विचारितम्, लक्ष्म्या चेदेतत्प्राप्तम्, तपसा चाञ्चल्यपरिहारेण, तदास्माभिरपि चाञ्चल्यपरिहारेण तन्निष्ठतया स्थातव्यम् । किञ्च, अरण्यजनाः प्रियाः यस्य । तेनापि सर्वसङ्गपरित्यागेन स्थातव्यम् । सङ्गाभाव एव भगवत्तोषहेतुरिति । अरण्यं हि सात्त्विकं वैष्णवं च । (एतेन पुलिन्दीस्मारणं वा । पादतलसम्बन्धिकुङ्कुमसम्बन्धेनैव ता अपि प्रिया आसन्निति । तेन पादतलस्य फलपर्यवसायित्वं प्रभुप्रीतिसाधकत्वं च सहजमिति वयमप्यात्मनि तथैव जानीम इति भावः । स्फुटमिदं न वक्तुं शक्यमित्येवमुक्तम् ।) अतः त्वत्प्राप्त्यर्थं नान्यसमक्षं स्थातुं शक्नुमः । सर्वथा त्वां यो न प्रपन्नः, शक्त्यभावः तद्धर्मप्रवेशात्, यो हि यस्य घातकः तद्भावापत्तौ तस्याग्रे स्थातुं न शक्तो भवति । यथा व्याघ्राग्रे देहाभिमानी, तथा भगवदीयः, भगवद्व्यतिरिक्तो हि तद्भावं नाशयिष्यतीति । यत्रैवं सूक्ष्मेक्षिका, तत्रान्यस्य स्थाने गमनं, तस्य च देवतात्वेन भावनं दूरापास्तम् । अतः

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

यर्ह्यात्यत्र । तेनैवेति । स्वहृदये प्रतिफलितेन पादेनेत्यर्थः । यद्वाञ्छयेतीति । हृदि पादस्थापनेऽङ्घ्रिरेणुस्पर्शो भवतीति भावः । तदिति पादतलमित्यर्थः । तत्तलमिति । अस्मद्धृदये पादप्रतिफलनं न जायते इत्यर्थः । गाढभावेन स्थापने तथा भवतीति भावः । तपसेति । 'कामत्यागस्तपः स्मृत' मिति वाक्यसिद्धेनेत्यर्थः । 'विहाय कामा'निति 'धृतव्रते'ति च कथनादिति भावः । तन्निष्ठतयेति । कामत्यागेनेत्यर्थः । एतेनेति । अरण्यजनप्रियपदेन पुलिन्दीस्मारणम् । अरण्यजनाः पुलिन्द्यः प्रिया यस्येति पादतलस्य प्रीतिसाधकत्वे सम्मतिरुक्तेति भावः । तथैव जानीम इति । पुलिन्दीवदात्मनि भगवत्प्रियात्वं जानीम इत्यर्थः । स्फुटमिदमिति । पूर्वरमणमित्यर्थः । अत्र श्लोकद्वये लक्ष्मीपदेन ललनेति ज्ञेयम् । महानन्दरूपायास्तादृशशरीरापेक्षाभावात् । अत एव 'ललनाचरत्तप' इत्यस्य सम्मतिरुक्ता । एतत्स्वरूपं द्वितीयस्कन्धनवमाध्याये विवरणे विवृतम् । यस्येति । देहत्वस्येत्यर्थः । देहनाशे पूर्वमभिमतमात्मनो देवदत्तत्वं निवर्तते इति भावः । घातकः निवारक इत्यर्थः । तद्भावापत्ताविति । आत्मनो देहत्वापत्तावित्यर्थः । भगवदीयपक्षे यस्य भगवत्त्वस्येत्यर्थः । तद्भावापत्तौ 'जीवेन्तःकरणे चैवे'तिन्यायेन भगवानहमिति भावापत्तौ, एतादृशविगाढभावे इत्यर्थः । इदमेव टिप्पण्यां भगवद्भावप्राकट्यादित्यर्थं इत्यनेनोक्तम् । भगवद्भावो भगवत्त्वमित्यर्थः । भगवद्व्यतिरिक्त इति । भगवता व्यतिरिक्तः भेदं प्रापितः भगवन्तं न प्रपन्न इत्यर्थः ।

१. ( ) चिह्नान्तर्गतं प्रभूणाम् ।

प्रीतिमात्रस्तुतिर्या सा अल्पीयसी । अनन्यभावा एव वयं लक्ष्मीवत् । किञ्च, यथा सर्वपरित्यागेन लक्ष्मीः चेत् त्वां शरणं गता, तदा त्वया अभिरमिता जाता, तथा वयमपि जाताः । सर्वदैव स्वप्ने त्वत्सम्बन्धं प्राप्नुमः । अन्यथा जीवनमेव न स्यात् । एवं भुक्तपूर्वा वयं नान्यत्र प्रेषयितुमुचिता इति ॥ ३६ ॥

ननु तस्या दैवगत्या सम्बन्ध आसीत्, स च प्राथमिकः, भवतीनां तु प्रथमतोऽन्यत्रैव सम्बन्धः, अतो वैषम्यमिति चेत्, तत्राहुः श्रीरिति ।

**श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या**
**लब्ध्वापि वक्षसि पदं किल भृत्यजुष्टम् ।**
**यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयास-**
**स्तद्वद्वयं च तव पादरजः प्रपन्नाः ॥ ३७ ॥**

लक्ष्मीरपि न दैवगत्या भवन्तं प्राप्तवती, किन्तु त्वच्चरणारविन्दार्थं महत्तपः कृतवती । सा न स्त्रीत्वेन त्वदीया, किन्तु भक्तत्वेन, अन्यथा वक्षसि स्थलं प्राप्य स्वतन्त्रम्, तुलस्या सह सापत्न्यमप्यङ्गीकृत्य, चरणरजो न कामयेत् । चरणरजस्तुलस्या भवति, भक्ता हि भक्तेः । तदुपपादितं प्रथमस्कन्धे । तस्य रजसः माहात्म्यमाह भृत्यजुष्टमिति । तद्रजसैव भृत्यानां शरीरोत्पत्तेः । किलेति प्रसिद्धिः । सर्व एव भक्ताः त्वच्चरणरजसैव सम्पादितदेहवन्तः । अतस्तुलसी तत्र भक्तिरूपा प्रतिष्ठिता । तद्रजःप्राप्तिर्येषाम्, ते त्वत्सेवका एव भवन्ति । अतो लक्ष्मीः, अन्तःकरणे स्थानं प्राप्यापि, अन्यः स्प्रक्ष्यतीति चिन्तया, रजश्चकमे । तस्मिन् प्राप्ते तु न शङ्कापि । ननु किमेतावद्भयं लक्ष्म्याः, तत्राहुः । यस्याः स्ववीक्षणकृते अन्यसुरप्रयासः । अन्ये सर्व एव ब्रह्मादयो देवाः तपः कुर्वन्ति, 'लक्ष्मीरस्मान् पश्य'त्विति । अन्यथा तेषां कोऽपि पुरुषार्थो न सिध्येदिति । अतो बहुभिः प्रार्थ्यमाना भीता जाता । कश्चिदत्यन्तमपि तपः कुर्यात्, स, को वेद, किं कुर्यादिति । रजःकामनायां तु नैषं शङ्का । प्राप्तौ तु सन्देह एव न भवति । एवं चरणरजसः प्राप्तौ अनन्यगामित्वं

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

श्रीरित्यत्र । मूले यदिति रजसो विशेषणम् । यद्रजः श्रीश्चकमे, तद्रजः वयं च प्रपन्ना इत्यन्वयः । त्वत्सेवका एवेति । सेवां तव कुर्वन्ति । अन्यसम्बन्धस्तेषां न भवतीत्येवकारः । अतोस्माकमप्यन्यसम्बन्धो नास्तीति भावः । इदं 'क्वेमाः स्त्रिय' इति श्लोके व्युत्पादयिष्यते । नैषं शङ्केति । लक्ष्म्या अन्यस्पर्शशङ्का न भवतीत्यर्थः । तत्र हेतुः प्राप्तौ त्विति । रजःकामनायाः प्राप्तौ तु सर्वेषां सन्देह एव न भवति, विपरीतनिश्चयात् । अतस्तदर्थं यत्नं न कुर्वन्ति ।

---

३७ लक्ष्मीजीना कृपाकटाक्षमाटे अन्यदेवोना प्रयास छे, ते पण आपना वक्ष स्थलमां पद प्राप्त करीने पण सेवकोथी सेवित आपना चरणकमलनी रजनी तुलसीनी साथे स्पृहा करे छे. तेनी माफक अमे पण आपना चरणरजने प्राप्त थया छीए.

निरूप्य स्वस्य तथात्वमाहुः तद्द्वयं चेति । अस्मानपि बहवः प्रार्थयन्ति, तद्भयादेव पूर्वं चरणरजः स्पृष्टम्, ततो देहोऽपि तच्चरणरजसा समुद्भूत इति सर्वथा तव पादरजःप्रपन्नाः । चकारात् या अपि साम्प्रतं नागताः । या वा महिष्यः, ता एतादृशशरीरयुक्ता एव । अतोऽस्मदर्थ एव समागतो भवान् । नात्मानं गोपय । नापि गुप्तः स्थास्यसि । तस्मान्नाग्रहः कर्तव्य इति भावः ॥ ३७ ॥

एवं स्वस्य भगवदेकभोग्यशरीरत्वमुपपाद्य प्रार्थयन्ति तन्न इति ।

**तन्नः प्रसीद वृजिनार्दन तेऽङ्घ्रिमूलं**
**प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः ।**
**त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम-**
**तप्तात्मनां पुरुषभूषण देहि दास्यम् ॥ ३८ ॥**

पूर्वश्लोकेनैव भर्तृशुश्रूषणविधिर्निराकृतः । तदपरित्यागः सुतरामेव तेनैव निराकृतो भवति । अनेनापि निराकरणं प्रार्थयन्ति । भगवत्कृपाभावे तादृशेनैव सम्बन्धो भवेदिति, कृपा हि सर्वतोऽधिका, तत्तस्मात्कारणात् प्रसीद, प्रसन्नो भव, त्वयि प्रसन्ने सर्वं सेत्स्यतीति । ननु भवतीनां प्रतिकूलमदृष्टं दुःखप्रापकमस्ति, अतः कथं प्रसाद इति चेत्, तत्राहुः वृजिनार्दनेति । वृजिनं दुःखजनकं पापम्, स्वभावत एव सर्वेषां येन केनापि सम्बन्धेन तद-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तस्मान्न लक्ष्म्याः शङ्केत्यर्थः । सन्देह एव भवतीति पाठे सन्देह एव, तेन निश्चयाभावान्न यत्न इत्यर्थः । रजसः प्राप्ताविति । कामनायामेव तथात्वे प्राप्तौ तथात्वं कैमुत्येनैव सिद्धमिति भावः । अथवा उत्कटैककोटिका शङ्का । समकोटिकः सन्देह इति विभागः । तथाच यथाश्रुत एवार्थः । बहवः 'प्रार्थयन्तीति । श्रुतिरूपत्वाभिप्रायेणेदम् । तत्तन्मन्त्राभिमानिदेवाः स्वस्वाधिपत्यं मन्यन्ते । रजःप्राप्तौ तद्धामित्वं न भवतीत्यर्थः । श्रियाः कामनैवोक्ता । स्वस्य तु प्रपत्तिरुक्ता । अत आहुः सर्वथेति ।

तन्न इत्यत्र । कृपा हीति । सर्वेभ्यः प्रमाणेभ्योऽधिकेत्यर्थः । अन्तरङ्गधर्मत्वादाधिक्यं युक्तमिति हिशब्दः । प्रतिकूलमदृष्टमिति । लोकन्यायेनात्रापि सम्भाव्य तन्निवर्तकत्वं भगवतो बोधितम् । तथा च भगवत्स्वरूपबोधने तात्पर्यान्नातीवाग्रहः कर्तव्यः । दुःखजनकमिति । यतो भगवानेवं वदति तादृशं भजननिष्ठमन्यशेषत्वमित्यर्थः । पूर्वोक्तेनादृष्टपदेनापीदमेव ज्ञेयम् । येन केनापीति । कामादिभावेनापीत्यर्थः । एतद्भजने अन्यशेषत्वा-

---

३८ माटे हे दुःखजनक पापना नाशकरवावाला ! आप अमारा उपर प्रसन्न थाओ; गृहस्थाश्रमनो त्याग करीने आपनी सेवा करीशुं, एम आशामात्रथी आपना चरणना मूलने प्राप्त थया छीए. हे पुरुषभूषण ! आपना सुन्दर मन्दहास्ययुक्त नेत्रना कटाक्षथी उत्पन्न थएला तीव्र कामथी तप्त थएला छे अन्तःकरण जेमना एवा अमने दासत्व दान करो.

र्दयसि । प्रसादे हेतुमाहुः तेंघ्रिमूलं प्राप्ता इति । यस्तु चरणतलं प्राप्नोति, स प्रसादमपि । स च प्रसादः पशुपुत्रादिरूपो मा भवत्विति स्वाधिकारमन्येभ्यो व्यावर्तयन्ति विसृज्य वसतीरिति । गृहस्थाश्रमस्त्यक्तः, न तु गृहमात्रमिति वसतीरिति बहुवचनम् । परित्यागेऽपि हेतुमाहुः त्वदुपासनाशा इति । त्वत्सेवां करिष्याम इति आशामात्रेणैव पूर्वसिद्धं त्यक्तम् । तत्र समागतानां पुनर्गृहसम्बन्धे किं वक्तव्यमिति । अतो देयं प्रार्थयन्ति त्वत्सुन्दरेति । तव सुन्दरं यत्स्मितं मोहकमप्यानन्दजनकं त्वत्सम्बन्धात् परमानन्दरूपं तादृशस्मितपूर्वकं यन्निरीक्षणं, तेन जातः तीव्रो यः कामः, तेन तप्तान्तःकरणानां अस्माकं, पुरुषाणां भूषणरूप, अनन्तकोटिकन्दर्पलावण्यरूप, स्वतः पुरुषार्थरूपमेव दास्यं देहि । (अधिकारिभेदेन दास्यस्यानेकविधत्वाद्देयं रूपं स्वतापोक्त्या व्यज्यते । उक्ततापविशिष्टानां यदेतत्तापनिवर्तकं तदिति । किञ्च, प्रभोरपेक्षितवस्तुसमर्पणे हि दास्यं भवति, न त्वन्यथा । एवं सति यथास्माकमुक्ततापेन प्रचुरा त्वदपेक्षा, तथा तवास्मदपेक्षायां स्वयमुद्यम्यास्मदुपभोगः कार्य इत्यर्थः पर्यवस्यति । अन्यथा दास्यस्य कृतिसाध्यत्वेन दानोक्तिरनुपपन्ना स्यात् । अत एव तथा सम्बोधनं पुरुषो भूत्वा भूषणरूपेति । तद्धि कण्ठादिषु सर्वेष्वङ्गेषु भवति । त्वमपि तथा भूत्वा दास्यं देहीति वाक्यैकवाक्यतया प्राप्यते । भूषणत्वोक्त्यैव स्वतन्त्रपुरुषार्थताप्युक्ता । मणिखचितं तद्विभूषणत्वसम्पत्त्यर्थं मध्ये लाक्षावदपि भवति । तेन महानपि तद्धारणार्थं लाक्षामपि धारयति, तुच्छामपि, तथा मध्ये कामोपयोग इति न तदुपाधिकृतं दास्यवरणम्, अपि तु तद्विपरीतमिति भावः ।) अतो दास्यार्थिन्य एव वयम्, न तु विवाहार्थिन्यः । अत उपनयनाद्यपेक्षापि न लोकव्यवहारेण कर्तव्येति भावः ॥ ३८ ॥

ननु भवतीनां सर्वासामेव दास्यवरणे को हेतुः, सालोक्यादेरपि फलस्य विद्यमानत्वात्, तत्राहुः वीक्ष्यालकावृतमिति ।

**वीक्ष्यालकावृतमुखं तव कुण्डलश्रि**
**गण्डस्थलाधरसुधं हसितावलोकम् ।**

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

भावेपि दैन्येन तदपि भगवदुक्तमङ्गीकृत्य निवारणप्रार्थनमिति भावः । एतेन प्रतिबन्धकनिवारणं प्रार्थितम् । अग्रिमेण हेतुरुच्यत इति विभागः । स्वतः पुरुषार्थेति । दानोक्त्या फलत्वं सूचितमिति भावः । तापोक्त्या देयस्वरूपमुक्तम् । दास्यदानोक्त्यापि देयस्वरूपमुक्तं भवतीत्याहुः किञ्चेत्यारभ्य प्राप्यत इत्यन्तेन । यथास्माकमिति दृष्टान्तेन 'ये यथा मामिति मर्यादा सूचिता । आत्मन एवापेक्षितवस्तुत्वात् समर्पकाभावात् स्वयमुद्यम्येत्युक्तम् । महानपीति । यथा महान् भूषणधारणार्थं लाक्षां धारयति, तथा वयं कण्ठादिषु भवद्धारणार्थं कामं धारयाम इत्यर्थः । कामाभावे भोगासम्भवेन तथा न स्यादिति भावः ।

१ सिद्धान्तगतं प्रभूणाम् ।

दत्ताभयं च भुजदण्डयुगं विलोक्य
वक्षः श्रियैकरमणं च भवाम दास्यः॥ ३९॥

अनेन लोकेप्सायां पतिर्न त्यक्तव्य इत्यत्रोत्तरमुक्तम्। लोके हि पुरुषार्थत्रयम्। चतुर्विधो मोक्षः। इन्द्राद्यैश्वर्यभावेन स्वर्गप्राप्तिः। इहलोके परमा लक्ष्मीः। तदत्र त्रयमपि दास्ये सर्वोत्कृष्टमस्तीति तदुपपादयन्ति। प्रथमं सारूप्यं सालोक्यं सामीप्यं सायुज्यमिति मोक्षभेदाः ते दास्याग्रे अप्रयोजकाः। यतो मुखारविन्ददर्शनेन ते कामा निवर्तन्ते इति भक्तिरूपमुखारविन्दस्य तदपेक्षयोत्कृष्टधर्मवत्त्वं निरूप्यते। अलकाः सारूप्यमिव प्राप्ता भ्रमराः। ते बहव एवात्र आवृत्य मुखं तिष्ठन्ति। अतः सारूप्यं गतानामपि यदि भक्तिशेषत्वम्, तदा किं सारूप्येण। किञ्च, मुखं कुण्डलश्रि, कुडलाभ्यां श्रीर्यस्य, कुण्डलयोर्वा श्रीर्यस्मात्। सामीप्ये हि नैकट्यं भवति। अत्यन्तसामीप्यं जायमानमपि कुण्डलादप्यधिकं न भविष्यति। ते चेत्सांख्ययोगरूपे भगवत्प्रमाणावलम्बिनी भगवदधीनगतिमती पुनर्भगवन्मुखनिरीक्षके, तदा किं सामीप्येन। किञ्च, गण्डस्थलाधरसुधमिति। गण्डौ स्थलरूपौ विशालौ। स्थले हि रसः पातुं शक्यत इति। अधरे च सुधा यस्मिन्। गण्डस्थले स्थित्वा

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख.।

वीक्ष्यालकेत्यत्र। अनेनेति। लोकेप्साप्यत्रैव विशेषतः सिध्यतीत्यर्थः। श्लोकक्रमे त्वसर्ग्यमित्यस्योत्तरमिदम्। तदग्रे वक्ष्यते। अत्र विशेषतो लोकेप्सासिद्धौ हेतुमाहुः लोके हीति। पुरुषार्थत्रयमिति। पुंप्रीतिरूपमोक्षादित्रयसाधनत्रयमित्यर्थः। सर्वोत्कृष्टमिति। मोक्षादिषु तत्साध्यानन्दरूपा ये मोक्षादयस्तत्त्रयापेक्षया दास्ये यन्मोक्षादित्रयं तत्सर्वोत्कृष्टम्। यतो दास्ये तच्छेषिभूतो मोक्षो, भगवद्बाह्वाश्लेषरूपं द्वितीयम्, वक्षःस्थितिरूपं तृतीयमित्यर्थः। अप्रयोजका इति। एतदभिलषितं मुखारविन्दफलं दास्यसाध्यम्, एते तु *तत्राप्रयोजकास्तदसम्पादका इति। मोक्षो हि पुरुषार्थः, तल्लक्षणं च पुंप्रीतिसाधनत्वम्, तथा* चैते सारूप्यादयः प्रीतिसाधनरूपाः, मुखशेषत्वेनोक्तास्तु तत्तत्साध्यानन्दरूपा इति विभागः। ननु तत्सम्बन्धिफलं तैरेव जायते इति कथमप्रयोजकत्वमत आहुः यत इति। एतद्दर्शनेन ते कामास्तत्साध्यानन्दाभिलाषा निवर्तन्त इति सूचनायैवं निरूप्यते यतोतस्तस्य फलस्यानभिलषितत्वादेतदभिलषितफलेऽप्रयोजका एवेत्यर्थः। तदपेक्षयेति। मोक्षानन्दापेक्षयोत्कृष्टधर्मवत्त्वमङ्गित्वं निरूप्यते इत्यर्थः। भक्तिशेषत्वमिति। भक्त्यङ्गत्वमित्यर्थः। स्वानुभूयमानानन्दस्य भक्तिशेषत्वादेतेषामपि तच्छेषत्वमिति भावः। साङ्ख्येति। तयोर्भक्त्यङ्गत्वादिति भावः। भगवत्प्रमाणेति। प्रमाणं श्रोत्रं तदवलम्बिनीत्यर्थः। गोलकेन्द्रिययोर्भगवत्यैक्यमभिप्रेत्योक्तम्। विशालाविति। यस्मिन्नित्यग्रेतनेनान्वयः।

---

३९ आपनुं अलकथी आवृत तथा कुंडलनी शोभावाळुं तथा गंडस्थलने विषे अधरसुधा जेमां छे एवुं तथा हास्यसहित अवलोकनवाळुं श्रीमुख जोईने तथा अभयनुं दान करवावाळा भुजदंडयुगल जोईने तथा लक्ष्मीनाज रमणयोग्य वक्षःस्थलने जोईने अमे दासी थईए.

र्दयसि । प्रसादे हेतुमाहुः तेंघ्रिमूलं प्राप्ता इति । यस्तु चरणतलं प्राप्नोति, स प्रसादमपि । स च प्रसादः पशुपुत्रादिरूपो मा भवत्विति स्वाधिकारमन्येभ्यो व्यावर्तयन्ति विसृज्य वसतीरिति । गृहस्थाश्रमस्त्यक्तः, न तु गृहमात्रमिति वसतीरिति बहुवचनम् । परित्यागेऽपि हेतुमाहुः त्वदुपासनाशा इति । त्वत्सेवां करिष्याम इति आशामात्रेणैव पूर्वसिद्धं त्यक्तम् । तत्र समागतानां पुनर्गृहसम्बन्धे किं वक्तव्यमिति । अतो देयं प्रार्थयन्ति त्वत्सुन्दरेति । तव सुन्दरं यत्स्मितं मोहकमप्यानन्दजनकं त्वत्सम्बन्धात् परमानन्दरूपं तादृशस्मितपूर्वकं यन्निरीक्षणं, तेन जातः तीव्रो यः कामः, तेन तप्तान्तःकरणानां अस्माकं, पुरुषाणां भूषणरूप, अनन्तकोटिकन्दर्पलावण्यरूप, स्वतः पुरुषार्थरूपमेव दास्यं देहि । (अधिकारिभेदेन दास्यस्यानेकविधत्वादेयं रूपं स्वतापोक्त्या व्यज्यते । उक्ततापविशिष्टानां यदेतत्तापनिवर्तकं तदिति । किञ्च, प्रभोरपेक्षितवस्तुसमर्पणे हि दास्यं भवति, न त्वन्यथा । एवं सति यथास्माकमुक्ततापेन प्रचुरा त्वदपेक्षा, तथा तवास्मदपेक्षायां स्वयमुद्यम्यास्मदुपभोगः कार्य इत्यर्थः पर्यवस्यति । अन्यथा दास्यस्य कृतिसाध्यत्वेन दानोक्तिरनुपपन्ना स्यात् । अत एव तथा सम्बोधनं पुरुषो भूत्वा भूषणरूपेति । तद्धि कण्ठादिषु सर्वेष्वङ्गेषु भवति । त्वमपि तथा भूत्वा दास्यं देहीति वाक्यैकवाक्यतया प्राप्यते । भूषणत्वोक्त्यैव स्वतश्चपुरुषार्थताप्युक्ता । मणिखचितं तद्विभूषणत्वसम्पत्त्यर्थं मध्ये लाक्षावदपि भवति । तेन महानपि तद्धारणार्थं लाक्षामपि धारयति, तुच्छामपि, तथा मध्ये कामोपयोग इति न तदुपाधिकृतं दास्यवरणम्, अपि तु तद्विपरीतमिति भावः ।) अतो दास्यार्थिन्य एव वयम्, न तु विवाहार्थिन्यः । अत उपनयनाद्यपेक्षापि न लोकव्यवहारेण कर्तव्येति भावः ॥ ३८ ॥

ननु भवतीनां सर्वासामेव दास्यवरणे को हेतुः, सालोक्यादेरपि फलस्य विद्यमानत्वात्, तत्राहुः वीक्ष्यालकावृतमिति ।

वीक्ष्यालकावृतमुखं तव कुण्डलश्रि
गण्डस्थलाधरसुधं हसितावलोकम् ।

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेख ।

भावेपि दैन्येन तदपि भगवदुक्तमङ्गीकृत्य निवारणप्रार्थनमिति भावः । एतेन प्रतिबन्धकनिवारणं प्रार्थितम् । अग्रिमेण हेतुरुच्यत इति विभागः । स्वतः पुरुषार्थेति । दानोक्त्या फलत्वं सूचितमिति भावः । तापोक्त्या देयस्वरूपमुक्तम् । दास्यदानोक्त्यापि देयस्वरूपमुक्तं भवतीत्याहुः किञ्चेत्यारभ्य प्राप्यत इत्यन्तेन । यथास्माकमिति दृष्टान्तेन 'ये यथा मामिति मर्यादा सूचिता । आत्मन एवापेक्षितवस्तुत्वात् समर्पकाभावात् स्वयमुद्यम्येत्युक्तम् । महानपीति । यथा महान् भूषणधारणार्थं लाक्षां धारयति, तथा वयं कण्ठादिषु भवद्धारणार्थं कामं धारयाम इत्यर्थः । कामाभावे भोगासम्भवेन तथा न स्यादिति भावः ।

१ चिह्नान्तर्गतं प्रभूणाम् ।

दत्ताभयं च भुजदण्डयुगं विलोक्य
वक्षः श्रियैकरमणं च भवाम दास्यः॥ ३९॥

अनेन लोकेप्सायां पतिर्न त्यक्तव्य इत्यत्रोत्तरमुक्तम्। लोके हि पुरुषार्थत्रयम्। चतुर्विधो मोक्षः। इन्द्राद्यैश्वर्यभावेन स्वर्गप्राप्तिः। इहलोके परमा लक्ष्मीः। तदत्र त्रयमपि दास्ये सर्वोत्कृष्टमस्तीति तदुपपादयन्ति। प्रथमं सारूप्यं सालोक्यं सामीप्यं सायुज्यमिति मोक्षभेदाः ते दास्याग्रे अप्रयोजकाः। यतो मुखारविन्ददर्शनेन ते कामा निवर्तन्ते इति भक्तिरूपमुखारविन्दस्य तदपेक्षयोत्कृष्टधर्मवत्त्वं निरूप्यते। अलकाः सारूप्यमिव प्राप्ता भ्रमराः। ते बहव एवात्र आवृत्य मुखं तिष्ठन्ति। अतः सारूप्यं गतानामपि यदि भक्तिशेषत्वम्, तदा किं सारूप्येण। किञ्च, मुखं कुण्डलश्रि, कुडलाभ्यां श्रीर्यस्य, कुण्डलयोर्वा श्रीर्यस्मात्। सामीप्ये हि नैकट्यं भवति। अत्यन्तसामीप्यं जायमानमपि कुण्डलादप्यधिकं न भविष्यति। ते चेत्सांख्ययोगरूपे भगवत्प्रमाणावलम्बिनी भगवदधीनगतिमती पुनर्भगवन्मुखनिरीक्षके, तदा किं सामीप्येन। किञ्च, गण्डस्थलाधरसुधमिति। गण्डौ स्थलरूपौ विशालौ। स्थले हि रसः पातुं शक्यत इति। अधरे च सुधा यस्मिन्। गण्डस्थले स्थित्वा

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

वीक्ष्यालकेत्यत्र। अनेनेति। लोकेप्साप्यत्रैव विशेषतः सिध्यतीत्यर्थः। श्लोकक्रमे अस्वर्ग्यमित्यस्योत्तरमिदम्। तदग्रे वक्ष्यते। अत्र विशेषतो लोकेप्सासिद्धौ हेतुमाहुः लोके हीति। पुरुषार्थत्रयमिति। पुंप्रीतिरूपमोक्षादित्रयसाधनत्रयमित्यर्थः। सर्वोत्कृष्टमिति। मोक्षादिषु तत्साध्यानन्दरूपा ये मोक्षादयस्तत्त्रयापेक्षया दास्ये यन्मोक्षादित्रयं तत्सर्वोत्कृष्टम्। यतो दास्ये तच्छेषिभूतो मोक्षो, भगवद्वाह्वाश्लेषरूपं द्वितीयम्, वक्षःस्थितिरूपं तृतीयमित्यर्थः। अप्रयोजका इति। एतदभिलषितं मुखारविन्दफलं दास्यसाध्यम्, एते तु तत्राप्रयोजकास्तदसम्पादका इति। मोक्षो हि पुरुषार्थः, तल्लक्षणं च पुंप्रीतिसाधनत्वम्, तथा चैते सारूप्यादयः प्रीतिसाधनरूपाः, मुखशेषत्वेनोक्तास्तु तत्तत्साध्यानन्दरूपा इति विभागः। ननु तत्सम्बन्धिफलं तैरेव जायते इति कथमप्रयोजकत्वमत आहुः यत इति। एतद्दर्शनेन ते कामास्तत्साध्यानन्दाभिलाषा निवर्तन्त इति सूचनायैवं निरूप्यते यतोतस्तस्य फलस्यानभिलषितत्वादेतदभिलषितफलेऽप्रयोजका एवेत्यर्थः। तदपेक्षयेति। मोक्षानन्दापेक्षयोत्कृष्टधर्मवत्त्वमङ्गित्वं निरूप्यते इत्यर्थः। भक्तिशेषत्वमिति। भक्त्यङ्गत्वमित्यर्थः। स्वानुभूयमानानन्दस्य भक्तिशेषत्वादेतेषामपि तच्छेषत्वमिति भावः। साङ्ख्येति। तयोर्भक्त्यङ्गत्वादिति भावः। भगवत्प्रमाणेति। प्रमाणं श्रोत्रं तदवलम्बिनीत्यर्थः। गोलकेन्द्रिययोर्भगवत्यैक्यमभिप्रेत्योक्तम्। विशालाविति। यस्मिन्नित्यग्रेतनेनान्वयः।

---

३९ आपनुं अलकथी आवृत तथा कुंडलनी शोभावाळुं तथा गंडस्थलने विषे अधरसुधा जेमा छे एवुं तथा हास्यसहित अवलोकनवाळुं श्रीमुख जोईने तथा अभयनुं दान करवावाळा भुजदंडयुगल जोईने तथा लक्ष्मीनाज रमणयोग्य वक्षःस्थलने जोईने अमे दासी थईए.

अधरसुधा पातुमत्र शक्येति । सालोक्ये हि आनन्दमात्रमक्षरामृतपानं च । अक्षरापेक्षयापि गण्डस्थले स्थितिः चुम्बनाद्यर्थमुत्तमा । अधररसश्च अक्षररसादुत्तम इत्युक्तम् । कुण्डलश्रीयुक्तं गण्डस्थलमित्यस्मिन् पक्षेऽपि सामीप्यात् भक्तौ शास्त्रीयो रसः अधिको निरूपितः, परस्परं त्वद्गुणवादरूपः । अक्षरादाधिक्यं तु अधररसे स्पष्टमेव । किञ्च, हसितावलोकमिति। हसितपूर्वकमवलोको यस्मिन्। ब्रह्मानन्दे प्रविष्टानां न भक्तिविलासः। हासो हि सर्वरसोद्बोधरूपः । ज्ञानं चाविर्भूतम् । ब्रह्मानन्दे तु द्वयमप्यव्यक्तम्, जले निमग्नस्य जलपानवत् । अनुभवरसो हि भिन्नतया स्थितौ भवति । अतो भक्तिरूपसुखस्य दृष्टत्वात् दास्यमेव फलम्, न मोक्षः । भुजदण्डयुगं च विलोक्य इन्द्रादिभावेनापि स्वर्गो न प्रयोजक इति निरूपयन्ति दत्ताभयमिति । स्वर्गे इन्द्रः परमकाष्ठां प्राप्तः । तेऽपि दैत्येभ्यो निरन्तरं भीताः इन्द्रादयः । तेषामप्यभयदातृ भगवतो भुजदण्डयुगलम् । तच्चेदत्रैवास्ति, तत्परित्यज्य किमिन्द्रत्वेन । चकारात् न केवलमभयमात्रं प्रयच्छति, किन्तु क्रियाशक्त्या यज्ञादिना हविरपि प्रयच्छति । यथाग्रे इन्द्रः स्वाधिकारसमाप्तौ मुक्तो भवति । दण्डपदेनानुल्लंघ्यशासनत्वमुक्तम् । उभयत्र च दण्डो युगपदेन निरूपितः । ततो हि सर्वथा दैत्यनाशो भवति । किञ्च, वक्षोऽपि विलोक्य । लोकानां श्रिया रमणं भवति । श्रीरपि तत्र रमते । चकाराद्धर्मस्यापि । अतो दास्य एव भवामः । (अत्र वीक्षणस्य दासीभवनहेतुत्वोक्त्या यत्रायं भावो नास्ति, तेषां नैतद्वीक्षणमस्ति, विधिप्रयुक्तत्वाभावेन तद्विपरीतविध्यनङ्गीकारश्च युक्त इति ज्ञाप्यते । यदप्युक्तं भगवता 'अस्वर्ग्य'मित्यादि स्वभजने दोषपट्कम्, तदपि पड्भिर्गुणैर्निवारितम् । न हि परमपुरुषार्थसाधकं पापं भवति । फलत एव पापस्य निन्द्यमानत्वात्) ॥ ३९ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

आनन्दमात्रमिति । स्थलमिति शेषः । सालोक्ये स्थलमानन्दस्य मात्रा अंशो यस्मिन् तादृशम् अक्षरात्मकमित्यर्थः । दास्ये तु स्थलं गण्डरूपं पूर्णानन्दरूपमिति भावः। अतोत्र चुम्बनाद्यर्थं स्थितिरुत्तमेत्यर्थः । तत्राक्षरे स्थित्वाऽक्षरामृतं पातव्यम् । अत्र गण्डे स्थित्वाधररसः पातव्यः । कुण्डलश्रीयुक्तमिति । कुण्डलयोर्गण्डाङ्गत्वकथनेन सामीप्यस्य भक्त्यङ्गत्वनिरूपणाद्भक्तावधिको रसो निरूपितः । तद्रसस्वरूपमाहुः शास्त्रीय इति । अस्मिन् पक्षे कुण्डलश्रि गण्डस्थलं यत्रेति समासः । तदनन्तरं कर्मधारयः । द्वयमप्यव्यक्तमिति । आनन्दो ज्ञानं चात्मत्वेनैवेतिभेदाभावादव्यक्तमित्यर्थः । एतदेव विशदयन्ति जले इति । स्वर्गो न प्रयोजक इति । अभिलषितफले इति शेषः । यतो भुजदर्शनेन ते कामा निवर्तन्ते इति पूर्वोक्तोर्थोनुसन्धेयः । धर्मस्यापीति । रमणमिति शेषः । मूलवासनया षष्ठ्यन्तमुक्तम् । तथा च मोक्षकामार्थधर्माश्चत्वारोपि क्रमेणोक्ता इति भावः । अयं भाव इति । दास्यभाव इत्यर्थः । विधीति । अत इति शेषः ।

ननु तथापि लोकविद्विष्टं स्त्रीणामभिसरणम्, अतः सन्मार्गरक्षणार्थं प्रमाणसिद्धमप्येतन्न कर्तव्यम्, अतः श्रवणदर्शनादिकमेव कर्तव्यमिति चेत्, तत्राहुः का स्त्रीति।

**का स्त्र्यंग ते कलपदामृतवेणुगीत-**
**सम्मोहितार्यचरितान्न चलेत्त्रिलोक्याम्।**
**त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं**
**यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥ ४०॥**

अयं धर्मः पुरुषाणां वक्तव्यः, न तु स्त्रीणाम्, असंभावितत्वात्। नह्यसंभावितो धर्मो भवति। एवं धर्मनाशे धर्मस्थापकं स्वरूपमेव हेतुः, अद्भुतकर्मत्वात्। (वस्तुतस्तु स्वरूपसम्बन्धिनां भक्तानां धर्मं स्वरूपेणैव रक्षति। तच्चान्यभावेभ्यो रक्षणमेतद्भावपोषणं च। ये स्वरूपधर्मसम्बन्धिनस्तांस्तैरेवेति न किञ्चिदनुपपन्नमिति भावः। अत एवैवं स्वरक्षणेन स्वान्तरङ्गत्वज्ञापनाय) अङ्गेति सम्बोधनम्, अप्रतारणाय च। या स्त्री लोके स्त्रीशब्दवाच्या सा कथमार्यचरितान्न चलेत्। त्रिलोक्यां सत्त्वरजस्तमःकार्यरूपायाम्। तामसीनां मौढ्यात् आर्यचरिते स्थितिं मत्वा तन्निराकरणम्। राजसीनां स्वभाव एव। सात्त्विकीनां सत्त्वाद्धर्मबुद्धिमाशंक्य तन्निराकरणम्। आर्यमार्गपरित्यागे हेतुः ते कलपदामृतवेणुगीतसम्मोहितेति। सम्मोहिता आर्यचरिताचलत्येव। सम्मोहः पञ्चपर्वाविद्यास्थानीयैः। भगवत्सम्बन्धात् अविद्या तु न बाधते, परमन्य एव बाधकाः। तेषां बलं ते इति, त्वदीया इति। कलान्यव्यक्तमधुराणि यानि पदानि तत्राविर्भूतं यदमृतं तदेव वेणुद्वारा गीतं तेन संमोहः। गीतं देहमोहजनकम्, 'गायन्तं स्त्रियः कामयन्त' इति। स्त्री तु देह एव। इन्द्रियाणां व्यामोहको वेणुः, रसात्मकत्वात्। अमृतं प्राणानाम्। पदान्यन्तःकरणस्य। अव्यक्तता आत्मन इति सम्यग्विमोहिताः। आर्याः प्रमाणचलविवेकिनः। प्रमाणे हि

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

वीक्षणाभावाद्धेतोरित्यर्थः। वीक्षितॄणामेव भवामेति लोडन्तेन विधिरुक्त इत्यवीक्षितॄणां विधिप्रयुक्तत्वाभावेन हेतुना दास्यविध्यङ्गीकारः विपरीतो यस्तद्विधेरनङ्गीकारः स च युक्त इत्यर्थः।

का स्त्रीत्यत्र। विवरणे सत्त्वादयो लीलासृष्टिस्था इति ज्ञेयम्। तत्रैव वेणुश्रवणाधिकारात्। कलेषु पदेषु यदमृतमर्थरूपं तच्च तद्वेणुना गीतं चेति कर्मधारयः।

---

४० आपना अव्यक्तमधुर पदोना अमृतथी युक्त वेणुगीतथी मुग्ध थएली कई स्त्री त्रिलोकीमां एवी छे, के जे आर्यचरितथी न चले? आपनुं आ त्रैलोक्यना सौभाग्यरूप स्वरूपनुं निरीक्षण करीने गाय, पक्षीं, वृक्षो, अने मृगोए पण पुलक धारण कर्या. १ विद्यान्तर्गतं प्रभूणाम्।

इन्द्रमहेन्द्रयोरपि भेदस्वीकारः । पृथगुपस्थिताः सर्व एव भिन्ना इति । अन्यथा इन्द्रयाजिनोऽग्रे सम्वत्सरान्ते प्रायश्चित्तश्रवणं न स्यात्, 'सम्वत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपे'दिति । अतो देहव्यतिरिक्तः स्वरूपेणोपस्थितोऽपि प्रमाणबले विरुध्यते । वस्तुविचारस्तु प्रमेयबलमाश्रित्य, अन्यथा विधिनिषेधविषयो व्यर्थाः स्युः । तदुत्तरत्र वक्ष्यति एकादशे । अतो मार्गान्तरविरोधो मार्गान्तरे नोपयुज्यत इति मर्यादाभङ्गोऽत्र न दूषणम् । एतस्योत्तरमग्रे शुकश्च वक्ष्यति, रासानन्तरम्, 'धर्मव्यतिकरो दृष्ट' इति । तस्मादत्र फलस्य सिद्धत्वात् साधनदृष्ट्या अपकीर्तिः नास्मत्प्रतिबन्धिका । किञ्च, न केवलं नाम्ना मर्यादाभङ्गः, किन्तु स्वरूपेणापि, तदाहुः त्रैलोक्यसौभगमिति । त्रैलोक्यस्यापि सुभगत्वं यस्मात् । यथा सूर्येण दिनम्, चन्द्रमसा रात्रिः, तथा त्रैलोक्यमेव भगवद्रूपेण सुन्दरतां याति । इदमिति प्रत्यक्षसिद्धम् ! चकारादनुभावाँश्च । तच्छ्रुत्वा एतद् दृष्ट्वा का वा आर्यचरितान्न चलेत् । अस्त्वियं प्रमाणवार्ता दुर्बला, प्रकारान्तरेणापि चलति, भगवतो रूपेण प्रमेयमर्यादाप्यपगच्छति । या कथमपि नान्यथा भवति । तदाह **यद्गोद्विजद्रुममृगा** इति । गावो हि प्रमाणवार्तानभिज्ञाः, मातरमपि गच्छन्ति, द्विजाः पक्षिणः सर्वभक्षाः, द्रुमाः स्थावराः, कदाचिदपि बहिः सम्वेदनरहिताः, निरिन्द्रिया एवेति केचित् । मृगाः सर्वतोभयाः । तेऽपि चेद्भगवद्रूपेण गीतेन वा आश्लिष्टरसाः पुलकानि धारयन्ति, रसिकमनुष्यधर्मानाविष्कुर्वन्ति । ये भगवता अन्यथैव सृष्टाः । स्त्रियस्तु स्वभावतोऽप्यन्यथाभवन्तीति नाश्चर्यं किञ्चिदत्र ॥ ४० ॥

एवं भगवदुक्तानां वाक्यानां निवारणार्थं पुष्टिसिद्धान्तं निरूप्य एतद्भगवत्कृपैकसाध्यमिति भगवत्कृपां प्रार्थयन्ति व्यक्तमिति ।

**व्यक्तं भवान् व्रजभयार्तिहरोऽभिजातो**
**देवो यथादिपुरुषः सुरलोकगोप्ता ।**
**तन्नो निधेहि करपङ्कजमार्तबन्धो**
**तप्तस्तनेषु च शिरस्सु च किङ्करीणाम् ॥ ४१ ॥**

नापि त्वदुक्तमस्मदुक्तं वा किञ्चित्साधकं बाधकं वा तथापि स्वावतारप्रयोजनं विचार्य अस्मासु कृपा कर्तव्या । तत्प्रयोजनमाहुः । भवान् व्रजभयार्तिहर एव व्यक्तमभिजातः । व्रजस्य आर्तिः पीडा भयं च त्वया दूरीकर्तव्यम् । अन्यथा साक्षाद्भगवतोऽवतारे प्रयोजनं न पश्यामः । भूभारहरणं तु सङ्कर्षणांशेन । वसुदेवादिप्रियं प्रद्युम्नेन । धर्मरक्षा त्वनिरुद्धेन । यदि व्रजभयार्तिनिराकरणं न क्रियेत, तदा किमवतारान्तरकार्यं स्यात् । अतो व्यक्तं भवान् व्रजभयार्तिहरः । इदानीं यथार्तिरस्माकम्, तथा न कदापि । अस्म-

---

४१ एम सुरलोकनुं रक्षण करवावाळा आदिपुरुषदेवनी माफक व्रजनुं भय अने आर्ति हरवाने आप प्रकट थया छो, माटे हे आर्तबन्धु ! आपनुं करकमळ अमो दासीओना तप्त स्तन उपर अने मस्तकउपर धरो.

दपगमे तु सर्वस्यापि व्रजस्य महती आर्तिः । अत आर्तिनिवृत्तिः कर्तव्या । ननु मर्यादयैव निवृत्तिकरणमुचितम्, न तु अमर्यादया, तथा सति भवतीनां कामशान्तिः, ज्ञानं वा, भवत्विति चेत्, तत्राहुः देवो यथादिपुरुष इति । भगवान् ब्रह्मरूपः सर्वसमः, तथापि इन्द्रादिषु कृपां कुर्वन् दैत्यान् मारयन् विषमतामङ्गीकरोति । न तु देवेभ्यो ज्ञानं प्रयच्छति । यत्र स्वरूपमेवान्यथाकरोति, तत्र वाचमन्यथाकरोतीति किं वक्तव्यम् । अतो यथादिपुरुषोऽपि देवो भूत्वा सुरलोकगोप्ता जातः, तथा भवानपि धर्ममर्यादारक्षकः, अस्मत्सम्बन्धं करोत्विति भावः । तदेव रसपोषणार्थं व्याजेनाहुः तन्नो निधेहीति । आदावस्माकं शिरसि हस्तं स्थापय । यथा अस्माकमभयं भवति । ततोऽस्माकं हृदयतापनिवृत्त्यर्थं स्तनेषु च करपङ्कजममृतस्रावि तापनाशकं निधेहि । अनौचिती तु नास्ति । यतो वयं किङ्कर्यः । परीक्षार्थं वा एतत् द्रष्टव्यमिति रसोक्तिः ॥ ४१ ॥

एवं प्रार्थनायां भगवान् यत्कृतवान् तदाह इतीति ।

श्रीशुक उवाच—**इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः ।**
**प्रहस्य सदयं गोपीरात्मारामोप्यरीरमत् ॥ ४२ ॥**

**षड्गुणैश्वर्यभावेन षोढा रेमे हरिः स्वयम् ।**
**स्वरूपेणापि शृंगारो द्विविधोऽपि निरूपितः ॥ १ ॥**
**सामान्यरमणं पूर्वं विशेषे मेलनं पुरा ।**
**बाह्येन रमणं पश्चात् आन्तरं च ततः परम् ॥ २ ॥**
**ततो नानाविलासेन जातकेलिविभेदतः ।**
**विप्रलंभस्य सिद्ध्यर्थं तासां मानमुदीर्यते ॥ ३ ॥**
**तिरोभावस्ततश्चापि नायं लौकिककामुकः ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

व्यक्तं भवानित्यस्योत्तरार्धे स्तनशिरसोः क्रमो न विवक्षित इत्याशयेनाहुः आदाविति । शिरःसु धारणानन्तरं वक्षसि तथासम्भवादिति भावः ।

एवं प्रार्थनायामिति । श्लोकसप्तकस्याभासोयं ज्ञेयः ।

इतीत्यत्र । कारिकासु । बाह्येन रमणमिति । स्वरूपाद्बाह्येन प्रकारेण गतिकटाक्षादिभिः कामोद्बोधेन रमणमित्यर्थः । अत एव रक्षणं दूरादेवेति तत्र वक्ष्यते । आन्तरमिति । स्वरूपनिष्ठं बन्धादिप्रकारकमित्यर्थः । टिप्पण्याम् । द्वितीयेन बाह्यमिति । विशेषरमणे द्वितीयेनेत्यर्थः । तृतीयेनान्तरमित्यत्रापि तथा । द्वाभ्यां तदुक्तिरिति । आन्तररमणनिरूपकश्लोकेन नानाविलासरमणनिरूपकश्लोकेन च क्रमेणोभयोक्तिरित्यर्थः । सुबोधिन्याम् ।

---

४२. आम तेमनुं विह्वलयुक्त वचन श्रवण करीने योगेश्वरोना ईश्वर आत्मारामे पण हसीने सदय थईने गोपीओने रमण कराव्युं.

प्रथमं तासां तापापनोदनार्थं सामान्यलीलामाह । इति तासां विक्लवितं परमवैक्लव्यभाषितं श्रुत्वा प्रहस्य अरीरमत् । ननु निरिन्द्रियः कथं रेमे, तत्राह, योगेश्वराणामपीश्वर इति । योगादिषु सर्वे पदार्थाः स्फुरन्ति, अणिमादयोऽपि, तथा तदैव स्वरूपमेवेन्द्रियादिभावेन प्रकटीकृतवान् । न तु स्वस्य कामेन । तथा सति बीजनिवृत्तौ कामो निवर्तेत । तासां यथा न कदाचिदपि स भावो गच्छति, तदर्थं प्रहस्य प्रकर्षेण हास्यं कृत्वा, तासामुद्धरणार्थं, न तु भिन्नगणनया मर्यादायां पातयित्वा नाशनार्थमिति । तदाह सदयमिति । गोपीरेवारमयत्, स्वयं त्वात्माराम एव । तासां रसाधारत्वाय वा सदयम् ।

क्रिया सर्वापि सैवात्र परं कामो न विद्यते ।
तासां कामस्य सम्पूर्तिर्निष्कामेनेति तास्तथा ॥ १ ॥
कामेन पूरितः कामः संसारं जनयेत् स्फुटः ।
कामाभावेन पूर्णस्तु निष्कामः स्यात् न संशयः ॥ २ ॥
अतो न कापि मर्यादा भग्ना मोक्षफलापि च ।
अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेत् ॥ ३ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

विक्लवितमिति । क्लुङ्गताविति धातोः क्लान्तं वैक्लव्यमित्यर्थः । निरिन्द्रिय इति । इन्द्रियेषु सत्सु हि तैः स्त्रीप्रेक्षणादिना जातेन कामेन गोलके अणुत्वमहत्त्वे भवत इति भावः । योगादिष्विति । आदिशब्देन ज्ञानम् । अवान्तरभेदविवक्षया बहुवचनम् । तेषु सत्सु पदार्थाः स्वत एव स्फुरन्ति । इन्द्रियैर्विनैव ज्ञानक्रियोपयोगिनो भवन्तीत्यर्थः । योगेश्वरा ब्रह्मादयस्तेषां जिज्ञासायां चिकीर्षायां च ज्ञानयोगावेव ज्ञानकर्मेन्द्रियरूपौ भवत इति निबन्धे पुरञ्जनप्रसङ्गे निरूपितम् । अयं तु तेषामपीश्वरः, अतोत्र स्वरूपमेव तथा भवतीत्याहुस्तथेति । इन्द्रियादीति । इन्द्रियादित्वेनेत्यर्थः । आदिपदेन प्राणमनोदेहकामास्तत्त्वेनापि स्वरूपमेव प्रकटितवान् । स्वरूपेणैव तत्तत्कार्यं करोतीत्यर्थः । तथा सतीति । कामकृतत्वे लोकन्यायः स्यात्, तदा तन्न्यायेन तदपि स्यादित्यर्थः । तदाहेति । तत् तदर्थं उद्धारार्थकहासकरणार्थं दयामाहेत्यर्थः । आत्माराम एवेति । आत्मनि स्वरूपे आरामो रमणं यस्येत्यर्थः । गोपीनां भगवता सह रमणम्, भगवतस्तु स्वरूपे एव रमणमिति 'रेमे तया चात्मरत' इति श्लोके व्युत्पादयिष्यते ।

क्रिया सर्वापि सैवेति । कामशास्त्रसिद्धैवेत्यर्थः । परमिति । कामशास्त्रसिद्धः स्त्रीप्रेक्षणादिजनितोऽङ्गादिविकारहेतुः कामो न विद्यते इत्यर्थः । तासां कामस्येति । अभिलापस्येत्यर्थः । संसारमिति । तादृशकामलीला श्रुता संसारोत्पत्तिमेव कुर्यात्, न तु हृद्रोगनिवृत्तिमित्यर्थः । कामाभावेनेति । कामस्याभावो यत्र तादृशेन स्वरूपेण तु निष्काम एवाभिलापः पूर्णः स्यात् । अतो निष्कामाभिलापवत्त्वादेता निष्कामा इति शेषः । अत्र कामप-

भगवच्चरितं सर्वं यतो निष्काममीर्यते ।
अतः कामस्य नोद्बोधः ततः शुकवचः स्फुटम् ॥ ४ ॥

आत्मारामस्य आत्मनैव रमणं व्यावर्तयितुमपिशब्दः । अरीरमत् बहुधा रेमे । उत्तरोत्तरं रसाधिक्यं च प्रकटितवान् ॥ ४२ ॥

एवं सामान्यलीलामुक्त्वा विशेपलीलामाह ताभिरिति त्रिभिः ।

**ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ।**
**उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः ॥ ४३ ॥**

अजातस्मरकेलिभिः प्रथमतः ताभिः समेतो जातः मिलितः । पूर्वं भयात् पृथक् स्थिताः । तत उदाराणि चेष्टितानि यस्य । अत्र औदार्यं रसविपयकम् । यथा तासां महानेव रस आविर्भवति, तथा कामशास्त्रसिद्धलीलाः सर्वा एव कृतवान् । ततस्ता अन्तःपूर्णरसाः । प्रियस्य भगवत ईक्षणार्थमुत्फुल्लानि मुखानि यासां तादृश्यो जाताः । प्रियेक्षणेन वा सूर्यकिरणैरिव उत्फुल्लानि मुखानि । वस्तुतो लोभस्थितरसार्थमेव तथाकरणम् । एतावति कृते रसो निवर्तते, तदभावायाह अच्युत इति । तासामपि रससमाह्यभावाय उदारेति ।

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

देन देवतारूपः कामो विवक्षित इति ज्ञेयम् । उदारहासेत्यनेन कामसम्पादनेपि तस्यागन्तुकत्वाद्व्यभिचारिभावेन स्थायिभावस्येव न तेन निष्कामत्वस्य हानिरिति भावः । पञ्चमाध्यायोक्तमलौकिककामयुक्तमपि चरित्रं वस्तुतो निष्काममेवेत्याशयेनाहुः सर्वमिति । निष्काममिति । लीलाश्रवणनिवर्त्यकामरहितमित्यर्थः । आत्मनैवेति । किन्तु मनोवाक्प्राणेन्द्रियशरीरैरपि लीलेत्यर्थः । इदं सामान्यरमणमुत्तरोत्तरपुष्टमध्यायपर्यन्तं विवरिष्यते इत्याशयेनाहुर्बहुधा रेमे इति ।

ताभिरित्यत्र । समेतो जात इति । ताभिः कर्त्रीभिर्भगवान् समेतः सङ्गतो जात इत्यर्थः । कर्मणि क्तः । मूले कर्तरि क्त इति ज्ञेयम् । सर्वा लीला इति । बन्धातिरिक्ता इति वक्ष्यमाणत्वात् स्पर्शादिरूपा इत्यर्थः । प्रियस्येति । ईक्षणार्थं उत्फुल्लानि अञ्चलेभ्यो निर्गतानीत्यर्थः । अञ्चलावरणे सम्यग्दर्शनं न सम्पद्येतेति भावः । द्वितीयपक्षकथने बीजमाहुः वस्तुत इति । अस्मिन् पक्षे उत्फुल्लानि लोभग्रहणार्थं विकसितानीत्यर्थः । तथाकरणमिति । उत्फुल्लमुखकरणमित्यर्थः । एवं रसग्रहणार्थमुद्योगे भगवति प्रयत्नशैथिल्यमायाति, सामर्थ्यक्षये स्त्रियाः पुरुषाधरपानमित्युक्तत्वादित्याहुः एतावतीति । रसो निवर्तते, प्रयत्नशैथिल्यं भवतीति शङ्का स्यादिति शेषः । ताभिरेतावति कृते भगवति निर्वेदाशङ्का स्यात्, तदभावायाहेत्यर्थः । अच्युत इतीति । तथा च हृच्छयाग्निसिञ्चनार्थमेव तथा क्रियते, न तु भगवति निर्वेद इत्यर्थः । तासामपीति । अजातस्मरकेलित्वेनाप्रौढात्वा-

४३. प्रियेक्षणथी उत्फुल्ल प्रसन्न छे मुख जेमना एवा ते गोपीजनोथी समेत उदार चरित्रवाला अच्युत-उदार हासथी जेमना दांत कुन्दपुष्पसमान कान्तियुक्त छे ते नक्षत्रोथी विंटलायला शशांक-चन्द्रमानी माफक विशेष शोभवा लाग्या.

उदारो यो हासः पूर्णकामप्रदः, कामार्थमेव यो मोहः तेनैव स्नेहः सम्वर्धितः । तदाह । हाससहिता ये द्विजाः त एव कुन्दपुष्पाणि, आरक्तान्यपि हासेन शुभ्राणि, तेषु दीधितिर्यस्य । कुन्दत्वं स्नेहस्यैतन्मात्रपर्यवसानार्थम् । ( पूर्वं निरुपधिरेव स्नेहः स्थितः, भगवता परं रसशास्त्रोक्तरीत्या स्वरूपानन्दं दातुं तत्सजातीयः कामोपाधिकः स्नेहोऽधुना जनित इति ज्ञापनाय स्नेहरूपरदानां द्विजपदेन कथनम् । ) तथा सति फलभोगात् कान्त्यभावमाशङ्क्य तत्र दीधितिरुक्ता । यद्यपि भगवान् तन्निर्बन्धेन रेमे, जगद्दोषनिराकरणार्थं च, न तु स्वयम्, तथापि न पूर्णमनोरथ इव, किन्तु यथा लौकिकः, तदाह दृष्टान्तेन । एणाङ्कः उडुभिः नक्षत्रैः सह यथा व्यरोचतेति । बन्धातिरिक्ताः सर्वा बाह्या एव लीला उक्ताः ॥ ४३ ॥

एषा विशेषतः प्रथमलीला बाधककामनिवारिका । द्वितीयलीलाया उद्बोधार्थं पूर्वसामग्रीमाह उपगीयमान इति ।

**उपगीयमान उद्गायन् वनिताशतयूथपः ।**
**मालां बिभ्रद्वैजयन्तीं व्यचरन्मण्डयन् वनम् ॥ ४४ ॥**

ताभिरुपगीयमानः निकटे गीयमानः स्वयमप्युद्गायन् जातः । ततः वनिताशतानामनेकविधस्त्रीणामनेकविधानेव यूथान् पातीति तथा जातः । यावतीभिर्मिलितो रसहेतुर्भवति, तावतीनामेकं यूथम् । एवमनेकरूपाणि कृतानि । तेषामत्र रक्षणं दूरादेवाश्वासनेन च । तदा गायतो गच्छतः रूपमाह मालामिति । वैजयन्ती नवरत्नखचितां स्वाभाविकीमैश्वर्यप्रबोधिकां कीर्तिमयीं मालां बिभ्रत्, वनमेव सर्वं मण्डयन् अलंकुर्वन्, व्यचरत् लीलागतिं कृतवान् । एषा हि गतिः तासां कामोद्बोधिका । स तासां कामपूरकः । एकस्मात् वनात् वनान्तरं वा गत इति ॥ ४४ ॥

एवमुद्बुद्धे कामे ताभिः सह बन्धादिभिः रेम इत्याह नद्या इति ।

**नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम् ।**
**रेमे तत्तरलानन्दिकुमुदामोदवायुना ॥ ४५ ॥**

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेख. ।

द्विति भावः । बाधककामेति । देहस्थितौ बाधको विरहाग्निरूपो यः कामस्तन्निवारिका तत्प्रतिबन्धिका अधरामृतेन हृच्छयाग्निसिञ्चनरूपेत्यर्थः । यद्यपि 'सिञ्चाङ्ग न' इति श्लोके उक्तिरन्यपूर्वाणामेव, तथाप्युपलक्षणेन सर्वासामेव तथेति ज्ञेयम् । उपगीयमान इत्यत्र । शतपदस्य देहलीदीपन्यायेनोभयत्र सम्बन्धमभिप्रेत्य स्त्रीषु यूथेषु चानेकविधत्वं व्याख्यातम् ।

---

४४. सेंकडो वनिताओना सेंकडो यूथोना अधिपति, जेमनु गोपीओ समीपमा गान करेछे ते उचेथी गान करता वैजयन्ती माला धारण करता, वनने शोभावता, लीलाथी गति करवा लाग्या. १. सिद्धान्तगंत प्रभूणाम् ।

४५. श्रीयमुनाजीना शीतल वालुका-रेती वाला तरंगथी आनन्दयुक्त कुमुदपुष्पना सुगन्धी वायुवाला तट उपर पधारीने गोपीओ साथे प्रभुए रमण कर्युं

नद्याः पुलिनमच्छं कोमलमाविश्य, आसमन्तात् प्रविश्य, रमणे बन्धादिभिरतिकोमलं कृत्वा, गोपीभिरनेकविधाभिः रेमे । हिमाः शीतलाः वालुका यत्रेति अन्तरूष्मा निवारितः । बहिः शैत्यं चाह तत्तरलानन्दीति । तस्या नद्यास्तरलास्तरङ्गाः ताभिः कृत्वा आनन्दयुक्तं पुलिनमेव । आनन्दयुक्तो वायुर्वा । कुमुदानां चानन्दयुक्तसुगन्धः । तस्यानन्दजनकत्वेनैव मान्द्यं निरूपितम् । शैत्यं च कुमुदानां जलसम्बन्धात् । तादृशवायुना सहितं पुलिनम् । महाबन्धेषु वायोरप्यपेक्षा ॥ ४५ ॥

एवं सर्वभावेन तासां जातस्मरकेलित्वं सम्पादितम् । अतः परं अष्टविधालिङ्गनादिपूर्वकं चेष्टितकामादियुक्तं रसविलासचरित्रमाह बाहुप्रसारेति ।

**बाहुप्रसारपरिरम्भकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः ।**
**क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तम्भयन् रतिपतिं रमयांचकार ॥४६॥**

दूरे स्थितामवयवं वा स्प्रष्टुं बाहुप्रसारणम् । ततो बलादपि परिरम्भः । ततः करालकोरुनीवीस्तनानामालभनानि । करालभनं हस्ते ग्रहणम् । पुरुषायितलीलासमबन्धे वा । एवं कचोन्नमनार्थं अलकानां स्पर्शः । ऊरुस्पर्शो बाहुबन्धार्थः । नीवीस्पर्शः पुष्टे रसे मोचनार्थः । स्तनयोस्तु रसोद्गमनार्थः । एवं पञ्चस्पर्शा विहिताः । नर्म परिहासवचनानि कामस्तम्भनार्थम् । ततो नखाग्रपाताः नखक्षतदन्तक्षतताडनादयः कामयुद्धनिरूपकाः । तत्तत्स्थाने स्थितः कामः तैरुद्बोध्यते, यथा सेनावधे राजा समायाति । क्ष्वेलिः क्ष्वेलिका प्रलोभनादिः, तत्पूर्वकान्येवावलोकनानि । हसितानि रसस्थापकानि । एवं द्वादशविधोऽपि कामः द्वादशाङ्गेषु स्थितः प्रबुद्धो भवति, तदाह व्रजसुन्दरीणामुत्तम्भयन्निति । संयुक्तः

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नद्या इत्यत्र । अच्छं कोमलमिति पुलिनपदस्यार्थः । नतु तथा पाठकल्पनम् । बन्धादिभिरिति । वालुकाबन्धादिभिरित्यर्थः । एवं सर्वभावेनेति । बन्धादिप्रकारकरमणेन सर्वथा तयात्वं सम्पादितं पूर्वोक्तबाधलीलापेक्षयापीत्यर्थः ।

बाहुप्रसारेत्यत्र । पुरुषायितेति । उच्यते इति शेषः । इयं लीला समबन्धो वाप्रोच्यते इत्यर्थः । लीलाद्वये एते स्पर्शा विधीयन्ते इत्याहुः एवमिति । स्तनयोस्त्विति । पूर्वमालभतिः स्पर्शमात्रार्थः । अत्र मर्दनार्थोपीति तन्मात्रार्थव्यावर्तनाय तुशब्दः । क्ष्वेल्यासहितैरवलोकहसितैरित्यन्वयमभिप्रेत्याहुः तत्पूर्वकान्येवेति । द्वादशा-

---

४६. बाहुप्रसार, परिरम्भ, कर, अलक, ऊरु, नीवी, स्तनना स्पर्श, हास्य, नखक्षत दन्तक्षतवगेरेथी, प्रलोभनादि पूर्वक अवलोकयुक्त हास्यथी, व्रजसुन्दरीओना कामनुं उत्तेजन करता प्रभु तेमने रमण करावता हवा.

कामो रतिपतिः, वियुक्तस्त्वग्निरूपः । एवमाधिदैविकं काममुद्बोधयन् रमयांचकार । गोपीनां सुखमेव प्रकटितवान्, न तु कामान्तेन विरतिमुत्पादितवान् ॥ ४६ ॥

एवं संयोगशृङ्गारमुपपाद्य विप्रयोगमुपपादयितुं तासां मानमाह एवमिति ।

**एवं भगवतः कृष्णाल्लब्धकामा महात्मनः ।**
**आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि ॥ ४७ ॥**

पूर्वोक्तप्रकारेण भगवतः सर्वरसदानसमर्थात्, कृष्णात् सदानन्दात् फलरूपात्, लब्धकामाः प्राप्तमनोरथाः सत्यः आत्मानमेव पूर्णं मेनिरे, न तु भगवन्तं पूर्णम्, तेन वा स्वपूर्णताम् । ननु भगवानेवं कथं कृतवान्, न्यूना एव कथं न संरक्षिताः, तत्राह महात्मन इति । भगवान् महानेवात्मा । न ह्यगाधे जले प्रविष्टः अमग्नो भवति, घटो वा अपूर्णो भवति । किञ्च, आत्मानं स्त्रीणां मध्ये अभ्यधिकं मेनिरे, भुवि चाभ्यधिकम्, भुवि स्त्रीणां मध्ये वा । अत एव मानिन्योऽपि जाताः । न ह्यस्मत्सदृशोऽन्याः सन्ति । अतोऽस्मान् यदि प्रार्थयिष्यति, तदा रसं दास्याम इति मानयुक्ता जाताः । भगवद्धर्मास्तासु समागताः । तथा सति यथा प्रार्थनया पूर्वं भगवान् वशे जातः, एवं वयमपि भविष्याम इति । रसार्थमेवैवं भावः, न तु दोषरूपः, भगवद्भावात् ॥ ४७ ॥

भगवांस्तु ऐक्येनैव रसं प्रयच्छन् बहिस्तिरोहितो जात इत्याह तासामिति ।

**तासां तत्सौभगमदं वीक्ष्य मानं च केशवः ।**
**प्रशमाय प्रसादाय तत्रैवान्तरधीयत ॥ ४८ ॥**

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षड्विंशोऽध्यायः ॥ २६ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ङ्गेष्विति । सङ्ख्यातात्पर्यमुक्तम् । आधिदैविकमिति । उपाधिभूतस्योदारहासेत्यनेन सम्पादितस्य विकारवत्त्वेपि विकाराणामपि स्वरूपात्मकत्वाद्वस्तुत आधिदैविक एवेत्यर्थः । गोपीः रमयाञ्चकारेति परस्मैपदेन गोपिकागामिफलमुक्तमित्याशयेनाहुः गोपीनामिति । पूर्वश्लोके रेमे इतिपदेन स्वनिष्ठं फलमुक्तमिति भावः । प्रथमश्लोके सामान्यलीलोक्तस्य रमणस्यातिदेशेनात्रापि प्राप्तिसम्भवेन हसितानि कृतवानित्येतावतैव चारितार्थ्येपि पुनः सर्वान्ते रमयाञ्चकारेति कथनमन्यव्यावृत्तितात्पर्यकमित्याशयेनाहुः सुखमेवेति । व्यावर्त्यमाहुः नत्विति । लोकन्यायेन कामान्तेन हेतुना विरतिः प्राप्ता, सा निषिध्यते इत्यर्थः ।

एवमित्यत्र । भगवतः सकाशाल्लब्धकामाः आत्मानं मेनिरे इति समभिव्याहारात् स्वत एव लब्धकामं मेनिरे इत्यर्थः सम्पन्नस्तमाहुः आत्मानमेव पूर्णमिति । अत्र मानस्य वाच्यार्थत्वादेवं व्याख्यातम् । नहि नायकनैरपेक्ष्यं विना स्त्रीभ्य आधिक्यज्ञानमात्रेण मानो भवतीति भावः । अत एवाग्रिमश्लोके द्वयोरनुवादः ।

---

४७. आम महात्मा भगवान् कृष्णथी मनोरथ प्राप्त थयलो छे जेमनो एवो ते मानवाळी थईने पृथ्वी उपर तथा स्त्रीओमां पोताने अधिक मानवा लागी.

मानः पूर्णता च न दोषाय। स्त्रीपु भूमौ च यदाधिक्यज्ञानं स दोषो भवति । तदनूद्य तत्परिहारार्थं तिरोहित इत्याह । तासां तत्प्रसिद्धं पूर्वोक्तं सर्वोत्तमत्वलक्षणं सौभाग्यमदं वीक्ष्य, तस्य मदस्य प्रशमाय अन्तरधीयत । ननु भगवद्रमणेन हि तासामेवं भावः, अतः स्वकृत एवेति कथं तिरोधानं कृतवानित्याशङ्क्याह । वीक्ष्य मानं च प्रसादाय तत्रैवान्तरधीयतेति । मानापनोदनं कर्तव्यम्। मानस्त्वान्तरः । अशक्तो हि बहिरपनोदनार्थं यत्नं करोति । चकारात् स्वधर्मे च । अतः प्रसादाय, प्रथमतस्तासाम्, पश्चात् स्वस्य च । तत्रैव गोपिकासु यूथमध्ये वा अन्तर्धानं प्राप्तवान् । नन्वेतत् द्वयमपि न कर्तव्यम्, उपेक्षिताः कुतो नेति चेत्, तत्राह केशव इति । यथा रजोगुणं ब्रह्मणो निवार्य, तस्मै मुक्तिं दत्तवान्, यथा वा शिवस्य तमोगुणं निवार्य, एवमेतासामपि मदं मानं च निवार्य, मुक्तिं दातुं तथा कृतवानित्यर्थः । कायिकतिरोभावोऽयम्, प्रथमाधिकारित्वाद्गोपीनाम् ॥ ४८ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे षड्विंशाध्यायविवरणम् ॥ २६ ॥**

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तासामित्यत्र । सौभगमदं वीक्ष्य प्रशमायान्तरधीयत, मानं च वीक्ष्य प्रसादायान्तरधीयत । तथा च मदस्यैव दोषत्वात् प्रशमनम्, न तु मानस्य । भगवद्धर्मत्वेनादोषत्वात् । एवं विभज्यान्वयमभिप्रेत्याहुः मानः पूर्णता चेति। पूर्णताया मानहेतुत्वान्मूलेऽन्तर्धानहेतुत्वेन स्पष्टं द्वयमेवोक्तमिति भावः । एवं भाव इति । मद इत्यर्थः । तावदेव न स्थितम्, किन्तु मानोपि जातः, सच रमणप्रतिबन्धकः । अतस्तदपनोदनार्थं तिरोधानमावश्यकमित्याशयेनाहुः मानापनोदनमिति। स्वधर्मे चेति। पूर्णतामित्यर्थः । प्रसादायेति । प्रार्थनाया वशे भविष्याम इति तद्भावस्य विवृतत्वादन्तःप्रविश्य प्रार्थनया बहिःप्रकारविलक्षणयाऽनिर्वाच्यया तासां वशीकरणार्थमित्यर्थः । पश्चात्स्वस्येति । तृतीयाध्यायोक्तप्रार्थनया ताभिः कृतया स्वस्य वशीभावार्थमित्यर्थः । तत्रैवेत्येवकारेण यत्र मदमानयोरनुत्पत्तिः, तत्र बहिः स्थितिरपीत्याशयेनाहुः यूथमध्ये वेति। तादृशयूथे एवान्तर्हितः । तद्विजातीयभावत्वेन यूथबहिर्भूतायास्तु निकटे बहिरपि स्थितः । अत एव 'यां गोपीमनय' इत्यग्रे वक्ष्यत इति भावः । द्वयमपीति । मदप्रशमनं मानापनोदनं चेत्यर्थः । प्रथमाधिकारित्वादिति । तामसत्वादित्यर्थः । तामसानां बहिःप्रकटं स्वरूपमेव मुख्यमिति प्रकरणादौ 'लौकिकं तामसे मुख्य'मित्यनेन निरूपितम् । अत आद्यमहिष्या इव वाचिकतिरोधानेन द्वितीयदलानुभवो न भवति । अत एव स्वागतमित्यादिवाक्यैस्तथा न सम्पन्नमतः कायिकतिरोभाव इत्यर्थः । षड्विंशाध्यायव्याख्या समाप्ता ।

---

४८. तेमना ते सौभाग्यमद तथा मान जोईने तेनुं निवारण करवाने तथा प्रसादनुं दान करवाने त्यांज केशव अन्तर्धान थया.

## सप्तविंशोऽध्यायः ।

स्वानन्दस्थापनार्थाय लीला भगवता कृता ।
स बाह्यो जनितः पुष्टो यथान्तर्निविशेत्पुनः ॥ १ ॥
तदर्थं भगवांस्तासु लीलया सहितोऽविशत् ।
चत्वारोऽत्र निरूप्यार्थाः रसासक्तिर्हरेः क्रियाः ॥ २ ॥
गर्वाभावश्च तत्रादौ निरूप्यन्ते क्रमात्त्रयः ।
उद्देशतो लक्षणतः फलतश्च यथायथम् ॥ ३ ॥
सप्तविंशे तिरोधानाल्लीलान्वेषणतत्पराः ।
रसमन्तर्गतं चक्रुर्गोपिका इति रूप्यते ॥ ४ ॥

पूर्वाध्यायान्ते भगवतस्तिरोभाव उक्तः, ततस्तदनन्तरं प्रथमतः तासां रसासक्तचित्तानामापाततो महांस्तापो जात इत्याह अन्तर्हिते भगवतीति ।

श्रीशुक उवाच—**अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।**
**अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥ १ ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

सप्तविंशाध्याये कारिकासु । सार्धेन पूर्वाध्यायार्थकथनम् । बाह्याभ्यन्तरप्रकारेणात्मना लीलोक्तेत्यर्थः । अन्तःपुष्टः सन् देहेन्द्रियादिषु पुनर्निविशेदिति टिप्पण्यर्थः । बाह्यप्रकारेणात्मना लीलायां प्रविष्टोपि आन्तरलीलायां पुनरविशदित्यर्थः । लीलया सहित इति । अन्तःप्रविष्टस्य भगवत्त्वकथनेन लीलासाहित्यं ज्ञापितम् । अत्रेति । आन्तरलीलायामित्यर्थः । गर्वाभाव इति । गर्वोऽहङ्कारस्तदभावः । स्वरूपपरिग्रहे 'असावहं'मित्यादिरूपा कृष्णता स्फुरति, नत्वहन्तेति भावः । आदाविति । अस्मिन्नध्याये इत्यर्थः । लीलेति । लीलायां अन्वेषणे च तत्परा इत्यर्थः । भगवदावेशस्तु स्वत एव जायते इत्येतत्सम्पाद्यत्वेन द्वयमेवोक्तम् । अन्तर्गतमिति । भगवत्कर्तृका आन्तरलीला पूर्वमुक्ता, स्वामिनीकर्तृकास्मिन्नध्याये उच्यते इति विभेदः ।

तत इति । तिरोभावाद्धेतोरित्यर्थः । एतेन तापे हेतुर्भगवन्निष्ठो निरूपितः । एतन्निष्ठं हेतुमाहुः रसासक्तचित्तानामिति । रसासक्तिर्हेतुरित्यर्थः । मूलेऽयं हेतुरर्थापत्त्या ज्ञेयः । तर्हि लक्षणतो निरूपणमेव रसासक्तेः सिद्धमिति उद्देशतो निरूपणमुक्तं विरुध्येतेत्यत आहुः आपातत इति । अचिरस्थायित्वादुद्देशत इत्युक्तमित्यर्थः । अग्रिमश्लोकेप्येवमेव ज्ञेयम् । जात इति । महान् जात उद्बुद्धो जात इत्यर्थः । नन्वन्तर्लीलाविशिष्ट-

---

१. भगवान् अन्तर्धान थया के तरतज, जेम हस्तिनीओ हस्तीने न जोता ताप पामेछे, तेम व्रजांगनाओ क्लेश पामवा लाग्या.

भगवति अन्तःप्रविष्टे षड्गुणैश्वर्यसहिते यावदन्तरनुसंधानं न कृतवत्यः, तावत् सहसैव अकस्मादतप्यन् । अन्तर्विचाराभावे हेतुः व्रजाङ्गना इति । तापे हेतुः तमचक्षाणा इति । तापः सहज एव स्थितः कामात्मा तद्दर्शनस्पर्शादिभिः शान्तो भवति । यदा पुनः पूर्वसिद्धं बहिर्दर्शनं न जातम्, तदा तत्ताप उचित एव । तासां स्पर्श एव मुख्य इति ज्ञापयितुं दृष्टान्तमाह करिण्य इवेति । यूथपो महामत्तगजः । 'रतिं गज एव जानाती'ति वात्स्यायनः । 'रत्यां विमर्दे गज' इति विवृतश्च । सन्ति च सिंहाः, तथात्र कालः । अतः करिणीनां यूथपादर्शने महानेव क्लेशः ॥ १ ॥

यदा पुनः स तापः अन्तःप्रवेष्टुमैच्छत्, तावता भगवल्लीला अन्तःप्रविष्टा तापं दूरीकृत्य स्वयमेवाविर्भूतेत्याह गत्येति ।

**गत्यानुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः ।**
**आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः ॥ २ ॥**

ता भगवदीयैः कायवाङ्मनोभिः वशीकृताः तद्भावमापन्नाः तास्ता एव भगवच्चेष्टा

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

भगवत्प्रवेशे कथमुद्बोधः सम्भवतीत्यत आहुः यावदिति । व्रजाङ्गना इतीति । एतासां बहिःप्रकटमेव रूपं मुख्यमित्यन्तर्विचारो नास्ति येनान्तःस्थित्या तापोद्बोधः प्रतिबध्येतेत्यर्थः । तापे हेतुरिति । उपपाद्यते इति शेषः । 'अन्तर्हिते भगवती'त्यनेनोक्तस्तिरोभावरूपो हेतुः, 'तमचक्षाणा' इति पदेनोपपाद्यते इत्यर्थः । तापः सहज इति । तथाच तिरोभावस्य प्रतिबन्धाभावत्वेनैव कारणत्वम्, अभावस्य साक्षात्कारणताऽसम्भवादित्यर्थः । दर्शनस्पर्शनादिभिरिति । लीलया शान्तिर्भवति । अत एवाग्रिमश्लोके तथा वक्ष्यत इत्यर्थः ।

शान्तिरपि यावत्कारणमेव तिष्ठतीति भावेनाहुः यदा पुनरिति । अन्तः प्रवेष्टुमैच्छदिति । स्वप्रौढ्या अन्तः विचारमपि सम्पाद्य तत्र स्थिते स्वरूपलीले चोपमर्द्यान्तरप्युद्बुद्धो भवितुमैच्छदित्यर्थः । तत्तु विपरीतं जातमित्याहुः तावतेति । भगवत्सहभावेनान्तःप्रविष्टोक्ता या लीला सा तावता बहिःस्थितमपि तापं दूरीकृत्य बहिरपि स्वयमेवाविर्भूता, बहिस्तापोपि शान्त इत्यर्थः । सूर्योदयात्पूर्वं तदनुभावेनैव तमोनिवृत्तिरिव तापनिवृत्तिरिति सूचयितुं दूरीकृत्याविर्भूतेत्युक्तम् । व्याख्याने । भगवदीयैरिति । एतैः पूर्वमेवाक्षिप्तचित्ता वशीकृता इति चेष्टाग्रहणे हेतुः । तद्भावमिति । भगवद्भावमित्यर्थः । तदात्मिका इत्यस्यार्थोयम् । तास्ता एवेति । भगवदीयकायवाङ्मनश्चेष्टा इत्यर्थः । कटाक्षाणामैन्द्रियकत्वेपि भावोद्बोधकत्वाद्भावप्राधान्यान्मनश्चेष्टात्वमित्यभिप्रेत्य मनसः

२. प्रभुना कायिक चेष्टाथी, स्नेहपूर्वक स्मितथी, विलासयुक्त कटाक्षथी, मनोरम आलाप, विहारविलासोथी आक्षिप्त थयलुं छे चित्त जेमनुं एवां ते तदात्मिक प्रमदाओ गोपीजनो रमापतिनी ते ते लीलानुं ग्रहण कर्युं-अनुकरण करवा लाग्या.

जगृहुः । प्रथमतः कायिकीमाह । गत्या कायचेष्टया वशीकृताः । तत इन्द्रियसहितमनश्चेष्टया वशीकृता जाता इत्याह अनुरागेति । अनुरागः स्नेहो मानसः, तत्पूर्वकं स्मितम्, तस्य विलासः स्वनिष्ठतात्याजनार्थः । अन्यथैवं सति ज्ञानमेवोदयं प्राप्नुयात् । अतः स्मितेन मन्दहासेन ईषद्विमोहिताः, न बहिर्गताः, नान्तःस्थिताः, किन्तु भगवति मध्ये स्फुरिते तद्धर्मेषु च समागताः । अनुरागस्मितेन सहितो यो विभ्रमो विलासः अलसवलितादिः तत्सहितानीक्षितानि, सर्वे एव कटाक्षाः । वाचिकैरपि विमोहमाह मनोरमालापेति । मनो रमयतीति, मनसि रमते इति वा, मनोरमः, योऽयमालापः, भगवतो गुह्यभाषणानि, केवलवाक्यस्य चित्ताक्षेपकत्वं न भविष्यतीति प्रामाण्यावधारणं स्त्रीणां प्रकारान्तरेण न भवतीति फलमेवादौ निरूपितम् । सुखार्थं हि भगवद्वाक्यानि तदानीमेव च सुखमुत्पादयन्ति । ते चालापाः क्वचिद्वन्धादिबोधका लीलोपयोगिन इत्याह विहार इति । तत्रापि विलासाः अवान्तरभेदाः, यथोत्तानके ग्राम्यादयः । तैः पूर्वकृतैः तमःसत्त्वरजोरूपैः त्रिविधमपि चित्तमाक्षिप्तमिति आक्षिप्तचित्ता जाताः । अतस्तापं न प्राप्तवत्य इति भावः । प्रमदा इति । (बाह्याभ्यन्तराननुसन्धानेहेतुभूतोत्युत्कटरसभावोऽत्र मदपदेनोच्यते । तेन प्रभुलीलाविष्करणं युक्तमिति भावः । किञ्च, ) प्रमदाः प्रकृष्टो मदो यासां स्वभावत एव, अन्यथा दासभावान्न प्रच्युताः स्युः । तदा केवलभगवतः लीला स्वानुपयोगिनी साम्प्रतं च नानुभूतेति रमापतेर्लक्ष्मीपतेः, लक्ष्म्या सह विलासरूपां चेष्टां जगृहुः । एकस्या अपि यद्वचश्चेष्टा इति तास्ता

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

प्राधान्यमाहुः इन्द्रियसहितमनश्चेष्टयेति । तस्य विलास इति । साहित्यस्य व्याख्यास्यमानत्वादत्रापि सम्बन्धमात्रविवक्षायां साहित्यमेव षष्ठ्यर्थो ज्ञेयः । स्मितसहितो विलासः ईक्षितानामिति शेषः । अन्यथेति । स्मितेन स्वरूपनिष्ठतात्याजनाभावे रसानुभव एव स्यादित्यर्थः । अयं ज्ञानपदार्थोऽग्रिमाध्याये टिप्पण्यां वक्ष्यते । अत इति । स्वनिष्ठतायां ज्ञानोदयस्य प्राप्तत्वादित्यर्थः । ईषन्मोहनकार्यमाहुः न बहिरिति । न धर्ममात्रनिष्ठाः, नापि स्वरूपमात्रनिष्ठाः, किन्तु भगवति धर्मेषु चोभयत्र समागताः उभयनिष्ठा जाताः । स्वरूपान्तर्गतैरेव धर्मैश्चित्ताक्षेपो जातो, नतु मर्यादामार्गीयैः स्वरूपमात्रेण वा । तथा च पूर्वोक्ता स्वनिष्ठता निवृत्तैवेति भावः । विभ्रमः कटाक्षभेदस्तद्युक्तानि दर्शनानि कटाक्षा इत्यर्थः । विभ्रमपदस्य तात्पर्यमाहुः सर्वे इति । प्रामाण्यावधारणमिति । त्वं मत्प्राणप्रियेत्यादिवाक्यानां प्रामाण्यावधारणं तदैव सुखानुभवाभावे न भवतीत्यर्थः । ते चालापा इति । तथा चालापसहितैर्विहारविभ्रमैरित्यर्थः । आभासे स्वयमेवेत्येवकारेणोक्तां तापाप्राप्तिमुपसंहरन्ति । अतस्तापमिति । गत्यादिना चित्ताक्षेपादित्यर्थः । किञ्चेति । चित्ताक्षेपात् प्रमदाः स्वभावतश्च प्रमदा इति समुच्चयः । केवलेति । गोचारणादिलीलेत्यर्थः । साम्प्रतं चेति ।

१. विहारनर्मं प्रभूणाम् ।

उक्ताः । नन्वीश्वरधर्माविष्करणं दासीनां निषिद्धमिति चेत्, तत्राह तदात्मिका इति । भगवानेवात्मनि यासाम्, तथात्वेन स्फुरितः । अतो भगवल्लीलाग्रहणं तापनिवारकत्वेनोद्देशत उक्तम् । विस्तरमग्रे वक्ष्यति । क्रमहेतुत्वं च वक्ष्यामः ॥ २ ॥

ततो भगवतः स्वरूपपरिग्रहो जात इत्याह गतिस्मितेति ।

**गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः ।**
**असावहं त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णविहारविभ्रमाः ॥ ३ ॥**

धर्माश्चेत् स्वस्मिन् समागताः, तदैकत्रोभयधर्मा विरुद्धा इति भगवति स्वधर्मानारोपितवत्यः । कायवाङ्मनसां दृष्टेश्च चत्वारः प्रधानधर्माः । तेषु सर्वेष्वेव प्रतिरूढा मूर्तिर्यासाम् । *भगवद्धर्मेषु स्वमूर्तिरारोपिता । अन्यथा अन्योऽन्यधर्माभिनिवेशाभावे सम्यक्* विलासो न स्यात्, तदाह । गतिः कायिकी, स्मितं मानसम्, प्रेक्षणमैन्द्रियकम्, भाषणं वाचिकम्, तदादयो यावन्तो विभ्रमाः बन्धादयः रतिरूपा एव । तेषु सर्वेष्वेव प्रियस्य सम्बन्धिषु स्वयं प्रियाः भोगावस्थामेव प्राप्ताः विपरीता जाताः । 'रसाधिक्ये स्त्रियः पुरुषत्वमापद्यन्त' इति वात्स्यायनः । अत एव स्वयं प्रियायोग्याः प्रतिरूढा विपरीततया

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अव्यवहितपूर्वकालमेता एवानुभूताः । रमायां या लीलाः करोति, ताः शृङ्गारप्रकारिका इत्यर्थः । व्याख्याने । चेष्टामिति जात्यपेक्षयैकवचनम् । तथात्वेनेति । लीलाकर्तृत्वेनेत्यर्थः । उद्देशत इति । शृङ्गारमात्रलीलाग्रहणमित्यर्थः ।

गतिस्मितेत्यस्याभासे । तत इति । धर्मग्रहणानन्तरं स्वरूपपरिग्रहो जात इति हेतोरसौ कृष्ण इति ज्ञानमाहेत्यर्थः । स्वरूपपरिग्रहं विवृण्वन्तो भगवत्येतद्धर्मारोपणमुपपादयन्ति धर्माश्चेदिति । स्वस्मिन् समागताः सङ्गताः स्वमूर्तेस्तत्रारोपात् स्वसम्बद्धा इत्यर्थः । एकत्रेति । एकमूर्तौ उभयधर्मा विरुद्धा इत्यर्थः । तथा च मूले धर्मेषु स्वमूर्त्यारोपकथनेन भगवन्मूर्तौ स्वधर्मारोपोऽप्युक्त इति भावः । भगवतीति । एतेन भगवन्मूर्तौ स्वधर्मारोप उक्तः । तथाच स्वयं तथा कुर्वन्तीनामपि प्रिय एव नायिकावत् करोतीति भावनमिति भावः । भगवद्धर्मेषु स्वमूर्त्यारोपमाहुः कायेति । तथा च भगवन्मूर्तौ भगवद्धर्मेषु च स्वधर्माणां स्वमूर्तेश्चारोपः स्वरूपपरिग्रह इत्यर्थः । अत्र स्वयं नायकवत् कुर्वन्तीनामपि प्रियः स्वयमेवैवं करोतीति भावनम् । तथा च स्वत्वं नास्त्येवेति भावः । पूर्वश्लोके स्वस्मिन् लीलावेशः । तथा च स्वभानं स्थितमिति विभेदः । अन्योन्येति । स्वगतौ प्रियगतित्वं प्रियगतौ स्वगतित्वमित्यर्थः । विपरीततयेति । भगवद्धर्मेषु स्वमूर्त्या-

---

१. प्रियाओ प्रियप्रभुनां गति, स्मित, प्रेक्षण, भाषण आदिमां पोतानुं स्वरूप आरोपण करीने अबलाओ तदात्मक थयली, कृष्णवत् विहार अने विलास करता 'हुं कृष्ण छुं' एम निवेदन करवा लागी.

आरूढा मूर्तयः स्वरूपाणि यासामिति। तत्र यासां भगवानल्पव्यवहितः पूर्वमासीत्, ताभिर्भगवत्प्रश्ने कृते, अन्तर्हिताज्ञानात् तत्रोत्तरवत्र्यो भवन्ति। 'असौ कृष्णः' 'अहं कृष्ण' इति। अथवा। योऽन्विष्यते, सोसावहमिति। अन्यासां प्रतीत्यर्थं नटः कपटवेपं कृत्वापि वदति क्रीडायाम्, तथा न, किन्तु स्वत एवेत्याह अवला इति। अवलाः स्त्रियः भगवद्रूपाविष्कारे च चलरहिताः। स्पष्टवैलक्षण्यं च स्त्रीपुरुषयोः। तथा कथने प्रतारकत्वमालक्ष्याह तदात्मिका इति। न केवलं धर्म्यापत्तिः, किन्तु तद्धर्माणामपीत्याह। कृष्णवत् विहारः कायवाङ्मनोव्यापारः, विभ्रमाः तत्रत्या विलासाः यासाम्॥ ३॥

एवं तापलीलाभगवतामुद्देशतस्तासु सम्बन्धमुक्त्वा प्रथमं तापनिवृत्त्यर्थं अन्वेषणं कृतवत्य इत्याह। गुणानामिव त्रयाणामेषामन्योन्योपमर्दनेन भगवदिच्छयाविर्भाव इति न परस्परकार्यप्रतिबन्धकता आपाततः। अतो यदा प्रपञ्चसम्वेदनम्, तदा पृष्टवत्य इत्याह गायन्त्य इति। प्रथमतो मिश्रभावात् गायन्त्यो जाताः।

**गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम्।**
**पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन्॥ ४॥**

शब्दो हि धूमवल्लोके बाह्याभ्यन्तरयोगतः।
विराजते विनिर्गच्छन् तारतम्यं च गच्छति।
अतोऽत्र धर्मिधर्माणामाधिक्याज्ज्ञानमुत्तमम्॥ १॥
यथा भगवतो गानात् स्वयमागत्य संगताः।
एवं स्वयं भगवत आगत्यर्थं जगुः स्फुटम्॥ २॥
कृत्रिमत्वात्तु भावस्य मिलिताश्च स्वतोऽन्यतः।
ततो विशेषविज्ञानात् तिरोभावोऽस्फुरत् स्फुटः॥ ३॥

तदा विचिक्युः क भगवानस्तीत्यन्वेषणं कृतवत्यः। तत्रापि न सर्वात्मना तिरोभावः स्फुरित इति अन्वेषणेऽपि अनियतवृत्तयो जाता इत्याह उन्मत्तकवदिति। अज्ञात उन्मत्त

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख ।

रोपे भगवानिव कुर्वन्त्यो जाता इत्यर्थः। तथापि प्रिय एवैवं करोति, स्वत्वभावनं तु नेति ज्ञेयम्। धर्म्यापत्तिरिति। भगवद्धर्मेषु स्वमूर्त्यारोपणे स्वस्य भगवत्त्वमेव सम्पन्नमिति भावः। तद्धर्माणामिति। स्वधर्माणां भगवत्यारोपणे तेषां भगवद्धर्मत्वं सम्पन्नम्। स्वगतिः प्रियगतिरेवेति। अतस्तद्वदेव विहारादिरिति भावः।

गायन्त्य इत्यत्र। अज्ञात इति। यस्योन्मादो ज्ञातो न भवति। कदाचिदन्यथा

---

४. एकठा मळीने उंचेथी प्रभुनां ज गीत गाता उन्मत्तनी माफक एक वनमांथी बीजा वनमां प्रभुने शोधवा लाग्यां. अने आकाशनी पेठे अंदर अने बहार सर्वत्र भूतप्राणीओमां रहेला पुरुषने उन्मत्तनी माफक वनस्पतीओने पूछवा लाग्यां.

उन्मत्तकः, कुत्सितो वा । स यथा स्वपरविवेकं न जानाति, वस्त्रादिरहितश्च भवति । एवमवस्थां प्राप्ताः । एकस्माद्वनात् वनान्तरं गताः । किञ्च, न केवलमन्वेषणमात्रम्, किन्तु उन्मत्तकवत् पृच्छन्ति स्मेत्याह पप्रच्छुरिति । शुको हि भगवत्स्वरूपाभिज्ञः आनन्दमात्रकरपादमुखोदरादिं कृष्णं सर्वत्रैव विद्यमानं पश्यति । यदि भक्तिसहितं ज्ञानमाविर्भवति, तदा अन्योऽपि पश्यति । सर्वत्रैव तिरोधाननाशात् । तादृशमेताः परिच्छिन्नं मत्वा पृच्छन्तीति तासामज्ञानकथनार्थमाह आकाशवदन्तरं बहिर्भूतेषु सन्तमिति । बाह्याभ्यन्तरविवेकहेतुराकाश इति पूर्वं निरूपितम् । तद्वदेवायमपि । अत एवाकाशस्य ब्रह्मलिङ्गत्वम् । एतादृशं सर्वत्रैव विद्यमानमदृष्ट्वा, आत्मनि विचारं त्यक्त्वा, चेतनांश्चापृष्ट्वा, स्थावरान् पृच्छन्ति । वनस्पतीन् पप्रच्छुरिति । ते हि वैष्णवा इति । मूढा अपि वैष्णवा एव हि विष्णुगतिं जानन्ति, नत्वत्यन्तं निपुणा अप्यवैष्णवाः ॥ ४ ॥

तत्रापि प्रथमं विष्णुब्रह्मशिवतां लोके प्राप्ताः अश्वत्थप्लक्षवटास्तान् पृच्छन्ति दृष्ट इति ।

**दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः ।**
**नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः ॥ ५ ॥**

अश्वत्थो हि वैष्णवो वृक्षः, विष्णुवत् लोके सन्मानमर्हतीति प्रायेणायं ज्ञास्यति, तथाप्ययं स्तब्धः स्वोत्तमभावनया न ज्ञास्यतीति तदर्थं हेतुभूतं नामाह । अश्वस्तिष्ठत्यस्मिन्निति अश्वत्थः । लोकास्त्वश्वे तिष्ठन्ति, अस्मिंस्त्वश्वस्तिष्ठतीति । 'अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठत्' इति श्रुतेः । तर्हि प्राजापत्योऽश्वत्थ इति तदपेक्षया प्राजापत्यो वृक्षः प्रष्टव्य इति प्लक्षं पृच्छन्ति प्लक्षेति । तत्रापि तस्याज्ञानं नाम्ना वदन्ति । अयं हि मनुष्याणामज्ञानार्थं पाविञ्यक्षारणादुत्पन्नः अपवित्रः लोकानामज्ञानहेतुरेव । अतः कथं वक्ष्यतीति । 'पशुना वै देवाः स्वर्गं लोकमायन्, तेऽमन्यन्त मनुष्या नो त्वा भविष्यन्तीति, तस्य शिरश्छित्त्वा मेधं प्राक्षारयन्, स प्लक्षोऽभव' दिति श्रुतेः । तर्हि कर्मसम्बन्धरहितः वैष्णवधर्मोपदेष्टा शिवः प्रष्टव्य इति तद्रूपं न्यग्रोधं पृच्छन्ति न्यग्रोधेति । तस्यापि दूषणम् । नितरामग्राण्यधो यस्येति । अतोऽन्ते हीनभावं गच्छतीति अग्रे गमने हेतुर्भविष्यति । वः युष्माकं सम्बन्धी भवद्भिः किं दृष्टः । प्रश्नसम्भावनायां कच्चिदिति । दृष्टोऽस्माभिः पूर्वम्,

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

वदति, कदाचिन्नेति । तथात्रापि कदाचिदन्वेषणम्, कदाचिन्नेत्यर्थः । मूले विचिक्युरित्युक्त्याऽन्वेषणमेव वाक्यार्थ इति तदभावोऽशक्यवचन इत्याशयेनाहुः कुत्सितो वेति ।

दृष्ट इत्यत्र । तृतीयान्ते वसादेशासम्भवात् व इति षष्ठ्यन्तं व्याचक्षते वः युष्माकं सम्बन्धीति । सम्बन्धमेव विवृण्वन्ति भवद्भिः किं दृष्ट इति । स्वकर्तृकदर्शनविषयतासम्बन्ध इत्यर्थः । तथा च मूले व इति कर्तरि न लोकाव्ययेति निषेधेपि सम्ब-

५. हे अश्वत्थ (पीपळा), हे प्लक्ष (पीपर), हे न्यग्रोध (वड) अमारा संबंधीने कांई जोया छे ? ए नंदसुत, प्रेमपूर्वक हास्य सहित दृष्टिपातो करीने अमारां मन चोरी लईने गया छे. १ युष्माभिरिति पाठः ।

सर्वदैव वा, ततः किं भवतीनामिति चेत्, नो मनः हृत्वा गत इति । ननु स विष्णुः कथं चौर्यं करिष्यतीति, तत्राहुः नन्दसूनुरिति । नन्दस्य चेत् पुत्रो जातः, तदा तत्कार्यं कर्तव्यम् । ते हि दधिदुग्धादिचौर्यं कुर्वन्ति । अतो मनश्चौर्यमपि नात्यन्तं विरोधि । भर्तृनामाग्रहणं वा । अत एव हरणपर्यन्तं प्रभुपुत्र इति न ज्ञातः । अन्यथा भोगं परित्यज्य कथं गच्छेत् । नन्वन्तःस्थितं मनः कथं गृहीतमित्याशंक्य, त्रिविधं मनः त्रिभिरपि धर्मैर्गृहीतवानित्याह प्रेमहासावलोकनैरिति । प्रेमपूर्वकहास्यसहितान्यवलोकनानि मनोहराणि । तमोरजःसत्त्वभावा उक्ताः । प्रेम्णा अन्तःप्रवेशः, हासेन ग्रहणम्, अवलोकनेन हरणमिति ॥५

तेषामनुत्तरं मत्वा, एते अमुख्यफला महान्तोऽपि काकसेव्या एवेति, ये महान्तः पुष्पवन्तः सुगन्धाः, तान् पृच्छाम इति कुरवकादीन् पृच्छन्ति कच्चिदिति ।

**कच्चित् कुरवकाशोकनागपुन्नागचम्पकाः ।**
**रामानुजो मानिनीनां गतो दर्पहरस्मितः ॥ ६ ॥**

कुरवकाशोकौ कामोद्दीपकौ । एते कामबाणपुष्पाः । नागो नागकेसरः, पुन्नागश्चम्पकश्च अतिसुगन्धपुष्पाः । ते हि कामिनं व्यावर्तयन्ति । अतः पश्चाप्येते ज्ञास्यन्तीति । रामानुजः कच्चिद्भवद्भिर्दृष्ट इति पृच्छन्ति । पूर्ववदेव प्रयोजनकथनम् । मानिनीनां दर्पहरं स्मितं यस्य । व्यर्थमेव गतो भगवान्, स्मितमात्रेणैव दर्पो गच्छति, किं गमनेन । भयं तु नास्त्येव, यतो रामानुजः बलभद्रभ्राता, भर्तृनाम न ग्राह्यमिति । वयं सर्वा एव मानिन्यः स्थिताः । अतोऽस्मद्दर्पदमनार्थं गतः । प्रायेणैतैर्न दृष्टः । कुत्सितरवात् कं सुखं यस्य । रोदनप्रियोऽयम् । अशोकश्च शोकनाशक एव, न तु कस्यचित् सुखं प्रयच्छति । नागोऽयं नाम्नैव भयानकः । गजपक्षेऽपि पुंसामपि नागः । चम्पकोऽपि परिणामविरसः । अफलाश्चैते ॥ ६ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख. ।

न्धमात्रविवक्षया शेषषष्ठीति भावः । नन्दसूनुर्गत इत्यत्र । द्वितीयपक्षे नन्दसूनुपदतात्पर्यमाहुः अतएवेति । ज्ञातो न, परन्तु भवति चोर एवेत्यर्थः । अन्यथेति । चोरत्वाभावे इत्यर्थः । तमोरज इत्यस्य टिप्पण्याम् । यादृशमिति । यत्प्रकारप्रधानमित्यर्थः । तादृश्येति । तत्प्रकारप्रधानयेत्यर्थः । त्रयसत्त्वेपि तमःप्रधानं यस्या मनस्तस्या मनः प्रेमप्राधान्येन हरति । एवमन्ययोरपि । सुबोधिन्यां सामान्यतो विभागमाहुः प्रेम्णेति ।

महान्त इति । वक्ष्यमाणाश्चूतादयो मुख्यफला इत्यर्थः । पुष्पेति । तादृशाः सन्तः सुगन्धाः कुरवकादयो यूथिकान्ता इत्यर्थः । कामबाणपुष्पा इति । कामबाणाः पुष्पाणि येषां तादृशा एते कुरवकादिवृक्षा इत्यर्थः । भयं त्विति । रमणाधिकरणस्य क्रियाशक्तिप्रधानस्य भ्रातृत्वाद्रसच्युतिभयं नास्तीत्यर्थः । अफलाश्चैते इति । अनुपदोक्ता दोषा अफलत्वं च दोष इति चकारः ।

---

६. हे कुरबक, हे अशोक, हे नाग, हे पुन्नाग, हे चंपक, स्मितमात्रथी मानिनीओना गर्व हरनार बलदेवजीना नानाभाई ( अहींथी ) काई गया ?

पूर्वोक्तास्त्वपुष्पाः, एते अफलाः। फलपुष्पाभ्यां नानाविधविनियोगसंभवादज्ञानं मत्वा, तुलस्यास्तदुभयं नास्तीति भगवदीयत्वेन प्रसिद्धां पृच्छन्ति कच्चिदिति।

कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये।
सह त्वाऽलिकुलैर्बिभ्रत् दृष्टस्तेऽतिप्रियोऽच्युतः ॥ ७ ॥

तुलसीति सम्बोधनं सखीमिव मत्वा। सा चेत् पूर्वसम्बन्धस्मरणेन भक्तेव भगवन्तं भजेत्, तदा रसो न पुष्ट इति तां भगवत्पत्नीं मन्यमाना आहुः कल्याणीति। एवमपि सति भक्तिप्रधानेत्यस्मदाद्यपेक्षया उत्कृष्टेत्याहुः गोविन्दचरणप्रिय इति। किञ्च, तव दर्शने उपायोप्यस्ति। त्वत्सजातीयस्य तत्र विद्यमानत्वात्। सजातीयो हि सजातीयं मार्गस्थं दृष्ट्वा गच्छति। तदाहुः। अलिकुलैः सह त्वा त्वां बिभ्रत् दृष्ट इति। किञ्च, ते भगवानत्यन्तं प्रियः, यद्यनेन मार्गेण गतः स्यात्, अवश्यं त्वया दृष्टः स्यादिति॥७॥

तत्राप्यरुचिं मत्वा, इयं सपत्नीवत् स्वोत्कर्षं ख्यापयन्ती कथमन्याभ्यो वक्ष्यतीति, साधारण्यः स्त्रिय एवास्माकमुपकारिण्य इति, ताः पृच्छन्ति मालतीति।

मालत्यदर्शि वः कच्चित् मल्लिके जाति यूथिके।
प्रीतिं वो जनयन् यातः करस्पर्शेन माधवः ॥ ८ ॥

हे मालति, वः युष्माभिः प्रत्येकं नानारूपाभिः दृष्टः कच्चित्। तथैव मल्लिके, हे जाति, हे यूथिके। एताश्चतस्रो लताः अतिसुगन्धपुष्पाः भगवत्प्रियाः। अतः वः युष्माकं करस्पर्शेन प्रीतिं जनयन् पुष्पावचयं कुर्वन् माधवो लक्ष्मीसहितः। लक्ष्म्या सह तिष्ठति, अतस्तस्याः चूडाबन्धनार्थं पुष्पावचय आवश्यक इति ॥ ८ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

दोषान्तरमाहुः फलपुष्पाभ्यामिति। कच्चित्तुलसीत्यत्र टिप्पण्याम्। तूष्णीं तिष्ठेतेति। प्रकाशनस्थेयाख्ययोश्चेत्यात्मनेपदम्। स्वाशयं चरणसेवां प्रकाशयन्ती तिष्ठेतेत्यर्थः।

मालतीत्यत्र। वः युष्माभिरिति। अत्रापि पूर्ववद् इति षष्ठ्यन्तम्, तस्य विवरणं युष्माभिरिति। कर्तृत्वं सम्बन्ध इत्यर्थः।

---

७. हे तुलसि, हे कल्याणि, हे गोविंदचरणप्रिये, अलिकुल ( भ्रमरो )नी साथे तने धारण करनार ने तें क्यांई जोया? तने तो अच्युतप्रभु बहु प्रिय छे.

८. हे मालति, हे मल्लिके, हे जाई, हे जुई, हस्तस्पर्शथी तमने प्रीति उत्पन्न करता माधव गया ने तमे जोया?

ननु यद्यप्येताः स्त्रियः, तथाप्यफला इति, अल्पा इति, स्वार्थपरा इति, लक्ष्मीपक्षपातिन्य इति न वदिष्यन्तीति ज्ञात्वा आम्रादीनत्युत्तमान् वृक्षान् पृच्छन्ति चूतेति ।

**चूतप्रियालपनसाशनकोविदारजम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपाः ।**
**येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः॥९**

चूताम्रौ मधुराम्लप्रकृतिकौ । कालभिन्नफलौ वा । प्रियालस्तु बीजेप्यधिकरसयुक्तः । पनसो महाफलः । अन्ये चाशनादयो वृक्षाः पुष्पफलप्रधानाः । किं बहुना । अन्येऽपि ये मधूकादयः । परार्थमेव जन्म येषां ते परार्थभवकाः । किञ्च, यद्यपि सर्व एव वृक्षाः परार्थजन्मानः, तत्रापि ये यमुनोपकूलाः, यमुनाया उपकूले तपस्विन इव तिष्ठन्ति, ते ह्यवश्यं भगवन्तं पश्यन्ति बोधयन्ति च । अतः सदानन्दस्य पदवीं शंसन्तु । यथास्मद्धृदये समायाति । दयार्थमाहुः रहितात्मनामिति । केचित् गृहरहिताः धनरहिताः देहरहिता वा । वयं त्वात्मरहिता एव । अतः सर्वापेक्षया वयं दीनाः । अतः कृष्णपदवीमस्मदर्थे शंसन्तु ॥ ९ ॥

एवमतिविलापे दीनतायामाविष्कृतायां भूमौ भगवच्चरणारविन्दानि दृष्टानि, तद भूमिं स्तुवन्ति किं ते कृतमिति ।

**किं ते कृतं क्षिति तपो बत केशवाङ्घ्रिस्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ।**
**अप्यङ्घ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरम्भणेन ॥१०॥**

हे क्षिति । ते त्वया किं वा तपः कृतम् । अस्माभिरपि तपः कृतमेव, परं नैवं फलमनुभूतम् । सर्वथा पुण्यव्यतिरेकेण नेष्टसिद्धिः । सुतरां भगवल्लक्षणा । स्वस्य

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

स्वार्थपरा इति । चूतादिषु परार्थभवकत्वकथनेनैतास्वयं दोषः सूचित इति भावः । छायादिना परार्थता सम्पादका इत्यर्थः । लक्ष्मीपक्षपातिन्य इति । धनवतामेवैतदुपयोग इति भावः । चूतेत्यत्र भवका इति । परार्थौ भावौ येषामिति विग्रहः । शेषाद्विभाषेति कः । यथेति । येन शंसनप्रकारेण अस्मद्धृदये पदवी समायाति, अनेन मार्गेण गत इति ज्ञातं भवेदित्यर्थः ।

किं ते इत्यत्र । भगवल्लक्षणेति । भगवतो लक्षणं ज्ञानं यया तादृशी इष्टसिद्धि-

---

९. हे आंबा, हे प्रियाल ( रायण ), हे पनस, हे आशन, हे कोविदार, हे जांबुडा, हे अर्क ( आंकडा ), हे बिल्व, ( बीली ), हे बकुल, हे आम्र, हे कदंब, हे नीप, हे परार्थमाटे उत्पन्न थयला अन्य यमुनातटपरनां वृक्षो, आत्मरहित एवां अमने कृष्णपदवी बतावो

१०. हे पृथ्वि, तें शुं तप कर्युं छे ? तारा रोमेरोम पुलकित थवाथी ब्रह्मा तथा महादेवजीने मोक्ष आपनारना चरणना स्पर्शना उत्सववाळी तुं शोभे छे. ए उत्सव शुं चरणस्पर्शथी थयो छे ? के वामनजीना चरण धरवाथी थयोछे ? के वराहप्रभुना आलिंगनथी थयो छे ?

तदभावमाशङ्क्य पतेति खेदे । न केवलं तव पादसम्बन्धमात्रम्, किन्त्वन्येऽपि भावा दृश्यन्त इत्याहुः । केशवस्य ब्रह्मादेरपि मुक्तिदातुः ब्रह्मप्रार्थितचरणारविन्दस्य अंघ्रिस्पर्शेन उत्सवो यस्याः । खेदो दृश्यत एव, अन्यथा पदानि स्पष्टानि न भवेयुः । अन्योप्युत्सवो दृश्यते, उत्पुलकिता च । सर्वत्र दूर्वाङ्कुरा उत्थिता इति अङ्कुरुहैः रोमाञ्चैः कृत्वा विशेषेण भासि । उत्पुलकिताङ्गरुहैर्वा । अंघ्रिस्पर्शोत्सवा विभासि । ननु सर्वत्रैव पुलको दृश्यते, यदि केशवांघ्रिस्पर्शेन स्यात्, तत्रैकदेशे स्यात्, खेदवदित्याशङ्क्य हेत्वन्तरमुत्प्रेक्षन्ते अप्यंघ्रिसंभव उरुक्रमविक्रमाद्वेति । अपीति संभावनायाम् । अनेन चरणस्पर्शेन पूर्वस्थितचरणस्पर्शः स्मृतः । स तु सर्वत्र भूमौ व्याप्तः । अतस्तेन अंघ्रिणा संभवो यस्य उत्सवस्य । उरुक्रमः त्रिविक्रमः । तस्य विक्रमात् पदन्यासाद्वेति तत्राप्यनिर्धारः । न हि चरणसंबन्धमात्रेण संभोगरहितेन सात्त्विकभावरूपः उत्सवो रोमाञ्चो भवितुमर्हति । तदर्थं पक्षान्तरमाशङ्कते आहो वराहवपुषः परिरम्भणेनेति । अनेन स्वसमानता च वर्णिता॥१०

एवं स्थावरान् पृष्ट्वा जङ्गमान् पृच्छन्ति अपीति ।

**अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन् दृशां सखि सुनिर्वृतिमच्युतो वः ।**
**कान्ताङ्गसङ्गकुचकुङ्कुमरञ्जितायाः कुन्दस्रजः कुलपतेरिह वाति गन्धः॥११**

हे एणपत्नि, कृष्णसारपत्नि, प्रियया कयाचित् लक्ष्म्या अन्यया वा उपगतः मिलितः स्त्रीसहितः, अनेन मार्गेण गच्छन्, स्वगात्रैः स्वावयवैः, भवतीनां दृशां सुनिर्वृतिं तन्वन् दृष्टः कच्चित् । अनेनैव मार्गेण गत इति चरणारविन्ददर्शनात् निश्चीयते । यदि दृष्टो भवेत्, तदा अस्माभिरपि द्रष्टुं शक्यत इति । त्वं त्वन्यस्य पत्नी अस्माकं च सखी भवसि । अत आहुः हे सखीति । सखित्वं कृष्णानुरक्त्या, नेत्रतुल्यत्वेन भीरुत्वादिधर्मैः । अन्यथा भवतीनां विकसितनयनानि न भवन्तीति । ननु कृतलीलः किमिति प्राप्यते, तत्राहुः अच्युत इति । ननु कथं ज्ञायते प्रियया उपगत इति, तत्राहुः कान्तेति । कान्ताया अङ्गसङ्गे यत्कुचयोः कुङ्कुमं तेन रञ्जितायाः कुन्दस्रजः कुन्दपुष्पमालायाः गोकुलपतेः सम्बन्धिन्या इह गन्धो वाति । आर्द्रश्च गन्धः आर्द्रं कुङ्कुमं ज्ञापयति । सात्त्विकभावादेवार्द्रता । अतो ज्ञायते प्रियया सङ्गत इति ॥ ११ ॥

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

चरणप्रतिफलनरूपेत्यर्थः । अप्यङ्घ्रीति । उरुक्रमविक्रमाद्धेतोर्वा अङ्घ्रिसम्भव इत्यर्थः । अप्येणपत्नीत्यत्र । दर्शनस्य प्रकरणित्वमभिप्रेत्याहुः दृष्टः कच्चिदिति । भीरुत्वादिति । एतैर्धर्मैर्नेत्रतुल्यत्वेनेत्यर्थः । अन्यथेति । दर्शनाभावे इत्यर्थः ।

११. हे कृष्णसारपत्नि, ( हरिणी ), हे सखी, ललित गात्रोथी तमारी आंखोने ठारता, प्रियानी साथे अहींथी जता, अच्युतने तमे शुं जोया ? ( केमके ) कान्ताना अंगसंगना कुचकुंकुमथी रंगायली गोकुलपतिनी कुंद ( मोगर ) पुष्पनी मालानी सुगंध अहीं आवे छे.

१ कृतलील इति पाठः ।

एवं हरिणपत्नीं पृष्ट्वा इयं भर्तृसमीपे वक्तुमशक्तेति पूर्वं भगवत्स्तुतान् वृक्षान् पृच्छन्ति बाहुमिति ।

**बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः ।**
**अन्वीयमान इह वस्तरवः प्रणामं किं वाभिनन्दति चरन् प्रणयावलोकैः॥१२**

प्रियाया अंसे बाहुमुपधाय द्वितीयेन हस्तेन गृहीतपद्मः रामानुजो निर्भयः तुलसिकायाः सम्बन्धिनो येऽलयः तेषां कुलैः कृत्वा अन्वीयमानः पश्चाद् गम्यमानः। हे तरवः। पूर्वं भगवता भक्तत्वेन स्तुताः, अतो भवद्भिः कृतं प्रणाममिहैव किमभिनन्दति, न वेति प्रश्नः । प्रियांसे बाहुमुपधायेति समतया गमनेन लक्ष्यते । उभयोः पदानां पङ्क्त्याकारेण गमनात् । कदाचित्पदानां चाञ्चल्येन भ्रमरोपरुद्धगत्या तन्निवारणार्थं यत्नो लक्ष्यते । तरवश्च नम्राः, नमस्कारार्थमेव फलोपहारं कृत्वा भूमिसम्बद्धशिरसो जाताः । अतो ज्ञायते प्रणामः कृत इति । अनुत्थानात्संदेहः अभिनन्दति न वेति । अनभिनन्दने हेतुः चरन्निति । यो हि गच्छति, सः अनवहितोऽपि भवति। ननु निकट एव स गच्छति। यद्यभिनन्दनं कृतं स्यात्, तदैव श्रूयेत, कथं सदेह इति चेत्, तत्राहुः प्रणयावलोकैरिति । प्रणयपूर्वकमवलोकैः, न तु वाचा । अतो ये निकटस्थाः, त एव जानन्ति, नान्ये ॥१२॥

*श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।*

बाहुमित्यस्याभासे । पूर्वमिति । द्वादशाध्याये इत्यर्थः । तेषां तरुजन्मवृत्तान्तकथनेन तरुपदेन तेषामेवोपस्थितिरिति भावः । व्याख्याने समतयेत्यस्य टिप्पण्यां यद्यपीत्यादि । इति हेतोश्चरणचिह्नानां समत्वादीनां दर्शनं हेतुत्वेन न वक्तव्यम्, तथाप्यधुना तादृशज्ञापितः प्रियो भगवद्भावकृतलीलास्फूर्त्या तत्र गमनेन प्रियप्राप्त्यपेक्षया शीघ्रं प्राप्स्यत इति ज्ञात्वा तं प्रकारमवगणय्य प्रश्नपरा एव जाता इत्याशयेन अत्यनवहितत्वाच्चिह्नदर्शनेपि तन्मार्गेण न गताः, अतो यथार्थज्ञानाभावादुत्प्रेक्षारीत्यैव तज्ज्ञानमित्याशयेन चाचार्यैरेवमुक्तमिति अग्रेतनेनान्वयः । तीक्ष्णभावशान्त्यर्थमत्र पददर्शनं भगवता कारितम्, न तु तद्भगवदावेशकार्यमतोत्र न सर्वलीलास्फूर्तिः, तादृशं तु 'व्यचक्षत वनोद्देशे' इत्यत्र भगवदावेशे वक्ष्यते इत्याशयेनैवमुक्तमित्याहुः किञ्चेति । आधुनिकपददर्शनस्य भगवदावेशजत्वाभावं व्युत्पादयन्ति यथेति।तत्र तत्पददर्शनं कादाचित्कत्वान्न भगवदावेशजसार्वज्ञ्यकृतम्, तथात्र भगवत्पददर्शनमपीत्यर्थः । तादृशं त्वग्रे वक्ष्यते इत्याहुः अग्रे त्विति । मर्यादामार्गीयेति । पुष्टिमार्गीयमदः केषांचिदेव भवति । 'स्त्रीत्वं च तेषु दद्यात् यद्वानङ्गमुनीन्यपी' ति वाक्यात् । अतस्तादृशमदे कुलत्वं न वदेत्, स्त्रीत्वं च वदेदिति भावः ।

१२. हे तरुओ, प्रियाना खभापर एक बीहस्त मुकीने, बीजा हस्तमा कमळ ग्रहण करीने जता जता बळदेवजीना नानाभाई, तुलसी संबंधी मदान्ध भ्रमरोना टोळां जेमनी पाछळ गम्या करे छे एवा, प्रेमथी

ते ज्ञानिनो वृक्षाः स्त्रीभिः सह सम्भाषणं न करिष्यन्तीति तत्पत्न्य एव प्रष्टव्या इत्याहुः पृच्छतेमा लता इति ।

**पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः ।**
**नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो ॥ १३ ॥**

वनस्पतेर्बाहुनाश्लिष्टा अप्येताः पृच्छत । यद्यपि तासामप्यनवसरः, ताश्च पुनर्भर्तृभुजालिङ्गिता अपि भगवत्करजैरेव नखैः स्पृष्टाः सत्यः उत्पुलकानि बिभ्रति । न हि रसान्तराविष्टानां रसान्तरार्थं स्पृहा भवति । अत एव ज्ञायते 'सर्वोपमर्दी भगवत्सम्बन्धी रस' इति । एवं सर्वेषामेवावचने मूर्छिता इव जाता इति । एतदन्ता प्रश्नकथा । नवविधा एता गोप्यो निरूपिताः । दशमी तु भगवता नीयते । एवमन्वेषणेन रसस्थैर्यं निरूपितम् ॥१३॥

एवं तिरोधानेन जाततापनिवारणार्थं यत्नो निरूपितः । एतदुपमर्दिका भगवल्लीला प्रादुर्भूता । तस्या विलासं वक्तुं पूर्वोपसंहारपूर्वकमुपक्रमते इतीति ।

श्रीशुक उवाच—**इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः ।**
**लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ॥ १४ ॥**

इतिशब्दः प्रकारवाची । एवंप्रकारेण प्रश्नायोग्येऽपि प्रश्नकरणादुन्मत्तवाचो गोप्यो जाताः । कृष्णस्यान्वेषणे कातरा अपि, दीना अपि, जाताः । तनुर्वाक् श्रान्ता । मनसि तु त्रयो वर्तन्त इति प्रथमस्यापगमे द्वितीय आविर्भूत इत्याह लीला इति । भगवतस्तास्ताः पूर्वमुक्ताः कृताश्च तदात्मिकाः सत्यः अनुचक्रुः । उन्मत्तवच इति छान्दसो ह्रस्वः । अथवा । इति पूर्वोक्तमुन्मत्तवचः एतावदिति । ततो गोप्यः कृष्णान्वेषणार्थं कातरा जाता इति । भगवतो लीलाः षड्विधाः स्वाभाविक्यस्तासामपि भेदाः तास्ताः । युक्तश्चायमर्थः । भगवति हृदि समाविष्टे लीलाभिः सहिते । यदा यदा भगवानवतरति, तदा तदा पूतनासुपयःपानादिकं करोति, तथैव संवत्सरलीलायां पुरुषोत्तमादिषु प्रसिद्धिः । एतासामपि मनसि आविर्भूतेन कर्तव्यं तत्साक्षात्कर्तुमशक्यमिति भावनयैवाविर्भूत इति अनुकरणमात्रं कृतवत्यः ॥१४॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

पृच्छतेमा इत्यत्र । दशमी त्विति । अधुना सङ्गस्याया एव दशमो भावो, न त्वेतासु कस्याश्चिदपि, अग्रे तत्रापि स भावो वक्ष्यते इति भावः । उपसंहरन्ति एवमिति । रसस्थैर्यं रसासक्तिरित्यर्थः । कार्यलक्षणनिरूपणेन कारणं लक्ष्यं निरूपितं जातमिति प्रतिज्ञातलक्षणतो रसासक्तिनिरूपणं सिद्धमिति भावः ।

कार्यकारणभावमुपपादयन्ति एवमिति । तापस्तु रसासक्त्यैव भवतीति भावः । लीला भगवत इत्यत्र । कृताश्चेति । पूर्वमनुक्ता अपि भगवता कृताः 'कस्यांचित् स्वभुजं न्यस्य' त्यनेनोक्ता इत्यर्थः । नवलीला इति । तथाच लीलाभेदेपि एकैकस्मिन् श्लोके उक्ता एकैकविधा इत्यर्थः ।

---

१३. आ लताओ वनस्पतिना बाहुओने आलिंगेली छे, ते छतां एमने पुछो. खरेखर, भगवान्‌ना नखना स्पर्शथी एमने रोमांच थाय छे.

१४. आ प्रकारना उन्मत्त वचनो बोलतां गोपीओ कृष्णनी शोधमां दीन थई गयां. अने भगवदात्मक थई जईने पूर्वे वर्णवेली भगवल्लीलाओनुं अनुकरण करवा लाग्यां.

भक्त्यातिमत्तास्तद्भावमीषन्मत्तास्तु रोषतः ।
द्वेषभावं समाश्रित्य क्रीडन्त्यो जातमत्सराः ॥ १ ॥
सत्त्वादिगुणभावेन नवलीलाः प्रपेदिरे ।
अतो न न्यूनभावोऽत्र ह्याविष्टाः शकटादिभिः ॥ २ ॥
सर्वत्र हरिबुद्ध्या वा पादस्पर्शेच्छया पुनः ।
उलूखलादिभावोऽपि तत्सम्बन्धप्रसिद्धये ॥ ३ ॥

**कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम् ।**
**तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम् ॥ १५ ॥**

प्रथमतो भगवच्चरित्रं पूतनासुपयःपानमिति, काचित्पूतना भूता जाता, अन्या 'अहं कृष्ण'इत्युक्तवती, तदा तामङ्के भगवद्बुद्ध्या अगृह्णात् । ततस्तस्याः पूतनायन्त्याः कृष्णायन्ती स्तनमपिबत् । तस्यास्तु मरणभावना न स्थितेति, सा न मृता । नाप्यनुकरणं कृतवती । कृष्णायन्ती च स्तनमात्रमेव पिबति । अलौकिकसामर्थ्याभावात् इति स्तनपानमात्रमुक्तम् । अमङ्गलतानिवृत्तये च शकटभङ्गलीलामाह तोकायित्वेति । तोकवदाचरन्ति आत्मानं तोकं मन्यते वा, तोकवदात्मानं कृत्वा वा । शकटायतीं शकटवत् [illegible] अहन् ताडितवती ॥ १५ ॥

तृणावर्तलीलामाह दैत्यायित्वेति ।

**दैत्यायित्वा जहारान्यामेका कृष्णार्भभावनाम् ।**
**रिङ्गयामास काप्यंघ्री कर्षन्ती घोषनिःस्वनैः ॥ १६ ॥**

दैत्यवदात्मानं कृत्वा कृष्णस्यार्भं बाल्यं भावयन्ती, कृष्णार्भभावनां त[illegible] आत्मानं दैत्यायित्वा जहार । काऽपि अंघ्री कर्षन्ती घोषनिःस्वनैः रिङ्गयामास चलितव[illegible] यथा बाल्ये मुग्धप्रगीतवत् घोषप्रघोषरुचिरं भगवान् गच्छति । पूर्वश्लोके चतस्र उ[illegible] लीलाद्वयेन, तास्तामसतामसः । अत्र तिस्र एव राजसतामस्य इति । चरित्रलीलायामु[illegible]

श्रीविठ्ठलरायात्मजश्रीवल्लभकृततेख. । .

कस्याश्चिदित्यत्र । तस्यास्त्विति । पूतनाया मया मर्तव्यमिति भावना न स्थि[illegible] त्यर्थः । तोकायित्वेत्यत्र । आद्यपक्षे कर्तुः क्यङ् सलोपश्चेति क्यङ् । तोकवदाचरि[illegible] त्यर्थः । अग्रे पक्षद्वये प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्चेति णिच् । तोकवदित्यर्थकथन[illegible] विग्रहस्तु तोकं मन्यते तोकं करोति वा तोकयति । आत्मानमित्यर्थात् । मूले ककार[illegible] छान्दसो दीर्घः । तथा चात्मानं तोकायित्वा तोकं मत्वा तोकं कृत्वा वेत्यर्थः ।

१५. कृष्णवत् आचरण करता एक गोपीजने पूतनावत् आचरता अन्य गोपीजननुं स्तनपान [illegible] बालकवत् आचरता अन्य रुदन करता गोपीजने शकटवत् आचरता गोपीजनने चरणथी प्रहार कर्यो.

१६. दैत्यवत् पोताने करीने एक गोपीजन कृष्णना बाल्यनी भावना करता अन्य गोपीजननुं हरी गई कोइ एक गोपीजन घूंटण ताणीने घुघरीना खखडिता चालवा लाग्या.

विशेषा अत्राप्यनुसंधेयाः । अथवा । युगलास्तिस्रो निरूपिताः । गुणातीता त्वेका । पुनः प्रकारान्तरेण बह्व्यः एकभावमापन्नाः भगवदिच्छया प्रधानगुणभावं प्राप्य रजसा अनेकधा त्रिक्षिताः बहुरूपा जाताः ॥ १६ ॥

वृन्दावनक्रीडायां वत्सपालकरूपा जाताः । तत्र प्रकारमाह कृष्णेति ।

**कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन ।**
**वत्सायतीं हन्ति चान्या तत्रैका तु बकायतीम् ॥ १७ ॥**

द्वे कृष्णरामायिते, कृष्णरामवत् जाते । काश्चन गोपायन्त्यः । गोपा अत्र बालकाः । जातिशब्दोऽयम् । वत्सरूपाश्च काश्चन जाताः । चकारेण समुचिताः । अन्या पुनर्वत्सायिता, वत्सासुरवदाचरति । तां घ्नती च जाता । कृष्णायिता अर्थात् चकारात् फलानि पातयन्ती च । अन्या पुनः बकायन्तीं घ्नती जाता वत्सवधो लोके बलभद्रकृत इत्यपि प्रसिद्धः । 'प्रलम्बो निहतोऽनेन वत्सको धेनुकादयः ।' अत उभयोर्मध्ये एका बकायतीम्, अन्या वत्सायतीम् ॥ १७ ॥

ततः परं गोपरूपेण वृन्दावनलीलामाह आहूयेति ।

**आहूय दूरगा यद्वत् कृष्णस्तमनुकुर्वतीम् ।**
**वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसन्ति साध्विति ॥ १८ ॥**

गोरूपाः काश्चन जाताः, गोपालरूपाः काश्चन । तत्र यद्वत् कृष्णः दूरगाः गाः [illegible]य वेणुक्वणनं करोति, एवं दूरगा गोपीराहूय तं कृष्णमनुकुर्वती काचित् जाता ताम् । [illegible]क्वणन्तीम्, ततो नानाविधक्रीडां कुर्वतीं अन्याः गोपायिताः साधुसाध्विति शंसन्ति १८

एका पुनः क्रीडायां कृतापि लीला भागवते अनुक्ता तां भावयित्वा तादृशीं लीलां [illegible]यती, तदाह कस्याश्चिदिति ।

**कस्याश्चित् स्वभुजं न्यस्य चलन्त्याहापरा ननु ।**
**कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः ॥ १९ ॥**

अत्रापि पूर्ववत् युगलास्तिस्रः । चतुर्थ्येषा । कृष्णरामायिते द्वे युगले । साध्वाशं-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

आहूयेति श्लोके मेघगम्भीरयेति श्लोकोक्ता लीला ज्ञेया ।

१७. बे गोपीजन कृष्ण अने बलराम थयां, अने अन्य गोपीजनो गोप थयां. एक गोपीजने वत्सवत् आचरण करता गोपीने प्रहार कर्यो, अने एके तो बकरूप आचरण करता गोपीजनने प्रहार कर्यो.

१८. जेम कृष्ण दूर गयली गायोने बोलावीने वेणु वगाडता हता, तेम कोइक गोपी कृष्णनुं अनुकरण करवा लागी, तेने वेणु वगाडता तथा क्रीडा करता गोपीजनने बीजां 'बहु सुंदर, बहु सुंदर' कही वखाणवा लाग्यां.

१९. कोइ गोपीजनपर पोतानो हस्त राखीने चालता कृष्णमां मनवाळा बीजां गोपीजन बोल्यां 'हुं खरेखर कृष्ण छुं' मारी ललित गति जुओ.

सनसहिता वेणुनादनपरा च तृतीया । एषा तु निर्गुणा । कस्यांचित् गोपरूपायां स्वभुजं स्थापयित्वा चलन्ती, अपरा गोपरूपा, अतोऽन्या । ननु हे गोप्यः अहं कृष्णः, मे ललितां गतिं पश्यतेति । दोषाभावार्थमाह तन्मना इति । पूर्वं कायिकीं चेष्टां केवलां कृतवती । इदानीं वाचा सहिताम् ॥ १९ ॥

पुनः प्रकारान्तरेण चातुर्विध्यमाह मा भैष्टेति ।

**मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया ।**
**इत्युक्त्वैकेन हस्तेन यतन्त्युन्निदधेऽम्बरम् ॥ २० ॥**

एषैव निर्गुणा । काश्चन गोगोपगोपीरूपा जाता वृष्टिभीता इव । तदा वातवर्षाभ्यां हेतुभूताभ्यां मा भैष्ट, मया तत्त्राणं विहितं इत्युक्त्वा एकेन हस्तेन अम्बरं नयन्ती, पर्वतवत् स्थापयन्ती, ऊर्ध्वं निदधे । गोवर्धनवत् धारितवती, यतन्ती प्रयत्नं कुर्वन्ती वा ॥ २० ॥

सात्त्विक्याश्चेष्टामाह आरुह्येति ।

**आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप ।**
**दुष्टाहे गच्छ जातोऽहं खलानां ननु दण्डधृक् ॥ २१ ॥**

एकामारुह्य, पदा च आक्रम्य, शिरसि पादाघातं कृत्वा । नृपेति सम्बोधनं विश्वासाय । एषा लीला कठिना । उपरि वृक्षशाखामवलम्ब्य वा तथा कृतवती । (वस्तुतस्तु या लीला यथा प्रभुणा कृता, सा तथैवात्राविर्भवति इति निरालम्बनत्वेऽपि नानुपपत्तिः । ) हे दुष्टाहे कालिय । इतो गच्छ । यतोऽहं खलानां दण्डधृक् जातः । ननु इति सम्बोधनं अमारणार्थम् ॥ २१ ॥

तत्रैकोवाचेति ।

**तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम् ।**
**चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममञ्जसा ॥ २२ ॥**

राजसी पुनस्तत्रैका जाता । उवाच च वक्ष्यमाणम् । गोरूपाः काश्चन । गोपरूपास्तथापराः । एका तु कृष्णरूपा आह । हे गोपा उल्बणं दावाग्निं पश्यतेति । विरहेण

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

मा भैष्टेत्यत्र । हेतुभूताभ्यामिति । भयहेतुभूताभ्यामित्यर्थः ।

---

२०. पवन अने वरसादथी बीहीशो नहि, मैं तेनाथी रक्षण करेलुं छे, एम कहि एक हस्तथी वस्त्र उंचुं धर्युं ( गोवर्धन पर्वतनीमाफक ).

२१. हे नृप, एक गोपीजन बीजा गोपीजनपर चढीने, तेना शिरपर पादप्रहार करीने बोल्या 'हे दुष्ट सर्प, जतो रहे, दुष्टने दण्ड करनार हुं प्रकट थयो छुं'

२२. त्यां एक गोपीजन बोल्या 'हे गोपो, भयंकर दावाग्नि जुओ. जलदी चक्षु बींची दो. तमारुं क्षेम तरत करीश.'

१ ( ) विहारान्तर्गतं प्रभूणाम् ।

दावाग्निं दृष्टवती, भावनया वा तथा भानम् । सर्वापि क्रीडा भगवद्रूपा तत्र तत्राविशतीति दावाग्नेरपि दर्शनम् । अन्यासां विशेषाकारेण तस्यां भगवद्भावाभावात् न तत्प्रार्थना । एवमेव वातवर्षस्थलेऽपि । अतिमत्तानामेव भगवद्भावेन तल्लीलावेशात् तस्य एव दर्शनमिति निष्कर्षः ॥ २२ ॥

तामसीमाह बद्धेति ।

बद्धान्यया स्रजा काचित् तन्वी तत्र ह्युलूखले ।
भीता सुदृक् पिधायास्यं भेजे भीतिविडम्बनम् ॥ २३ ॥

उलूखले कयाचिद्बद्धा स्रजा मालया, उलूखलस्थानीयापि काचित् । अन्या तु यशोदारूपा । तदा भीता सती सुदृक् उत्तमदृष्टियुक्ता आस्यं पिधाय, हस्तेन सम्पूर्णं मुखमाच्छाद्य, भीत्यनुकरणं भेजे । अत्र क्रमे गुणा एव प्रयोजकाः । तत्तदधिकारानुसारेण तत्तल्लीलाः प्रादुर्भवन्ति । भगवद्वशीकरणान्ता च लीला । अन्यथान्ते उलूखललीला न कृता स्यात् । नातः परं कर्तव्यमस्तीति लीलाया विरतिः । एवं लीलाभावमुपपाद्य भगवद्भावे वक्तव्ये भगवतो भीतिविडम्बनलीलायां सर्वा लीलास्तिरोहिताः । ततः पूर्ववत् पुनः प्रश्न एव स्थितः । तस्य संवेदनपूर्वकत्वात् । एतत्त्वावेशेन जातमिति संवेदनराहित्यम्[1] । अतस्तस्य नोपसंहारः ॥ २३ ॥

पूर्वं तु 'इत्युन्मत्तवच'इति वचनमेवोपसंहृतम्, न तु प्रश्न उपसंहृतः । अत इदानीं मध्ये लीलामुक्त्वा तस्यास्तिरोधाने पुनरेव वृन्दावनलतास्तरून् कृष्णं पृच्छमाना जाता इत्याह एवमिति ।

एवं कृष्णं पृच्छमाना वृन्दावनलतास्तरून् ।
व्यचक्षत वनोद्देशे पदानि परमात्मनः ॥ २४ ॥

तदा पुनरनुत्तरे प्राप्ते भगवानाविशन् मोहं दूरीकृत्य सर्वं ज्ञापितवानित्याह व्यचक्षतेति । तापापनोदार्थं एव त्रयम्, अन्वेषणं लीलावेशो भगवदावेशश्चेति । तत्र प्रश्नोऽन्तरङ्ग इति स एव सर्वत्रानूद्यते । वृन्दावनलताः तरून् कृष्णं पृच्छमाना जाता इति । ततो वनोद्देशे वनभूमौ भगवतः पदानि दृष्टवत्यः । परमात्मन इति । पदानां परमपुरुषार्थता सूचिता । भगवदावेशे हि सर्वज्ञता भवति । तेषां च कार्यं भगवत्पददर्शनम् । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय' इति श्रुतेः ॥ २४ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

व्यचक्षतेत्यत्र । तापापनोदार्थमिति । अन्वेषणेन शान्तिरन्याभ्यां तदस्फूर्तिरिति विभागोत्र ।

---

२३. बीजी गोपीजननी मालाथी खांडणीये बंधायली कोइ कृशांगी सुंदर नेत्रवाळी गोपीजन मोढाने म्हों ढांकीने बीहीकनुं अनुकरण करवा लाग्यां.

२४. ए प्रमाणे वृन्दावननी लता अने तरुओने कृष्णविषे पुछवा लाग्यां. पछी वनभूमिपर परमात्माना पदना दर्शन थयां.

१ संवेदनरहितमिति पाठः ।

एता अपि पूर्ववत् दशविधाः । तथैव तासां वचनानि । पदानि प्रत्यक्षयोग्यानि सर्वैरेव दृश्यन्त इति तेषां याथात्म्यज्ञानं साध्यम् । अतः प्रथमं आहुः-पदानि व्यक्तमेतानीति ।

**पदानि व्यक्तमेतानि नन्दसूनोर्महात्मनः ।**
**लक्ष्यन्ते हि ध्वजांभोजचक्रांकुशयवादिभिः ॥ २५ ॥**

एतानि पदानि नन्दसूनोरेव । व्यक्तं सत्यम्, नात्र संदेहः । चिह्नैः पदानां विशेषज्ञानम् । चिह्नान्येव कथं भवन्तीत्याशङ्क्य, तत्रोपपत्तिमाहुः महात्मन इति । महतामप्यात्मा महान् वा ब्रह्मरूपः । तस्य तत्तत्कार्यार्थं पदे चिह्नानि भवन्ति, प्रकृतेऽपि तेषामुपयोग इति तदभिव्यक्तिः क्रियते । तानि चिह्नान्याह लक्ष्यन्त इति । अनुमीयन्ते पदानि । असाधारणधर्मैः । लोकेऽप्येतादृशोऽर्थः प्रसिद्ध इति सम्मतिः । ध्वजस्य स्थापनं भक्तानां निर्भयवासार्थम् । अम्भोजस्थापनं सुखसेव्यत्वाय । चक्रस्थापनं रक्षायै । मनोनिग्रहार्थं अङ्कुशस्थापनम् । कीर्तिसिद्ध्यर्थं यवः । वज्रादयोप्यादिशब्देनोच्यन्ते, पापपर्वतादिनिराकरणार्थाः ॥ २५ ॥

एवमसाधारणधर्मैः पदानि निश्चित्य, तन्मार्गेण गता इत्याह तैस्तैरिति ।

**तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽबलाः ।**
**वध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन् ॥ २६ ॥**

ज्ञानं क्रियापर्यवसायीति क्रिया निरूप्यते । तत्पदवीमन्विच्छन्त्योग्रतोऽबलाः जाताः, पदान्यन्विष्य तत्पदवीं गता इत्यर्थः । मध्ये तासां प्रतिबन्धमाह वध्वा इति । यदि तासां मत्सरदोषो न स्यात्, गच्छेयुरेवान्तिकम् । दोषवशाच्च परं कुण्ठिता भवन्ति । तदाह । वध्वाः कस्याश्चिद्गोपिकायाः पदैः सुपृक्तानि पंक्त्याकारेण गतानि भगवत्पदानि दृष्ट्वा तानि विलोक्य च आर्ता जाताः । तदा अन्योऽन्यमेवाब्रुवन् । ज्ञानक्रिययोरुपसर्जनं कृत्वा वाचि प्रतिष्ठिता जाताः । अन्यथा शीघ्रगमने भगवान् प्राप्तः स्यात् ॥ २६ ॥

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेख ।

तैस्तैरित्यस्याभासे । गता इत्याहेति । 'इत्येवं दर्शयन्त्यस्ताश्चेरु'रित्यनेन गमनस्योपसंहारात्तावत्पर्यन्तस्याभासोयम् । तथाच मध्ये यदुक्तं तदपि गमनाङ्गत्वेनैवेति भावः । तैस्तैरित्यत्र । तत्पदवीं गता इति । इत्येवं दर्शयन्त्यस्ता इत्यन्तस्यार्थोयम् । वध्वाः पदैरित्यत्र । तानि विलोक्य चेति । वधूपदानीत्यर्थः । जाता इति । अन्विच्छन्त्यः सत्योऽबलाः सत्यः आर्ताः सत्योऽन्वब्रुवन्नित्यन्वये ग्रयं तत्तदानन्तर्येण प्राप्तमित्याशयेन तथोक्तम् ।

* २५. आ पद नन्दसुनुनाज छे, एमां कांइ संदेह नथी, महोटाओना पण ए आत्मा छे. ध्वज, कमल, चक्र, अंकुश, यव वगेरेथी एनुं अनुमान थायछे.

२६. ते ते पगला परथी भगवानना मार्गने शोधतां अबलाओ आगळ चाल्यां. कोइक गोपिकाना पदसाथे भगवानना पद मळेला जोइने खेद पामतां मांहो मांहे बोल्यां.

तासामसूयावाक्यान्याह कस्याः पदानीति ।

**कस्याः पदानि चैतानि याताया नन्दसूनुना।**
**अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा ॥ २७ ॥**

पुरुषोऽत्र न संभाव्यते, नापि ग्रामान्तरस्त्रियः, अतोऽस्मन्मध्य एव कस्याश्चिद्भविष्यन्तीति । अयं प्रश्न इतरपरिच्छेदेन विशेषज्ञानार्थः । न त्वत्र पदे लक्षणानि सन्ति । चकाराद्भगवतः तस्याश्च चेष्टाज्ञापकानि चिह्नान्यप्युच्यन्ते । सा हि नन्दसूनुना सहैव याता । अन्यथा भगवान् न गच्छेत् । तयैव प्रायेण नीतः । स्वापेक्षया तस्या महद्भाग्यमाहुः । अंसे न्यस्तः प्रकोष्ठभागो यस्याम् । प्रकोष्ठभागो भगवदीयः करतलादर्वाचीनभागः । तावता करेण कश्चित्सम्बन्धः सूचितः । तावदेव नैकट्यं पदयोरिति । किञ्च, मध्ये तयोः रसाविर्भावोऽपि जायत इति दृष्टान्तेनाहुः करेणोः करिणा यथेति । करेणोरंसे करिणा यथा हस्तः प्रसार्यत इति । करेणुः स्त्री, तस्या अंसे यथा करी हस्तं प्रसारयति, तदा पदानि मिलन्ति, संमुखश्च भवति, उद्धृष्टकण्ठा वा भवति । स्पर्शसुखमेव प्रधानमिति गजो दृष्टान्तीकृतः । एवं त्रिविधा गोपिका उक्ताः ॥ २७ ॥

गुणातीताया वाक्यद्वयमाह। दोषाभावप्रतिपादकं गुणप्रतिपादकं च । तामसतामसी भगवदाविष्टा न भवतीति । अनयाराधित इति द्वाभ्याम् ।

**अनयाराधितो नूनं भगवान् हरिरीश्वरः ।**
**यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः ॥ २८ ॥**

तत्र प्रथमं तया सह विशेषरमणे तस्या भाग्यं तस्याः पुण्यं हेतुत्वेनाहुः । अनया हरिर्नूनमाराधितः । यद्यप्यस्माभिरप्याराधितः, तथापि नूनं नाराधितः । भगवदनाराधकैरपि फलत्वात् भगवतः सम्बन्धसम्भवात् । आराधिते तु फलं स्ववशे भवति । तत्रापि तारतम्यम् । ननु तुल्यकर्मणां मध्ये कथं अवान्तरभेदः, तत्राह भगवानिति । सामग्रीभेदात् कर्माणि सर्वत्र विलक्षणानि भवन्ति । तदवान्तरवैलक्षण्यं स एव जानाति । अतस्तथा फलनिरूपको जातः । ननु तथापि वयं तया न ज्ञापनीयाः, दुःखसाधकत्वादिति

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अनयाराधित इत्यत्र । पुण्यमिति । आराधनं पुण्यम् । तज्जनितं भगवत्प्रसादविषयत्वं भाग्यशब्देनोच्यते ।

---

२७. जेम हाथी हाथणीना खभापर पोतानो हस्त प्रसारे छे तेम नंदसूनुए जेना खभापर पोतानो हस्त प्रसार्यो छे, एवी नंदसूनुनी साथे जनार आ कइ स्त्रीनां पगलां छे ?

२८. आणे तो खरेखर भगवान हरि, ईश्वरनी आराधना करी छे. केमके एनापर प्रसन्न थयेला गोविंद आपणो त्याग करीने एनी साथे एकांतमां गया छे.

१ करेणोः हस्ते इति पाठः । २ उद्धृष्टकण्ठ इति पाठः ।

चेत्, तत्राहुः हरिरिति । स हि सर्वदुःखहर्ता, वैलक्षण्यज्ञापनार्थं तथा बोधितवान् । ननु भक्तिः तुल्येति कथं भक्त्यनुसारेण तुल्यं फलं न कृतवान्, तुल्यफलत्वेन कर्म कुतः स्वीकृतवान्, तत्राहुरीश्वर इति । कदाचिद्भक्तिमुररीकरोति, कदाचित्कर्म, कदाचित् स्वेच्छाम् । न हीश्वरो नियन्तुं शक्यः । अस्मान् भक्तिमार्गे योजयति, न कर्ममार्ग इति । अत एव नः अस्मान् विहाय गोविन्दः साधारणेन्द्रोऽपि रहः एकान्ते प्रीतः सन् तामेवानयत् । कामरसः स्त्रीसमूहापेक्षयाप्येकस्यामेव मुख्यतयोत्पद्यते । तथा करणे प्रीतिर्हेतुः, प्रीतौ भक्तिः, कर्म वा ॥ २८ ॥

एवं तस्या भाग्यमभिनन्द्य मात्सर्येऽपि गूढे तथा वचनं भवतीति स्वभाग्याभिनन्दनमप्याहुः धन्या इति ।

**धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः ।**
**यान् ब्रह्मेशो रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥ २९ ॥**

अहो आश्चर्ये, हे आल्यः सख्यः, अमी अङ्घ्रिरेणवो धन्याः । मात्सर्याभावार्थं चैतदुच्यते । यथा रेणवः, तथा सेति । विश्वासार्थं अप्रतारणार्थं च सम्बोधनम् । अनेन रेणूत्कर्षेण रेणव एव धार्याः स्वदोषनिवृत्त्यर्थमित्युक्तं भवति । पूर्वमत्रैव ते रेणवः स्थिताः, न तदा तेषामुत्कर्षः, यदा पुनश्चरणसम्बद्धाः, तदा धनमर्हन्तीति । धनं कृष्णः, यथेन्द्रो देवानाम् । यथा धनेन सर्वविषयप्राप्तिः, एवं प्रभुणापि । तेषां धन्यत्वमुपपादयन्ति यानिति । ब्रह्मा ईशो रमा च देवतारूपा पालिका शक्तिः । तेषां स्वस्वाधिकारे दोषसंभवात् तन्निवृत्त्यर्थं मूर्ध्नि दधुः । ब्रह्मानन्दरूपाया निवृत्त्यर्थं देवतापदम् । अतः कारणादेतद्धारणेन वयमपि निर्दुष्टाः नीयमानगोपिकातुल्या भविष्याम इति ॥ २९ ॥

अन्या रजःप्रकृतय आहुः तस्या इति ।

**तस्या अमूनि नः क्षोभं कुर्वन्त्युच्चैः पदानि यत् ।**
**यैकापहृत्य गोपीनां रहो भुङ्क्तेऽच्युताधरम् ॥ ३० ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

यान् ब्रह्मेश इत्यत्र । तन्निवृत्त्यर्थमिति । धनं प्रभुमर्हन्ति, अतो येषां मूर्ध्नि स्वयं तिष्ठन्ति, तेषामपि दोषनिवर्तनेन तत्र योग्यतां सम्पादयन्तीत्यर्थः ।

तस्या इत्यस्याभासे । रजःप्रकृतय इति । सत्त्वप्रधानास्तिस्र उक्ताः, ततो गुणातीताया वाक्यद्वयम् । अत्र रजःप्रधानास्तिस्र उच्यन्त इत्यर्थः ।

---

२९. अहो ! हे सखीओ, आ गोविंदना चरणकमलनी रज धन्य छे, के जे रजने ब्रह्मा, शिव अने लक्ष्मीदेवी पोताना पाप निवृत्त करवाने शिरपर धारण करे छे (आपणे पण जो ए रज शिरपर धारण करीए तो जे गोपिकाने प्रभु संगे लइ पधार्या छे तेना जेवा निर्दोष थइए )

३०. ( बीजी रज प्रकृतिवाळी गोपीजन बोली के भगवानना चरणारविंदनी रज तो खरेखर एवी छे पण ) जे एकली भगवानने लइ जइने सर्व गोपिकाओना सरखा भागरूप भगवानना अधरामृतनुं एकांतमां पान करे छे तेनां आ पगलां अमने अतिशय क्षोभ उपजावे छे

सुन्दरं चेत्, लक्ष्म्यामस्मासु वा स्थातुं योग्यम् । नाथेति सम्बोधनात् बहव एवात्रार्थे नियोज्याः सन्ति, तथापि स्वयमेव गच्छसीति । वने हि त्रिविधा भूमिः, पर्वतरूपा अरण्यरूपा कच्छरूपा च । तत्र क्रमेणैकमेकत्र भवति, सर्वं वा सर्वत्र । अवसादः अशक्त्या एकत्र स्थितिः । तदा चिन्ता भवति । स्वयं गत्वा स्वहृदये स्थापनीयमिति । मनःकान्तेति च । तेन मनः स्थापितमपि न तिष्ठतीति ॥ ११ ॥

एवं सप्तविधा अनन्यपूर्वा निरूपिताः । चतस्रश्च ताः । अतः परं क्रमेण षट्ट ता एव निरूप्यन्ते । तत्र प्रथमं राजसतामसा वचनम् । ता हि बहिर्गत्वा द्रष्टुमशक्ताः । अतो यदा संध्यायां भगवानायाति, तदा भगवन्तं दृष्ट्वा मनसि कामो भवति । ततो बन्धप्रार्थना अधरामृतप्रार्थना च रजसा सत्त्वेन च भविष्यतः । अनन्यपूर्वाणां तु नित्य एव कामः । दिनपरिक्षये इति ।

**दिनपरिक्षये नीलकुन्तलैर्वनरुहाननं बिभ्रदावृतम् ।**
**घनरजस्वलं दर्शयन् मुहुर्मनसि नः स्मरं वीर यच्छसि ॥ १२ ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

घटादौ तिष्ठतीत्यर्थः । लक्ष्म्यामिति । जलस्थानीया लक्ष्मीः । जलस्य नलिनस्थानत्वाल्लक्ष्म्याश्च स्वकीयात्वादिति भावः । पात्रस्थानीयाः स्वयम् । उद्धृतस्यैव नलिनस्य पात्रे स्थापनादेतासां च परकीयात्वादिति भावः । सीदतीत्यस्यार्थमाहुः अवसाद इति । कण्टके लग्ने चलनाशक्त्या किञ्चित्कालमवस्थितिरित्यर्थः । एतासां भावानुभावेन वनलीलाज्ञानमित्युक्तमेव । मनःकान्तेति । इति च व्याख्यानं सम्भवतीति शेषः । मनसः कान्तेत्यर्थः । तदा मनःपदस्यावृत्तिर्ज्ञेया ।

दिनपरिक्षये इत्यस्याभासे । ता हीति । अन्यपूर्वाः पत्याद्यनुरोधेन दिवा वनगमनेऽशक्ताः । अतो दिवा प्रयोजनाभावान्न कामभावसम्पादनम्, किन्तु गुणगानेनैव रमणम्, निशि स्वरमणस्य कर्तव्यत्वात् संध्यायां तदुपयोगिकामभावसम्पादनम् । अनन्यपूर्वाणां तु दिवापि रमणसम्भवेन तदुपयोगी नित्य एव कामः । अनन्यपूर्वा अग्निकुमारवदन्या अपि तथाविधा इति ज्ञेयम् । तेन अग्निकुमाराणां रात्रावेव विवाहितान्यायेन रमणमिति पूर्वोक्तेन न विरोधः । अत्र सत्त्वादिभेदः समयभेदेनैकस्यामपि बहुधा । अतोऽग्रिमश्लोकद्वयोक्तप्रार्थना एकस्या अपि सम्भवतीत्याशयेन ततो बन्धप्रार्थनेत्युक्तम् । तत इति । कामदानलीलास्मरणेनोद्बुद्धात् कामाद्धेतोरित्यर्थः । अनन्यपूर्वाणां तु कामस्य नित्यत्वात् कामदानकथनं विनैव 'व्रजजनार्तिहन्' 'प्रणत-

---

१२. हे वीर, दिवसनो क्षय थतां संध्याकाळे, नील कुंतलोथी ढंकायेलुं मुख कमलवत् धारण करतां, अने गोधननी रजथी धुसर वारंवार दर्शन करावता अमारा मनमां स्मरने उत्पन्न करो छो.

दिनपरिक्षये संध्याकाले । क्षयोक्त्या दिने द्वेष्यत्वं ज्ञाप्यते । रजोगुणस्यायं समयः, कामस्य च कालः । नीलकुन्तला भ्रमरा इव रसबोधकाः । ये हि मुखकमललावण्यामृतं पिबन्ति, ते उद्बोधका भवन्ति । अतस्तैरावृतं वनरुहवत् कमलवत् आननं बिभ्रत्, हे वीर, नः मनसि स्मरं यच्छसि । ( सन्ध्यायां नीलवर्णैरावृतत्वे तत्प्रभाव्यासत्वं भवतीति तदुक्त्या वनरुहोक्त्या च कुवलयाभत्वं ज्ञाप्यते । तथा च प्रियामुखेन्दुदर्शनेनोत्तरोत्तरमधिकविकासवत्त्वमितः पूर्वमताद्दशत्वं च ज्ञाप्यते । तेन प्रियस्य सर्वास्वासक्तिः सूचिता भवति । अत एव जलपदं विहाय वनपदमुक्तम् । तेन वने यावस्था तां ज्ञापयितुं तान् धर्मान् बिभ्रदेवाननं दर्शयतीति ध्वन्यते । ) धनेन गोभिः रजस्वलम् । मुहुश्च प्रदर्शयन् । मध्येमार्गं गच्छन् उभयतः स्थिता गोपीः पर्यायेण पश्यति । अतो मुहुः प्रदर्शनम् । अग्रे गच्छन् पुनः पुनर्व्याघुट्य पश्यतीति वा तथा । तादृग्दर्शनं स्वापेक्षाज्ञापकमिति स्मरजनकम् । निरन्तरदर्शनेन तत्रैव रसास्वादनमिति न स्मरोत्पत्त्यवसरः स्यात् । अतो वारंवारं प्रदर्शनं स्मराग्नेः संधुक्षणमिव भवति । तादृशं कृत्वा तत्पूरणार्थं तन्निराकरणार्थं वा युद्धमवश्यं कर्तव्यम् । तत्सूचयन्ति वीरेति । धनेन रजस्वलं च श्रमसूचकं भवति । श्रमनिवृत्तिश्चास्माभिरेव । वनरुहमिति । वन एवैतत्सर्वथा भोग्यम् । अतोऽत्रैव समागमनम् । अनेन गृहे रतिं दास्यामीति पक्षो व्यावर्तितः । बिभ्रदिति बलात्कारेण तामेवावस्थां स्थापयति । यदि मुखसंमार्जनं कृत्वा समागच्छेत्, तदा प्रसन्नमुखदर्शनात् ज्ञानं वा भवेत् । धनसम्बन्धि रज इति काम एव, न तु क्रोधः । यथा पात्रं धृत्वा तत्स्थितमन्नं भोगार्थं दीयते, तथा मुखं धृत्वा तत्रत्यो रसः कामात्मा मनसि स्थाप्यत इति मुखधारणस्य हेतुत्वम् । अतो भोगार्थं दत्त इति भोगः करणीयः । अयं काम आगन्तुक इति नास्यान्येन पूरणं भवति ॥ १२ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

देहि्ना'मिति श्लोकाभ्यां बन्धप्रार्थना, 'मधुरया गिरे'त्यनेनाधरामृतप्रार्थना चेति भावः । व्याख्याने । एतस्या राजसतामसीत्वं व्युत्पादयन्ति रजोगुणस्येति । अत एव तत्समये दोहनादिवैयग्र्यमिति भावः । तमोरूपस्य कामस्य चोद्बोधको भवति । अतः स कालो राजसतामसः, तत्कालीनलीलाकथनादेतस्या अपि तथात्वमित्यर्थः । संध्यायामिति । तथा सत्यधरे लोचनयोश्चापि नारुणिमप्रतीतिरिति भावः । अत एवेति । आसक्तेरेव हेतोरित्यर्थः । वनात् समागतोप्यासक्त्या एतद्रमणार्थं पुनर्वनं प्रवेक्ष्यति । तथा च वनस्थत्वमेव सम्पन्नमिति भावः । भोगार्थं दत्त इति । सन्ध्यायां त्वया दत्त इत्यर्थः । अन्येनेति । भोगातिरिक्तेनाश्वासनादिप्रकारेणेत्यर्थः ।

---

१ विद्वान्तर्गतं प्रभूणाम् ।

तत उत्तमा अनन्यपूर्वावस्तनयोश्चरणधारणं प्रार्थयन्ति प्रणतेति ।

**प्रणतकामदं पद्मजार्चितं धरणिमण्डनं ध्येयमापदि ।**
**चरणपङ्कजं शन्तमं च ते रमण नः स्तनेष्वर्पयाधिहन् ॥ १३ ॥**

अत एव न पौनरुक्त्यम् । परं पूर्वापेक्षयात्र चरणमाहात्म्यमधिकम् । गुणाधायकमेतत् । पूर्वं तु दोषनिवर्तकम् । हे रमण रतिकर्तः । नः स्तनेषु चरणपङ्कजमर्पय । प्रयोजनमाहुः आधिहन् इति । आर्तिहन् इति वा । हृदयतापः चिन्ता च निवारणीया । दृष्टोपकारेणैव तापो गमिष्यति । अस्माभिर्हृदये स्थापितं न बहिः समायाति । अतस्त्वया बहिः स्थापनीयम् । चरणपङ्कजस्यापि भगवत इव षड्गुणानाह । तत्र प्रथममैश्वर्यम् । प्रणतकामदमिति । प्रकर्षेण ये नता अनन्यशरणाः तेषां कामदमभिलषितार्थदातृ । ईश्वर एव तथाविधो भवति । तत्रत्यः कामः स्तब्धैर्ग्रहीतुं न शक्यत इति प्रणतत्वमुक्तम् । पद्मजार्चितमिति । धर्मरूपता निरूपिता । ब्रह्मप्रार्थनयैवात्रागतमिति । कीर्तिरूपतामाह धरणिमण्डनमिति धरण्या मण्डनमलङ्करणरूपं श्रीरूपं वा । आपदि ध्येयं श्रीरूपं कीर्तिरूपं वा । पङ्कजसाम्यात् स्वरूपोत्कर्ष उक्तः । शन्तमं कल्याणतमम् । ज्ञानरूपम् । आर्तिहन्निति सम्बोधनात् ते चरणपङ्कजमिति सम्बन्धनिरूपणाद् वैराग्ययुक्तं च । रमणेतीष्टप्रापकः । आर्तिहन्नित्यनिष्टनिवारकः । अथवा । यल्लोके पञ्चविधमुपकारं करोति, तदस्मास्वेकमेव करोत्विति प्रार्थ्यते । प्रणतासु कामं ददाति । तत्पूर्वमुक्तं 'मनसि नः स्मरं वीर यच्छसी'ति । प्रकर्षेण नम्रेषु वा कामं द्यति खण्डयति । पद्मजेन पद्मजया वा अर्चितम् । ऐश्वर्यार्थं कामार्थं वा पद्मजैः अर्चितम् । तत्तुल्यं वा । अन्यथा तानि चरणपङ्कज-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

प्रणतेत्यत्र । अत एवेति । प्रणतदेहिनामित्यत्रानन्यपूर्वा वक्त्र्यः, अत्र सपूर्वा इति वक्त्रीणां भेदादित्यर्थः । गुणाधायकमेतदिति । एतद्वर्ण्यमानं चरणपङ्कजं भक्तेषु कामादिदायकमित्यर्थः । पाठद्वयेप्यर्थमाहुः हृदयेति । चिन्तेति । पङ्कजपदतात्पर्यमाहुः दृष्टोपकारेणैवेति । तत्रत्य इति । ईश्वरमनसि दातव्यत्वेनोपस्थित इत्यर्थः । धर्मरूपतेति । ब्रह्मा धर्मबुद्ध्यैव पूजयति, न तु एता इव स्नेहेनेति भावः । पूजायां हेतुमाहुः ब्रह्मेति । अथवेति पक्षे अस्मिन् श्लोके तापनिवारणस्यैव प्रार्थनम्, न त्वभिलषितार्थदानस्य । तत्र हेतुमाहुः प्रणतास्विति । स्मरदानं स्वासु पूर्वमुक्तम् । तथा च तेनैव भोगप्रार्थना सिद्धैवेति भावः । इदं च तत्रैव श्लोके व्युत्पादितमन्ते । नम्रेषु वेति । प्रथमपक्षोक्तात् कामदानादयं विकल्पः । तथा चाथवेत्यस्यैव विवरणं वा-

---

११. हे रमण, हे आर्तिहरण करनार, (ज्ञान), अनन्यशरणागतना अभिलाष पूर्ण करनारुं, (ऐश्वर्य), ब्रह्माए अर्चित, (वीर्य), धरणिना अलंकाररूप (कीर्ति), आपदमां ध्यानयोग्य, (श्री), कल्याणकर, आपनुं (वैराग्य) चरणारविंद अमारा स्तनपर धरो.

जन्म कथं प्राप्नुयुः। धरण्यपि स्त्री अनलङ्कृता न भुज्यत इति तस्यां पदस्थापनम्। भगवदपेक्षयापि चरणौ महान्। आपदि ध्यानमात्रेणैवापदं दूरीकरोतीति। यथैतेषां सर्वोपकारकर्तृ, तथास्माकमपि करोत्विति प्रार्थना। अनेन सर्व एव सुरतबन्धा आक्षिप्ताः॥१३॥

तदनन्तरं तत उत्तमाः प्रार्थयन्ते सुरतेति।

**सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम्।**
**इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम्॥ १४॥**

अधरामृतं वितरेति। अत्राप्यधरामृतं गुणाधायकम्। एतस्य चतुर्गुणत्वमेव विवक्षितम्। ज्ञानवैराग्ययोरत्रानुपयोगात्। तस्यैश्वर्यमाह सुरतवर्धनमिति। गोपिकासु परिच्छिन्नः कामः अपरिच्छिन्नेन सह संयोगे क्लिष्टो भवति। यथा रसाः क्षुदुद्बोधका भवन्ति, तथायं रसः कामोद्बोधकः। किञ्च, न केवलमयं काममेव पोषयति, किन्तु सर्वानेवान्तःकरणदोषान्निवारयति। अतः शोकनाशकत्वं ज्ञानवैराग्यरूपता च निरूपिता। ऐश्वर्यधर्मरूपता च। यशोरूपतामाह। स्वरितो नादयुक्तो यो वेणुः, तेन सुष्ठु चुम्बितमिति। यशो हि नादज्ञैः कीर्त्यते। वेणुश्च परमभक्त इति तेनापि चुम्बितमेव। न तु पीतम्। इतररागविस्मारणमिति श्रियो रूपम्। सा हि सर्वं विस्मारयतीति। स्वतः पुरुषार्थत्वेन प्रमेयबलमुक्तम्। पूर्वेण प्रमाणबलम्। शोकनाशनमिति फलबलम्। सुरतवर्धनमिति साधनबलम्। एवं चतुर्विधपुरुषार्थप्रदं स्वतः पुरुषार्थरूपम्। नृणामस्माकमधिकारिणां[1] दुर्लभपुरुषार्थानां वा। यद्यपीदं देयं न भवति, तथापि वितरणगुणेन दातुं शक्यत इति वितरेत्युक्तम्। वीरेति सम्बोधनात् शौर्यं नान्यथा संभवतीति निरूपितम्॥ १४॥

एवं त्रिविधा निरूप्य, पुनस्तामसः त्रिविधा निरूप्यन्ते। देवनिन्दिकाः सात्त्विकतामसः। भगवन्निन्दिकाः तामसतामसः। स्वनिन्दिका राजसतामस इति। अटतीति।

**अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम्।**
**कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद् दृशाम्॥१५॥**

भवान् अह्नि काननं यदटति, तत्र दिवसे त्रुटिः युगायते। तत्र निमित्तं त्वाम-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

शब्देनेति ज्ञेयम्। अस्मिन् पक्षे पूर्वार्धोक्तविशेषणचतुष्टयोक्तपञ्चविधोपकारकर्तृचरणपङ्कजं नः स्तनेषु शन्तममर्पय। शन्तमत्वेन तापनिवारकत्वेनार्पयेत्यर्थः। करोत्वितीति। तापनिवारणात्मकमुपकारमिति शेषः। सर्व एवेति। घाता विपरीततिर्यक्समा, आन्तरं चैकमित्यर्थः।

१४. हे वीर, सुरतनी वृद्धि करनार, शोकनो नाश करनार नादयुक्त वेणुथी चुंबित इतर रागनी विस्मृति करावनार आपनुं अधरामृत अमने अधिकारीओ वा अनधिकारीओने दान करो.

१५. दिवसे आप जे वनमां पधारो छो. त्यारे आपनुं दर्शन नहि थतां अमने क्षण पण युग जेवो लागे छे. घुंघरवाला केशवाळुं आपनुं श्रीमुख निरखतां अमने नेत्रोनी पांपण करनारा ब्रह्मा जड लागे छे.

१ अनधिकारिणामिति पाठः।

पश्यतामिति । यदा पुनः पश्यामः, तदा कुटिलकुन्तलं श्रीमुखं ते उदीक्षतां नोस्माकं यः पक्ष्मकृद् ब्रह्मा स जडः । यथा देवानां पक्ष्म न करोति, अलौकिकद्रष्टृत्वात्, तदपेक्ष-याप्यत्यलौकिकद्रष्टृत्वादस्माकमपि पक्ष्मकरणमनुचितम् । अतोनुचितकरणात् जडः । देवा हि बहुकालं जीवन्ति, तथा वयमपि । त्रुटिर्युगायत इति । त्रुटिशब्दोस्त्रियाम् । यदि सार्थकं गमनं भवेत्, तथापि न काचिच्चिन्ता । परमह्नि काननमेवाटति, न तु कानने कश्चन पुरुषार्थः । अस्माकं च न बहिर्गमनं संभवति । एवं देवत्वं भगवता संपादितम् । मूर्खो ब्रह्मा तादृशीनां पक्ष्मकृत् ॥ १५ ॥

तदपेक्षया हीना आहुः पतीति ।

**पतिसुतान्वयभ्रातृबान्धवानतिविलङ्घ्य तेऽन्त्यच्युतागताः ।**
**गतिविदस्तवोद्गीतमोहिताः कितव योषितः कस्त्यजेन्निशि ॥ १६ ॥**

हे अच्युत, स्वतः कामनिवृत्तिभयरहित । पतिः, सुताः, अन्वयो वंशः, भ्रातरः, बान्धवाः संबन्धिनः, एते सर्वथा अविलङ्घ्याः, तानप्यतिविलङ्घ्य ते अन्ति समागताः । त्वं सर्वेषां गतिं जानासीति गतिवित् । सर्वैर्यावती गतिः संपाद्यते, तां भवानेव दास्यतीति । वयं वा गतिविदः । तेषां भजने भगवद्भजने च तारतम्यविदः । किञ्च, तव उद्गीतेन च मोहिताः । अतो मोहयित्वा समानीय उभयभ्रंशार्थं अरण्ये निशि योषितः कस्त्यजेत् । सर्वदैव स्त्रियो न त्याज्याः । सुतरामरण्ये । सुतरां निशि । यदर्थं वा समाहूताः, तदप्यदत्वे-त्यभिप्रायेण सम्बोधनम् । कितवानां वयं संबन्धिन्यः । अतोस्माकं तेषु न प्रवेशः ॥ १६ ॥

तत उत्तमाः आत्मानमेव निन्दन्ति रहसीति ।

**रहसि संविदं हृच्छयोदयं प्रहसिताननं प्रेमवीक्षणम् ।**
**बृहदुरः श्रियो वीक्ष्य धाम ते मुहुरतिस्पृहं मुह्यते मनः ॥ १७ ॥**

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अटतीत्यत्र । त्रुटिशब्दोस्त्रियामित्यनतिप्रयोजनमपि शब्दस्वरूपकथनार्थमुक्तम् । न तु कानने इति । द्वितीयया काननस्यैवेप्सिततमत्वेनोद्देश्यत्वकथनात्तत्रत्यः पुरुषार्थः पुरुष-सम्बन्धिप्रयोजनमुद्देश्यं नेत्यर्थः ।

पतीत्यत्र । स्वत इति । परस्य कामनिवृत्तौ स्वयं तल्लीलातो निवर्तते, न तु स्वत इत्यर्थः । किञ्चेति । गतिज्ञानात्तेन्त्यागताः । मोहाच्चागता इति समुच्चयः । अरण्ये इति । कितवेति सम्बोधनस्याभिप्रायोयम् । कितवो ह्यरण्ये वञ्चयित्वा त्यजतीति भावः । सम्बो-धनस्याभिप्रायान्तरमाहुः यदर्थं वेति ।

---

१६. पति, सुत, वंश, भाईओ, बान्धवो जेनुं उलंघन थइ नहिं शके तेमनुं करीने, हे अच्युत, आपनी समीप आव्या छीए. आप सर्वनी गति जाणो छो. आपना गीतथी मोहित थयली स्त्रीओने, हे कितव, (आपना विना) कोण रात्रिमां त्यजे ?

१७. एकान्तमां संविद्, कामोद्दीपक हास्ययुक्त श्रीमुख, प्रेमपूर्वक कटाक्ष श्रीधामरूप आपनुं विशाल उर स्थल ए सर्वेनुं विशेष दर्शन करीने अतिशय स्पृहावाळुं मन वारंवार मूर्छा पामे छे.

नो मनः अतिस्पृहं सत् मुह्यत इति । तत्र कारणत्रयं गुणत्रयसहितम् ।

**वाक्यं हास्यमुरश्चैव कामानन्दाधिकारिणः ।**

रहसि एकान्ते या संविद् ज्ञानं वा । पूर्ववत् हृच्छयस्य कामस्य उदयो येन तादृशम् । प्रहसितयुक्तमाननं प्रेमपूर्वकं वीक्षणं च यस्मिन् । श्रियो धाम बृहदुरः । भगवद्रूपस्य वा पड्गुणत्वमुच्यते । रहसि संविदो यस्मादिति । एतादृशं त्वाग् । हृच्छयस्य उदयो यस्मात् । प्रहसितमाननं यस्य । प्रेमपूर्वकं वीक्षणं यस्य । बृहदुरः श्रीधाम च वीक्ष्य । प्रमाणादिचलरूपता भगवद्रूपे निरूपिता । वक्षसि च स्वस्थित्यर्थं यशः श्रीश्च निरूपिता । मुखदर्शनेनैव प्रहसितयुक्तत्वात् पूर्वस्थित्यभावः । ततः कामः । प्रेमवीक्षणेन च तस्य स्थिरीकरणम् । ततः स्वयोग्यता । ततो भोगचातुर्यं प्रथमविशेषणेन । एवं सर्वं भविष्यतीति अतिस्पृहायुक्तं मनः मुह्यते, केवलं मोहं प्राप्नोति, पदार्थालाभात् मुहुर्मूर्च्छां समायातीति जीवनमरणान्यतराभावात् धिग्जीवनमित्यर्थः ॥ १७ ॥

पुनरनन्यपूर्वा एतावत्कालं मनोरथाभिनिविष्टा किञ्चित्प्रार्थयते व्रजवनौकसामिति ।

**व्रजवनौकसां व्यक्तिरंग ते वृजिनहन्त्र्यलं विश्वमङ्गलम् ।**

**त्यज मनाक् च नस्त्वत्स्पृहात्मनां स्वजनहृद्रुजां यन्निषूदनम् ॥ १८ ॥**

इयं ते व्यक्तिः व्रजवनौकसां वृजिनहन्त्री पापनाशिका । विश्वस्याप्यलमर्थं मङ्गलरूपम् । दोषनिवर्तकं विशेषाकारेणास्माकमेव । गुणाधायकं सर्वेषाम् । अत एतादृशं मनाक्

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

रहसीत्यत्र । या संविदिति । सा येनेत्यग्रिमेणान्वयः । टिप्पण्यां तथा व्याख्यानात् । आद्येन वाक्यमुक्तम् । द्वितीयेन तस्य कामबोधकत्वमुक्तम् । तृतीयेन हास्यमुक्तम् । चतुर्थेन तस्यानन्दबोधकत्वमुक्तम् । पञ्चमेन उर उक्तम् । षष्ठेन तस्याधिकारिबोधकत्वमुक्तमिति विभागः । ज्ञानं वेति । अस्मिन् पक्षे वाक्यं हास्यमिति प्रकारो नेति ज्ञेयम् । वाक्यस्थाने एव वा ज्ञानं गणनीयम् । वीक्षणं चेति । यस्मिन् आनने इत्यर्थः । प्रहसितधर्मिणमादाय चकारः । तेन स्वस्याग्रिमविशेषणयुक्तमिदं त्रयं वीक्ष्येत्यन्वयः । वाक्यपक्षे वीक्ष्य ज्ञात्वा श्रुत्वेति यावत् । पड्गुणत्वमिति । प्रमाणादिचतुष्टयबलं यशः श्रीश्चेति पड्गुणा यस्य तत्त्वमित्यर्थः । अस्मिन् पक्षे ते इत्यस्य बृहदुरः श्रियो धामेत्यत्रैवान्वयः । श्रीधाम चेति । ते इति शेषः । प्रमाणादीति । एतेषां बलं रूपे यस्य तत्त्वमित्यर्थः । यश इति । उरसो बृहत्त्वेन यश उक्तम् । सामुद्रे तथोक्तेः । पूर्वेति । हास्यस्य मायात्वात् तेन पूर्वस्थितिर्निरस्यतीत्यर्थः । ततः स्वयोग्यतेति । उरसः श्रीधामत्वकथनेनेति शेषः । उपक्रान्तामात्मनिन्दामुपसंहरन्ति मुहुर्मूर्छेति ।

व्रजेत्यत्र । विश्वमङ्गलमिति । निषूदनमित्यस्य विशेषणम् । हृद्रोगाणां सूदनं

१८. हे अंग, आपनी आ व्यक्ति व्रजवासीओना पापनो नाश करवावाळी छे, विश्वने मंगलरूप छे, स्वजनोना गोपीजनोना हृदयरोगनो जेनाथी नाश थाय छे, एने आपमां स्पृहावाळा एक अमारेविषे सहज पण धरो. १ मूर्छामिति पाठः । २ एतादृशीमिति पाठ ।

त्यज । त्यागावश्यकत्वे हेतुः त्वत्स्पृहात्मनामिति । त्वय्येव स्पृहायुक्त आत्मा अन्तःकरणं यासाम् । किं त्यक्तव्यमित्याशङ्कायामाह स्वजनेति । स्वजनानां गोपिकानां हृद्रुजां हृदयरोगाणां कामरूपाणां यदेव निषूदनं भवति, नितरां सूदनं नाशनं यस्मात् । केषाश्चित्पापनाशकः, केषाञ्चित्फलदाता, तादृशोस्माकं रोगनिवर्तको भवत्विति ॥ १८ ॥

काचिद्राजसतामसी सखेदमाह यत्त इति ।

**यत्ते सुजातचरणाम्बुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु ।**
**तेनाटवीमटसि तद् व्यथते न किंस्वित् कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥**

इति श्रीभागवते महापुराणे दशमस्कन्धे अष्टाविंशतितमोऽध्यायः ॥

सुजातं यच्चरणाम्बुरुहं चरणकमलं भीताः सत्यः स्तनेषु शनैर्दधीमहि । शनैर्धारणे हेतुः कर्कशेष्विति । प्रियेति सम्बोधनात् स्नेहाद्धारणम् । सुजातमिति तथा महत् सम्यक्प्रकारोत्पन्नं शीतलं सुगन्धि तापनाशकं भवति । अतः स्तनेषु स्थापनम् । प्रियत्वात् धार्ष्ट्येन स्थापनम् । तेनैवातिकोमलेन अस्मान् त्यक्त्वा अस्मद्दोषेण इदानीमटवीमटसि । स्वयमदुःखेन स्थित्वा यद्यन्यस्मै दुःखं दातुं शक्नुयात्, तर्हि प्रयच्छेत्, न तु स्वयमपि दुःखं प्राप्य । तत्रास्माकं संदेहः, किं व्यथते, न वेति । स्विदित्युत्प्रेक्षायाम् । किं न व्यथते, अपि तु व्यथत एव । कूर्पादिभिः शर्करादिभिः । कूर्पशब्देन विषमाः शर्करा उच्यन्ते । तर्हि व्यथत एव, कथमुत्प्रेक्ष्यते, तत्राह भ्रमति धीरिति । बुद्धिः केवलं परिभ्रमति । यदि व्यथत इति निश्चयः स्यात्, तदा बुद्धिः शान्तैव भवेत् । पुनर्यदायाति तेन संदेहः । तत्र हेतुः भवदायुषामिति । भवल्लीलार्थमेवायुर्येषाम् । पूर्वं तु खेदेन मनःपीडा निरूपिता, इदानीं तु मूर्च्छा निरूप्यत इत्यन्तस्थितिः । एवं सर्वासां मूर्च्छापर्यन्तं स्थितिर्ज्ञातव्या । पुनर्लीलाप्रवेशे प्रलापः, पुनः स्वरूपस्थितौ गानमिति । एवं साधनपरीक्षयोर्यावत्, तावत्तासां तापो निरूपितः ॥ १९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणेऽष्टाविंशाध्यायविवरणम् ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

यस्मात्तादृशं वस्तु त्यज, अस्मास्विति शेषः । अस्मासु त्यज स्थापयेत्यर्थः । एतादृशं (वस्तु) वस्तुस्वरूपमेव । गोपनीयत्वादेवमुक्तम् । अध्यायान्ते बुद्धिः शान्तैवेति । मूर्च्छैव स्यादित्यर्थः । पूर्वं त्विति । पूर्वाध्यायान्ते इत्यर्थः । पुनर्लीलेति । लीलासहितो भगवानन्तःप्रविष्ट इत्युक्तम् । तत्र लीलास्थितौ प्रलापः प्रश्न इत्यर्थः । प्रश्नोन्तरङ्ग इत्युक्तत्वादेतत्कथनेन तदध्यायोक्तं त्रयमप्युक्तं ज्ञेयम् । स्वरूपस्थितौ गानमेतदध्यायोक्तमित्यर्थः । तथा चैतदध्यायोक्तं चतुर्थमर्थमादाय चत्वारोत्रेति कारिकोक्तानां चतुर्णां पर्यावृत्तिरिति भावः ।

अष्टाविंशाध्यायव्याख्या समाप्ता ॥

---

१९. हे प्रिय, आपनुं सुजात चरणकमल जे अमे रखेने एने परिश्रम पडे एम भयथी कर्कश स्तनउपर धीमेथी धारण करता हता. आपज जेनुं आयुष्य जीवन छो एवा अमने अमारी बुद्धि भ्रममां पडे छे के आप वनमां पधारो छो तेथी कांकराओवगेरेथी आपना चरणकमलने केटलो परिश्रम पडतो हशे. १ यथेति पाठः ।

## एकोनत्रिंशोध्यायः ।

एकोनत्रिंशकेऽध्याये प्रसादं भगवत्कृतम् ।
रोदनात् प्राप्य तुष्टास्ता निर्णयज्ञा इतीर्यते ॥ १ ॥
नहि साधनसम्पत्त्या हरिस्तुष्यति कस्यचित् ।
भक्तानां दैन्यमेवैकं हरितोषणसाधनम् ॥ २ ॥
सन्तुष्टः सर्वदुःखानि नाशयत्येव सर्वतः ।
अतो निर्णयवाक्यानि भजनार्थं न्यरूपयत् ॥ ३ ॥

एवं पूर्वाध्यायान्ते तासां स्तुतिमुक्त्वा, ततः पूर्वाध्याये तासां प्रलापमुक्त्वा, उभयमप्युपसंहरन् तयोरसाधनतायां जातायां रोदनं कृतवत्य इत्याह इतीति ।

**इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा ।**
**रुरुदुः सुस्वरं राजन् कृष्णदर्शनलालसाः ॥ १ ॥**

पूर्वोक्तप्रकारेण सर्वा एव गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च जाताः । अस्माभिरेकः प्रकार उक्तः । तास्तु चित्रधा विलापयुक्ता जाताः । यदा तयोरसाधनत्वं जातम्, तदा सर्वाः सम्भूय महद्रोदनं कृतवत्यः । रोदने निमित्तमाह कृष्णदर्शनलालसा इति । न तु स्वदेहरक्षार्थम् ॥ १ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

एकोनत्रिंशाध्याये । प्रसादं भगवत्कृतमिति । भगवता सम्पादितं प्रसादं मानापनोदं प्राप्येत्यर्थः । मानिन्य एता अन्तः प्रविश्य रोदनरूपेणालौकिकप्रकारेण प्रसादिताः, मानं च वीक्ष्य तासां प्रसादाय तत्रैवान्तरधीयतेति पूर्वमुक्तमन्तर्धानप्रयोजनं सम्पन्नमिति भावः । प्रकारान्तरेणापि मानापनोदन कर्तुं समर्थस्य रोदनप्रकारसिद्धिपर्यन्तं प्रतीक्षाऽयुक्ता इत्याशङ्क्य, यथान्तर्धाने 'आत्मा यावत् प्रपन्नोभू'दित्यनेन शास्त्रमर्यादोक्ता, तथाविर्भावेपीत्याशयेनाहुः नहीति । साधनसम्पत्त्येति । अनेन साधनेन भगवन्तं प्राप्स्याम इति ज्ञात्वा कृतेन प्रलापरूपप्रश्नेन गानेन चेत्यर्थः । प्रगायन्त्यः प्रलपन्त्यस्तयोरसाधनतायां रुरुदुरित्यर्थस्य वक्ष्यमाणत्वात्। साधनत्वं ज्ञात्वा कृतानि साधनानि साधनसम्पत्तिः। रोदनं तु पूर्वयोरसाधनतायां जातायां दैन्याज्जातं सत् स्वत एव साधनत्वेन पर्यवसन्नम्, नत्विदं साधनमिति ज्ञात्वा कृतमिति भावः । 'मिथो भजन्ती'त्यादिना निर्णयकथने हेतुमाहुः सन्तुष्ट इति। नाशयत्येवेति । स्वमते दुःखस्यानन्दाभावरूपत्वात् प्रतियोगिनाऽभावनाशो भवत्येवेति निश्चयादेवकारः। अत इति। यतो दुःखनाशननियमोतः सर्वांशेन दुःखाभावाय परोक्षभजनप्रतिपादनार्थं वाक्यानि न्यरूपयदित्यर्थः ।

---

१. हे राजन्, पूर्वोक्त प्रकारे गोपीओ गाता तथा विविधरीतें विलाप करवा लाग्यां अने श्रीकृष्णना दर्शननी इच्छाथी सुस्वरे रुदन करवा लाग्यां.

ततो भगवान् ब्रह्मा विष्णू रुद्रश्च भूत्वा पुनः कृष्ण एव जात इत्याह तासामाविरभूदिति ।

**तासामाविरभूत् शौरिः स्मयमानमुखाम्बुजः ।**
**पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ २ ॥**

तासां मध्य एव भगवानाविर्भूतः । मायाजवनिकां दूरीकृत्य भगवान् प्रकटो जातः । यतः शौरिः । शूरस्य पौत्रः । शौर्यमत्र प्रकटनीयमिति । सर्वेषां दुःखनिवारणार्थमेव यदुवंशेऽवतीर्ण इति । तदा तासां दोषनिवृत्त्यर्थं स्मयमानं मुखाम्बुजं यस्य । ईषद्धसन्मुखः । तासां वैक्लव्येन सन्तुष्टः । स्मितयुक्तं स्मयमानम् । स्मयमानाभ्यां वा सहितं मुखाम्बुजं यस्य । भक्तानां दोषः भक्तेभ्यो निर्गतः भक्तौ समायातीति ज्ञापनार्थम् । तदानीन्तनं रूपं वर्णयति पीताम्बरधर इति । पीताम्बरं हास्यसङ्कोचार्थं हस्ते धृत्वा तिष्ठति । अथवा । व्यापिवैकुण्ठरूपेण एतावत्कालं लक्ष्म्या सह रमणं कृत्वा तेनैव रूपेण प्रादुर्भूतः । स्रग्वी वनमालायुक्तश्च । मध्ये ब्रह्मादिपूजां च गृहीतवान् । लक्ष्म्या वा । अतो विलम्ब इत्यपि सूचितम् । अत एव प्रथमश्लोके पूर्वाध्याये 'श्रयत इन्दिरे' त्युक्तम् । इदानीं तु उपेक्षा कर्तुमयुक्तेति प्रादुर्भूतः । अत आगमनमुक्तमग्रे । ( यद्वा । तत्र हेतुमाह विशेषणद्वयेन । इदानीमनाविर्भावे तु न रसो, न वा कीर्तिः । स्वयं त्वाच्छादनेन रसत्वसाधकपीताम्बरधरः कीर्तिमयस्रग्वांश्च । अतः प्रकट इत्यर्थः । अन्यथा तु भक्तानां स्वरूपतिरोधाने उक्तोभयाभावः स्फुट इति भावः । ) ननु कन्दर्पेण कथं न वशीकृतः, स्वपूतना खिन्नेति, तत्राह । साक्षान्मन्मथस्यापि मन्मथः । आधिभौतिको मन्मथः देवतारूपः । तत आध्यात्मिकः सर्वहृदयेषु साक्षान्मन्मथः । तस्याप्ययं मन्मथः आधिदैविकः । सर्वस्यापि सर्वत्वात् । अतः कन्दर्पोपि मुग्धः । कन्दर्पस्याप्यशक्यमोहः । कन्दर्परूपश्च । अतस्तासां दैन्ये प्रादुर्भूते तन्निवारणार्थं कामरूपमेव प्रकटीकृतवान् । अतस्तेन पूर्ववत् कामसम्पन्नाः ताः कृताः ॥ २ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तासामाविरभूदित्यत्र । शौर्यमत्रेति । पूर्वाध्यायोक्तं दानवीरत्वमित्यर्थः । तदा तासां दोषेति । 'निजजनस्मयध्वंसनस्मिते' त्यत्रोक्तप्रकारत्रयेण दोषनिवृत्तिरिति भावः । भक्तौ समायातीति । अयं दोषो भक्तेर्धर्म इति टिप्पण्यामुक्तम् । अतो भक्तावेवागत इत्यर्थः । पीताम्बरो भगवानित्येतावत्येव वक्तव्येपि धरणोक्तेस्तात्पर्यमाहुः हस्ते धृत्वेति । वाससा किञ्चिन्मुखाच्छादनेन हास्यसङ्कोचो रसिकानुकरणसिद्धः । अतः कन्दर्पोपीति । आधिभौतिकाध्यात्मिकाधिदैविकरूपत्वं क्रमेणोक्तम् । पूर्ववदिति । उदारहासेतिवदित्यर्थः ।

---

२. तेमनी वचे कांइक हस्ता मुखे पीतांबरधारी श्रीकृष्ण वनमाळा धारण करी साक्षात् मन्मथना मन्मथ मायानो टेरो दूर करी प्रकट थया. १. सिद्धान्तर्गतं प्रभूणामिलसम्मतिः ।

ततो यज्जातं तदाह तं विलोक्येति ।

तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः ।
उत्तस्थुर्युगपत् सर्वास्तन्वः प्राणमिवागतम् ॥ ३ ॥

तमागतं विलोक्य युगपत् सर्वा उत्थिताः । पूर्वमाविर्भावमुक्त्वा अधुना यदागमनमुक्तम्, तद्विलोकनसमये स्वामिनीभावानुवादरूपम् । पूर्वमन्तःस्थितोऽधुना बहिरागत इति वा ज्ञापनाय तथोक्तिः । ननु किमाश्चर्यं भगवत्यागते उत्थिता इति । तत्र न ह्येताः सजीवाः स्थिताः, किन्तु निर्जीवा इति वक्तुं दृष्टान्तमाह । तन्वः करचरणाद्यवयवाः । प्राणमागतमिवेति । प्रयत्ने हि एकमेवाङ्गं व्यापृतं भवति, प्राणे तु सर्वाणि सम्भूय । अतो बहुवचनं युगपदुत्थानार्थम् । उत्थानं पञ्चानां भाव्यम्, देहेन्द्रियप्राणान्तःकरणजीवानाम् । तत्र जीवस्यान्याधीनमुत्थानम् । परं तस्मिन्नागते सर्वाण्युत्तिष्ठन्ति । स तु भगवति प्रविष्टः, भगवत्सङ्गे समागतः, भगवत्युत्थित एवोत्थितः । अन्तःकरणं तु उत्थितमित्यत्र हेतुमाह प्रेष्ठमिति । अत्यन्तं प्रियो भगवान् । तं दृष्ट्वा उत्थितम् । भगवति या प्रीतिस्तया कृत्वा उत्फुल्ला दृक् यासाम् । अनेन प्रीत्या इन्द्रियाणामुत्थानम् । ( एतासां विलोकनार्थमेवागमनमित्यागमनमात्रेण विलोकनमादौ सम्पन्नम् । उत्फुल्लता तु ततो भिन्ना । तस्याः पुष्पधर्मत्वेन तदुक्त्या दृशां कमलत्वं व्यज्यते । तत्र प्रीतेर्हेतुत्वोक्त्या इयदवधि तत्कार्याभावेनाधुनैव तत्प्राकट्यं ज्ञाप्यते रवेरिव । विरहे सर्वतिरोधानादेतत्तिरोधानमप्यासीत् । अत एवाबलात्वमुक्तम् । कार्यमात्रे स्वसामर्थ्याभावज्ञापनार्थम् । दृष्टान्तेनैव प्राणानामुत्थानम् । प्राणानां भगवान् प्राण इति । शरीरं तु पूर्वोक्ताभिलषितपदार्थत्वेन निरूपणात् उत्थितमित्यत्र तमिति हेतुः ) ॥ ३ ॥

एवमुत्थितानां भगवता सह स्थितानां कार्यमाह काचिदिति पञ्चभिः ।

काचित् कराम्बुजं शौरेर्जगृहेऽञ्जलिना मुदा ।
काचिद् दधार तद्बाहुमंसे चन्दनरूषितम् ॥ ४ ॥

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तं विलोक्येत्यत्र । पूर्वश्लोके तासां मध्य एवाविर्भूतो जात इत्युक्तम् । अथवेति पक्षेपि टिप्पण्यां धर्मिणामेवागमनमुक्तं जातम् । धर्म्यागमनस्वरूपमाहुः पूर्वमाविर्भावेति । भगवत्सङ्गे समागत इति । अन्तःस्थिते भगवति तत्र स्थितः । भगवति बहिरागते अयमपि स्वस्थाने समागत इत्यर्थः । तथाचागतमितिपदेनोक्तमागमनं जीवोत्थाने हेतुरित्यर्थः ।

३. ते परम प्रिय प्रभुने पधारेला जोइने प्रीतिथी प्रफुल्लित दृष्टिवाळी सर्वे अबलाओ जेम करचरणादि अवयवो प्राणना आववाथी सचेतन थाय तेम सामटां उभा थयां.

४. कोइक गोपीजने प्रभुनुं हस्तकमल आनंदथी पोतानी अंजलिमां धारण कर्युं. कोइक गोपीजने चंदनथी लिप्त प्रभुना हाथने पोताना खभापर धर्यो.

१. ( ) प्रभूणां स्वादिति ।

काचिदञ्जलिनागृह्णात्तन्वी ताम्बूलचर्वितम् ।
एका तदङ्घ्रिकमलं सन्तप्ता स्तनयोरधात् ॥ ५ ॥
एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला ।
घ्नतीवैक्षत् कटाक्षेपैः सन्दष्टदशनच्छदा ॥ ६ ॥
अपराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखाम्बुजम् ।
आपीतमपि नातृप्यत्सन्तस्तच्चरणं यथा ॥ ७ ॥
तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च ।
पुलकाङ्ग्युपगूह्यास्ते योगीवानन्दसम्प्लुता ॥ ८ ॥

पूर्वमनेकविधा अपि भगवत्याविर्भूते सप्तविधा एव जाताः । एको भगवान् सर्वार्थे प्रकटीभूतः । तत्र या अग्रे स्थिताः, ता अपि निकटस्थिता एव पूर्वमुच्यन्ते । शुद्धसात्त्विक्यः शुद्धरजोयुक्ता रजःसात्त्विक्यश्च, निर्गुणाश्च, शिष्टाः सप्तविधा गण्यन्ते । काचिदत्र शौरेः कराम्बुजं मुदा अञ्जलिना अगृह्णात् । एक एव हस्तो भगवता प्रसारितः । पीताम्बरधर इति द्वितीयेन हास्यनिवारणार्थं पीताम्बरग्रहणात् । बहुमानेन ग्रहणमञ्जलिना भवति । शौरेरिति वीरत्वज्ञापनाय । मुदेति पूर्वोक्तक्लेशव्यावृत्त्यर्थम् । अन्या पुनस्ततोप्यन्तरङ्गा भविष्यामीति तद्बाहुमंसे दधार । यथालिङ्गितैव भवति । अग्रे एतस्या विनि-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

काचिदित्यत्र । एको भगवानिति । अयं सर्वासामर्थे प्रकटः । अतस्तत्र सङ्घे या अग्रे दूरे स्थितास्ता अपि निकटस्थिता एव ज्ञेयाः । सर्वासामर्थे प्राकट्यात् । सर्वत्रैव प्रकटीभूय सर्वासामेव नैकट्यं सम्पादितवान्, अतः कराम्बुजधारणादिकार्यं युगपदेव सर्वासां सम्पन्नमिति भावः । काचिदित्येकवचनमेकजातीयभाववत्त्वेन । वस्तुतस्तु तादृश्योपि बह्वय इति ज्ञेयम् । सप्तविधत्वस्य धर्मधर्मिभेदेन विवक्षितत्वेपि पूर्वोक्तोप्यंशोधुना तिष्ठतीत्याशयेन गुणप्रकारेण सप्तविधत्वमाहुः शुद्धसात्त्विक्य इति । रजःसात्त्विक्यश्चेति चकारेण सत्त्वप्रधानराजस्यः । निर्गुणाश्चेति । चकारेण तमःसजातीयभाववत्य इति टिप्प-

५. कोइक कोमलांगी गोपीजने प्रभुनुं तांबूलचर्वित अंजलिवडे ग्रहण कर्युं. बीइक अत्यंत विरहथी तप्त गोपीजने प्रभुनुं चरणकमल पोताना स्तनपर धर्युं.

६. प्रेमना आवेशथी विह्वल थयला एक गोपीजन भ्रकुटि चढावीने दांतवडे होठ डसीने कटाक्षोथी प्रहार करता होय तेम जोवा लाग्या.

७. कोइक बीजा गोपीजन प्रभुना मुखारविंदनुं अनिमिष दृष्टिथी पान करतां छतां संत पुरुषो प्रभुना चरणना रसथी तृप्ति पामेज नहि तेम तृप्ति पाम्या नहि.

८. कोइक गोपीजने नेत्रद्वारथी प्रभुने हृदयमां धारण करी, आंखो मींची दइ, पुलकांगी थई, प्रभुनुं आलिंगन करी, योगीनी माफक आनंदमां गरक थइ तेज स्थितिमां बेठा.

योगो वक्तव्यः। 'भुजंमगरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु' इति। अत एव तदीयो धर्मोन्तःस्थितस्तस्या निरोधं साधयिष्यतीति चन्दनरूपितमित्युक्तम्। चन्दनेन रूपितं लिप्तम्। चन्दने हेतुः पूजा लक्ष्मीर्वा पूर्वोक्ता। तथा ताम्बूलेपि। एवं सामग्रीप्रकटनेन तासां देवोत्तमानां च फलं प्रदर्शितम्। एता आरोढुकामाः, देवोत्तमास्तु पूजका इति। अतः काचित्ताम्बूलचर्वितमञ्जलिना अगृह्णात्। तस्याः ताम्बूलयोग्यतामाह तन्वीति। कोमलाङ्गी। एका पुनर्बहिःस्थिता साक्षात्सम्बन्धमलभमाना, उत्थातुं वा अशक्ता, उपविश्यैव तदङ्घ्रिकमलं स्तनयोरधात्। अनुत्थाने धारणे च हेतुः सन्तप्तेति। सा ह्यत्यन्तं विरहातुरा एकेति। अन्या पुनर्दूरस्था तामसी तमसा भ्रुकुटिमाबध्य कटाक्षेपैः घ्नन्तीव ऐक्षत्। अत्र सवर्णे वर्णलोपः। कटाक्षक्षेपैरित्यर्थः। प्रेम्णा सहितो यः संरम्भः क्रोधः तेन विह्वला। सम्यक् दष्टः दशनच्छदो यया। तादृशी च जाता। भ्रुकुटिबन्धनेन चित्तकौटिल्यम्। प्रेमसहितसंरम्भेण इन्द्रियवैक्लव्यम्। सन्दंशेन देहक्षोभः। घ्नन्तीवेति प्राणैर्चलस्फूर्तिः। ज्ञानसाधनमपि तस्या विकृतम्। प्रान्तदृष्टिः कटाक्षः। तत्रापि आक्षेपभावः। यथा वाचावगुरणम्, तथा कटाक्षा एव आक्षेपरूपाः निरन्तरं प्रवृत्ताः। तादृशभावस्य पूर्णत्वाय कालनियमनार्थं वा भ्रुकुटिभङ्गः। स्वभावनियमनार्थं च संरम्भः। लोभनाशार्थं दंशः। मोक्षाभावार्थं ज्ञानवक्रता। प्रमाणनिराकरणार्थं हननमिति। यतो लौकिकी भक्तिः पुष्टा भवति। एतदर्थमेषा निरूपिता।

एवमतिपुष्टां निरूप्य अत्युत्तमां निरूपयति अपरेति। एषा हि भगवद्दर्शनेन

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

व्यामुक्तमेव। एवं षट्। शिष्टाश्चतस्रः एकविधा अत्रोक्ता, एवं सप्त। पञ्चमाध्याये तु 'काचित्सम'मित्यादिना भगवद्गुणरूपत्वमेव वक्ष्यते। निर्गुणाश्चेत्यत्र क्रमाविवक्षया पूर्वं तामसी ततो निर्गुणा निरूपयिष्यत इति ज्ञेयम्। एतस्या विनियोग इति। एतस्यां विनियोगो बाह्वोरिति शेषः। तदीयो धर्म इति। बाहुनिष्ठो धर्म इत्यर्थः। पूजा लक्ष्मीर्वेति। स्रग्विपदसूचितायां उभयकृतपूजायां पीताम्बरधरपदसूचितलक्ष्मीरमणे वा चन्दनालेप इत्यर्थः। स्रगादिप्राकट्यपूर्वकभावाविर्भावे तात्पर्यमाहुः एवं सामग्रीति। अत इति। उभयकृत्यप्रदर्शनेनानुग्रहज्ञापनादित्यर्थः। ताम्बूलयोग्यतामिति। कोमलाङ्ग्या मृदुत्वचि ताम्बूलप्रतिफलनेऽधिका शोभा रसशास्त्रसिद्धा। अतस्तादृशशोभावलोकनाय ताम्बूलं दत्तवानिति भावः। बहिःस्थितेति। मण्डलाद्बहिर्दूरे स्थितेत्यर्थः। सर्वासां नैकट्यं पूर्वं व्युत्पादितमिति पक्षान्तरमाहुः उत्थातुं वा अशक्तेति। दूरस्था तामसीति। यावता तादृगीक्षणेन मानभावस्तिष्ठति, तावद्दूरस्थेत्यर्थः। तादृशभावस्येति। पूर्णतास्थापनाय कालनियमनं कर्तव्यं तदर्थं भङ्ग इत्यर्थः। भ्रुकुटिभङ्गकार्यं चित्तकौटिल्यं पूर्वमुक्तम्, अतोत्र वाशब्दः।

---

१. सत्त्वप्रधानतामसः, रजःप्रधानतामसः, तमःप्रधानतामसः, तमःप्रधानतामसः।

गतदोषा, अतो ध्यानेन भगवन्तं हृदये स्थापयितुकामा नेत्राभ्यां नेत्रद्वारा भगवन्तं हृदि स्थापितवती । अत्र लावण्यामृतं पेयम्, मुखस्याम्बुजत्वोक्तेः । अनिमिषदृग्भ्यामिति पानकरणम् । द्रवद्रव्यस्यान्तर्निवेशनं पानम् । मध्ये रसविच्छेदो भविष्यतीति अनिमिषदृग्भ्यां पानम् । नेत्रयोरञ्जलित्वं लावण्यामृतस्य विरलत्वात् । प्रीतिसेवनमत्राभिप्रेतम् । यद्यपि आसमन्ताद्धर्मसहितं सर्वमेवाभिनिविष्टं स्वाधीनं जातम् । यदैवेच्छति तदैव हृदये पश्यतीति तथापि नातृप्यत् अलंभावं न कृतवती । तत्र हेतुर्विषयसौन्दर्यम् । न तु प्रयोजनाभावः प्रतिबन्धकः । एतदर्थं दृष्टान्तमाह सन्तः तच्चरणं यथेति । सन्तो हि जातकार्याः । तथापि चरणारविन्दे सहजो रसः । न तु किञ्चित् प्राप्तव्यं निवर्तनीयं वा ।

एका पुनर्दूरस्था अनया तुल्यशीला योगानुसारेण भगवन्तं गृहीतवतीत्याह तं काचिदिति । पूर्वं लौकिकी पश्चाद् भक्तिमार्गानुसारिणी निरूपिता । इयं योगानुसारिणी । अतोऽस्याः सर्वावयवे दृष्टिः । उभयोरेकीकरणम्, अन्यथा दृष्टिभेदः स्यात् । पूर्वस्यास्तु दर्शनमेव प्रयोजनम् । एषा विरलेति काचिदित्युक्तम् । तं पूर्वोक्तम् । 'न खलु गोपिकानन्दनो भवानि'ति यथा निरूपितम् । नेत्ररन्ध्रेणेत्येकवचनं रूपप्रवेशार्थम् । हृदि

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अपरेत्यत्र । अत इति । गतदोषत्वादित्यर्थः । नेत्रद्वारा सेवनपदार्थमाहुः हृदि स्थापितवतीति । पूर्वोक्तं ध्यानेन स्थापनं स्वाधीनत्वेन स्थापनमिति विभेदः । स्वाधीनत्वेन स्थापनरूपमेव पानमापीतमित्यनेनानूदितम् । पेयमाहुः लावण्यामृतमिति । अम्बुजस्थापने मकरन्द इव मुखस्थापने लावण्यं स्थापितं भवतीति भावः । हृदिस्थापनस्य पानत्वं व्युत्पादयन्ति द्रवद्द्रव्यस्येति । दृग्भ्यां पाने हेतुमाहुः नेत्रयोरिति । अञ्जलित्वं पुटाकारत्वमित्यर्थः । विरलं ह्यमृतं पुटेनैव पातुं शक्यमिति भावः । सुधातोः पानार्थकत्वं कथमित्याशङ्क्याहुः प्रीतिसेवनमिति । धात्वभिप्रेतोर्थस्त्वयमेव । परं हृदि स्थापनं विना प्रीतिसेवनं न भवतीति तद्धेतुत्वेन सोर्थ उक्त इति भावः । आपीतमित्यत्राडोर्थमाहुः स्वाधीनं जातमिति । अतो ध्यानेनेत्यनेनोक्तं कार्यं सम्पन्नमित्यर्थः । तथाच स्वाधीनं जातमपि मुखाम्बुजं नेत्राभ्यां हृदि स्थापयन्ती नातृप्यदित्यर्थः ।

तं काचिदित्यत्र । सर्वावयवे इति । सम्पूर्णस्वरूपस्यैव नेत्रद्वारा हृदिस्थापनादिति भावः । उभयोरिति । सर्वेषामिति वक्तव्येपि संयोग उभयोरेव । अन्येषां पुनस्तेनेत्याशयेनोभयोरित्युक्तम् । टिप्पण्यां योगे हीति कथनादयं दोषो योगमार्ग एवेति पूर्वत्र नायं दोषः प्राप्नोतीत्याशयेनाहुः पूर्वस्या इति । सा तु भक्तिमार्गानुसारिणीति दर्शनमेव फलम्, न तु रूपकल्पनापेक्षेत्येवकारः । परिदृश्यमानमेव स्वरूपं हृदिस्थितं भवतीति भावः । अत्र टिप्पण्यां प्रकृते त्विति । केवलयोगमार्गेऽपराधमात्रम् । योगानुसारिभक्तिमार्गे तु स्वरूपेपि भेदापत्तिः स्यादित्यर्थः । रूपप्रवेशार्थमिति । समुदितस्वरूपस्यैकत्वादि-

कृत्वेति । हृदि कृत्वा । असमासेऽपि ल्यप् । हृदिकृत्येत्यलुक्समासो वा । ततोऽन्तःप्रविष्टो बहिर्मा गच्छत्विति निमीलनं कृतवती । न हि तस्या बुद्धौ भगवान् बहिरवशिष्टोऽस्ति । स्वकीयो वा भागस्तया गृहीत इति । चकारात् सर्वेन्द्रियनिवर्तनम् । ततोऽन्तरानन्दे पूर्णे पुलकाङ्गी जाता । केवलानन्देन पुलके गोपीत्वं न भविष्यतीति तदर्थं विशेषमाह उपगूह्यास्त इति । अयं रोमाञ्चः सात्त्विकभावे प्रविष्टः । अत एवान्तरुपगूह्यालिङ्ग्य आस्ते । तामेव स्थितिं धारितवती अवस्थान्तराभावाय । ननु तस्या उत्तरत्र कार्यम्, भगवता सह सम्भोगः कर्तव्यः, आलापाः, गृहे च गन्तव्यमिति कथं तामेवावस्थां स्थापितवती, तत्राह योगीवेति । योगी हि तथैवाग्रे सर्वं कार्यं साधयति, तथेयमपि तयैवावस्थया सर्वं साधनीयमिति स्थिता । किञ्च । आनन्दसम्प्लुता । आनन्दे निमग्ना । अत एव बहिःसंवदेनरहिता । संवेदनायामेव सत्यां कार्यानुसन्धानम् । न हि पूर्णे आनन्दे कश्चन कामोस्ति ॥ ८ ॥

एवं विशेषाकारेण कृत्यमुक्त्वा सर्वासां सामान्याकारेण प्रयोजनमाह सर्वास्ता इति ।

**सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः ।**
**जहुर्विरहजं तापं प्राज्ञं प्राप्य यथा जनाः ॥ ९ ॥**

यो हि बलिष्ठरजस्तमोभ्यां व्याप्तयोरपि फलसम्पादकः, तस्य क्षुद्रगुणक्षोभयुक्तानामासामुद्धारे कः प्रयास इति वक्तुं केशवेत्युक्तम् । तस्य योयमालोकः आलोकनं प्रकाशो वा अन्तर्बहिः । अत एव स एव परमोत्सवः । यथा लौकिकानां महाराज्यप्राप्तिः पुत्रोत्सवो वा । तेन निर्वृताः सर्वा एव जाताः । एवं तासामिष्टसिद्धिरुक्ता । अनिष्टनिवृत्तिमाह जहुर्विरहजमिति । नन्वेवं सति मुक्ता एव ता भवेयुः । नहि संसारे निवृत्ते भगवत्साक्षात्कारेण परमनिर्वृतौ सत्यां कश्चन पुरुषार्थोऽवशिष्यते । तत्राह प्राज्ञं प्राप्येति । प्राज्ञः सुषुप्तिसाक्षी । स्वाप्यये भगवदाविर्भावो निरूपितः । तत्र च जीवानां

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तिभावः । केवलानन्देनेति । आत्मानन्देनेत्यर्थः । किञ्चेति । योगिवत्तथा साधयिष्यामीति ज्ञानात्तथास्ते । आनन्दसम्प्लवेन तादृशानुसन्धानाभावाच्च तथास्ते इति समुच्चयः । सर्वासामिति । भगवता सामान्याकारेण सर्वासां सम्पादितम्, विरहजतापनिवृत्तिरूपं प्रयोजनं फलमाहेत्यर्थः ।

सर्वास्ता इत्यत्र । अत एवेति । अन्तर्बहिर्विद्यमानत्वादेवेत्यर्थः । सर्वा एवेति । एकत्रोक्तं नेत्ररन्ध्रेण हृदि स्थापनादि सर्वास्वेव प्रकारभेदैर्ज्ञेयमित्यर्थः । इष्टसिद्धिरुक्तेति पूर्वानुवादः । नन्वेवं सतीति । अनूदिते प्रकारे सतीत्यर्थः । तमाहुः संसारे इति ।

९ ते सर्वे गोपीजने प्रभुदर्शनना परमोत्सवथी सुखनिमग्न थया, अने जेम संसारी जन सुषुप्तिसाक्षी परमात्माने पामीजेम तापथी मुक्त थाय तेम विरह तापथी मुक्त थया.

प्रवेशो वासनासहितानाम् । तं प्राप्य यथा जनाः अधिकारिणो मनुष्याः पुनरायान्ति, एवमत्राप्यागमिष्यन्तीति भावः । यतो जनाः जायमानाः । न तु उत्तमाधिकारिणः । स्वसम्बन्धख्यापनार्थमेव परं भगवान् प्रकटः ॥ ९ ॥

एवं तासां कृत्यमुक्त्वा ताभिर्भगवत्कृत्यमाह ताभिरिति ।

**ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः ।**
**व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥ १० ॥**

तासां सम्बन्धे प्राकृतीनां भगवतोऽन्यथात्वं शङ्केत, तन्निवर्त्यते । अन्यथा स्वार्थमेव भगवत्तिरोधानं स्यात् । 'स नैव व्यरमत्, तस्मादेकाकी न रमत' इति श्रुतेः । लोकोपि केवलं भगवन्तं पश्यन् न निर्वृतो भवति, किन्तु सर्वशक्तियुक्तं परम् । 'पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्नें'ति वाक्यात् । पूर्ववत् ता दुःखिताश्चेत्, तदोत्तमता न भवतीत्याह विधूतशोकाभिरिति । ताः पूर्वोक्ताः । गुणास्तासामुक्ता एव । सर्वथा प्रपन्ना इति । मध्ये शोकः समजनि । तस्मिन्निवृत्ते यथापूर्वमेव ताः । भगवांश्च षड्गुणैश्वर्ययुक्तः । तथापि प्राकृत इव यदि परिच्छिन्नकामः स्यात्, तथापि वैलक्षण्यात्

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

स्वसम्बन्धेति । न तु स्वस्मिन् लयं सम्पादयितुमित्यर्थः । तासां कृत्यमिति । अयं 'काचित् कराम्बुजं शौरे'रित्यारभ्य सर्वेषामनुवादो ज्ञेयः । दृष्टान्तेन पुनरागमनरूपं कृत्यमस्मिन्नपि श्लोके निरूपितमिति भावः । ताभिरिति । ताभिः सह स्थितस्य भगवतः कृत्यमधिकशोभासम्पादनमित्यर्थः ।

ताभिरित्यत्र । अन्यथात्वमिति । भगवतोपि प्राकृतत्वं शङ्केत, अतस्तासां प्राकृतीत्वं शोभाकथनेन निवर्त्यत इत्यर्थः । उपपादयन्ति अन्यथेति । तासां प्राकृतीत्वे तत्सम्बन्धेन स्वस्यापि प्राकृतत्वेऽलौकिकशोभातिरोभावशङ्कया भगवत्तिरोधानमिति स्यात्, कुतस्तरां तत्सहितस्य शोभेत्यर्थः । स नैवेति । इति श्रुतेः रिरंसायामपि सत्यां यत्तिरोहितवांस्तत्पूर्वोक्तशङ्कयैव स्यादिति पूर्वोक्तेनैवान्वयः । लोकोपीति । ताः स्वसहितस्य भगवतो दर्शनेन निर्वृताः, न तु पूर्वाध्यायद्वयवद्भावनया केवलदर्शनेनेति पूर्वश्लोके निरूपितम् । लोकोपि तथैवेत्यपिशब्दः । परमिति । दुःखितत्वेपि लोकनिर्वृतिस्तु भवति, परन्तु भगवति रसोत्तमता न भवतीत्यर्थः । परिच्छिन्नेति । कालपरिच्छिन्नोऽनित्यः कामो यस्येत्यर्थः । एतासामपरिच्छिन्नकामत्वं ताभिरित्यनेन स्मारितया सर्वथा प्रपत्त्या निरूपितम् । अनित्यकामत्वे कामाभावदशायां प्रपत्त्यभावात् सर्वथा प्रपत्तिर्न भवेदिति भावः । तथा च

---

१०. हे तात ते शोकरहित थयला गोपीजनथी विटलायला अच्युत जेम प्राकृत पुरुष शक्तिओथी शोभे तेम अधिक शोभ्या. १. रेमे इति पाठ ।

न रोचेत । भगवाँस्तु पूर्णकाम इत्याह अच्युत इति । अतः ताभिर्वृतः अधिकं व्यरोचत सहजापेक्षया । उक्तार्थविश्वासेन हि श्रोता वक्तारं पुष्णातीव पितेव पुत्रं स्वार्थम् । अत एवाग्रेऽतिगुप्तार्थकथनेन वक्ता श्रोतारं सुखयति । अन्यथानधिकारिणं मत्वा न वदेदलौकिकमर्थम् । प्रकृते चास्मिन्नर्थे राज्ञो विश्वासं दृष्ट्वातिसन्तोषेण स्नेहेन च पितृत्वेन सम्बोधयति तातेति । नन्वेवं सति भगवत्कान्तेः तारतम्यात् सहजत्वं न स्यात् । अत आह पुरुषः शक्तिभिर्यथेति । यथायं प्राकृतोपि पुरुषः सर्वसामर्थ्येषु लीनेषु लोकप्रतीत्या न रोचत इव, स चेत् क्रियाज्ञानादिशक्तीराविष्करोति, तदाधिको रोचते, तथा अयमपि भगवान् रोचमान एव प्रकटासु शक्तिषु गोपिकासु सर्वप्रतीत्या भावुकानामप्यन्तःकरणेन अधिकं व्यरोचत । अतिसौन्दर्यं प्राप्तवान् । ततो भगवान् परमानन्दयुक्तः स एव । 'एष ह्येवानन्दयाती'ति श्रुतेः ॥ १० ॥

तासामानन्दजननार्थं यत् कृतवाँस्तदाह ताः समादायेति ।

**ताः समादाय कालिन्द्या निर्विश्य पुलिनं विभुः ।**
**विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥**

ताः सम्यक् आदाय समीचीने पुलिने निर्विश्योपविश्य विभुर्जातः । कालिन्दी कलिन्दकन्या । कलिं द्यतीति कलिन्दः । अतस्तस्याः पुलिने तासामन्योन्यं भगवता वा कलहो न भविष्यतीति ज्ञापितम् । पुलिनं वर्णयति क्रीडायोग्यत्वार्थं सार्धेन । सर्वत

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

भगवतः परिच्छिन्नकामत्वे वैलक्षण्यं स्यादित्यर्थः । भगवांस्त्विति । तुशब्देनैतासां व्युदासः । भक्तानामपि पूर्णकामत्वे भगवदपेक्षा न स्यादिति 'आनन्दादयः प्रधानस्ये'ति सूत्रे निरूपणादिति भावः । एता अपरिच्छिन्नकामाः, भगवाँस्तु पूर्णकाम एव, अतस्तत्कामस्य परिच्छेदः सम्भावयितुमपि न शक्य इत्यर्थः । अस्त इति । उभयोरपरिच्छिन्नकामत्वादित्यर्थः । व्यरोचतेति । शोभाया अन्यदर्शनसापेक्षत्वेप्यन्योन्यमेव स्वस्वसहितदर्शनम्, तद्भावयितॄणां भक्तानां च भावनया तद्दर्शनमित्याहुः सर्वप्रतीत्या भावुकानामप्यन्तःकरणेनेति ।

ताः समादायेत्यस्याभासे । यत्कृतवानिति । विभुत्वं प्रकटितवानित्यर्थः । अत्र श्लोके क्रियाया अनुक्तत्वात् क्रियान्तराध्याहारापेक्षया स्वरूपधर्मविभुत्वप्राकट्यकथनमेव वरमित्याशयेनाहुः विभुर्जात इति । व्यापको जातः । सर्वासामेव निकटे स्थितो जात इत्यर्थः । तासामन्योन्यमिति । मदो मानश्चेत्यर्थः । स्वस्मिन् सर्वत आधिक्यज्ञानरूपमदेनैवान्योन्यसापत्न्यभावेन कलहो भवतीति भावः । अत्र पुलिने यमुनायाः कलिखण्डनरूपो धर्मः प्रकट इति पूर्वलीलापुलिनाद्विशेषः । तत्र तु मदमानौ सम्भविष्यत इति यमुनाया

---

११. तेमने साथे लईने कालिंदीना तीरपर पधारीने पोते विभु थया. ते तीर ते समये खीलतां कुंद अने मंदार पुष्पोथी सुवासित थयला वायुवाळुं अने भ्रमरोवाळुं हतुं.

उपरि अधश्चेति । प्रथमतः सर्वतः सौभाग्यमाह । विकसन्ति कुन्दमन्दारपुष्पाणि तेषां सुरम्यनिलः षट्पदा भ्रमराश्च यत्र । वायोस्त्रयो गुणाः स्पष्टाः । मकरन्दोपि पुष्पेष्वधिकः । तेन मत्ता भ्रमरा अपि नादसाधकत्वेन गानाद्युपयुज्यन्ते । विकासो वाय्वर्थ एव । कुन्दगन्धः शान्तः । मन्दारगन्धः पुष्टः । तेन शुभाशुभकामयोरुद्बोधको निरूपितः । ( शत्रन्तोक्त्या प्रभुनिवेशनसमये एव विकासारम्भो, न तु पूर्वमपीति ज्ञाप्यते । अन्यथा विकसितेति वदेत् । एवं सति यस्मिन् क्षणे यस्यार्थस्योपयोगः, तस्मिन्नेव क्षणे तत्कार्यं भवति, नान्यदेति लीलामात्रोपयोग्येवात्रत्यं सर्वमपि इति ज्ञापितं भवति । अन्यथा सार्धाध्यायत्रयोक्तलीलायां क्रियमाणायां भूयस्येव रात्रिरतीतेत्यधुनैव विकासे हेत्वन्तराभावात् स न भवेत्, अत एव न वदेदपि । एवं सत्येतादृक्कुन्दादिसम्बन्धित्वेनोक्तत्वादनिलादयोऽप्यधुनैव प्रवृत्ताः न पूर्वमपीति ज्ञेयम् । ) स्वतन्त्रतयापि सौरभ्यप्रतीत्यर्थं सुरभिरनिल उक्तः । एवं परितो जलं, परितः सुगन्धः, परितः पुष्पाणि, परितो वायुः, परितो नाद इति निरूपितम् ॥ ११ ॥

उपर्युत्तमतामाह शरदिति ।

**शरच्चन्द्रांशुसन्दोहध्वस्तदोषातमःशिवम् ।**
**कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥**

शरत्कालीना ये चन्द्रांशवः, तेषां ये सन्दोहाः समूहाः, तैर्ध्वस्तं दोषाया रात्र्या-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

एतद्धर्मप्राकट्यं सूचयितुं 'नद्याः पुलिनमाविश्ये'ति श्लोके नदीपदमेवोक्तम् । षट्पदा भ्रमराश्चेति । तेषामित्यस्यात्राप्यन्वयः । तथा च सुरम्यनिलश्च षट्पदाश्चेति द्वन्द्वं कृत्वा विकसत्कुन्दमन्दाराणां ते यत्रेति व्यधिकरणपदो बहुव्रीहिः कर्तव्य इति भावः । वायोर्गुणान्तराकथने हेतुमाहुः स्पष्टा इति । एवं समासे तात्पर्यमाहुः मकरन्दोपीति । उभयत्र पुष्पसम्बन्धकथने पुष्पेष्वधिको मकरन्दोपि उक्तो भवति । भ्रमरा अपि तत्सम्बन्धान्मत्ता इत्युक्तं भवेत् । भ्रमरा अपि इति । स्यादिति शेषः । मन्दारैः सुरभिरिति तृतीयासमासे तु भ्रमरेषु पुष्पसम्बन्धाभावान्मादो नोक्तः स्यादिति भावः । भ्रमरेषु मादकथनप्रयोजनमाहुः नादेति । यत इति शेषः । अधुना विकासस्य प्रयोजनमाहुः वाय्वर्थमिति । वायौ स्वगन्धसम्पादनार्थम्, न तु पूर्ववत् प्रसूनावचयेन वेण्यादिषु प्रसूनस्थापनार्थमित्येवकारः । परितो जलमिति । पुलिनस्य विशेष्यत्वादस्मिन्नप्यर्थे जलमुक्तमेवेति भावः ।

शरदित्यत्र । शिवत्वे हेत्वन्तरस्यानुक्तत्वात् समभिव्याहारेण पूर्वविशेषणमेव हेतु-

---

१२. शरद् ऋतुना चन्द्रना किरणोना समूहथी रात्रिनो अंधकार त्यां नाश पाम्यो हतो, तेथी ते तीर अत्यंत कल्याणरूप हतुं अने कृष्णा—श्रीयमुनाजीना हस्तरूपी तरंगोथी त्यां कोमल वालुका (रमण रेती) पथराई गई हती.

स्तमो यत्र । तेन अत्यन्तं शिवं कल्याणरूपम् । अन्धकारे गतेपि यदि भूताद्यभिनिविष्टं भवेत्, तथापि तदाप्यसमञ्जसमिति कल्याणरूपता निरूपिता । निर्विघ्नमभिमेष्टकार्यसम्पादकत्वज्ञापनाय च । परितश्च निकृष्टाः पदार्थाः नोपर्यधश्च । अधस्तस्य पुलिनस्य गुणानाह कृष्णेति । सापि भगवद्रसनाम्नी भूसंस्कारं कृतवती भगवद्रमणार्थम् । कृष्णाया हस्तरूपाः तरलास्तरङ्गाः तैः आचिताः कोमलवालुका यत्र । अन्यथा हस्तरूपताभावे समता न स्यात् । तेन शैत्यं कोमलत्वं समता चोक्ता । तादृशं पुलिनं निर्विश्य तत्र गत्वा वा स्थितः । उपवेशनमग्रे वक्ष्यति । भावेनैवोपवेशनम् ॥ १२ ॥

ततो गोपिकानां कृत्यमाह तद्दर्शनाह्लादेति ।

**तद्दर्शनाह्लादविधूतहृद्रुजो मनोरथान्तं श्रुतयो यथा ययुः ।**
**स्वैरुत्तरीयैः कुचकुङ्कुमाङ्कितैरचीक्लृपन्नासनमात्मबन्धवे ॥ १३ ॥**

शोके गतेपि कामस्तापात्मको वर्तत एव, सम्बन्धस्याजातत्वात् । यदा पुनस्तादृशस्थाने तदर्थं गतः, तदा तद्दर्शनेन तस्य तदवस्थामापन्नस्य दर्शनेन योऽयमाह्लादः भाव्यर्थनिश्चयात् तेन विधूताः हृद्रुजो यासाम् । एवं निवृत्ते दोषे तासां यज्जातं तदाह मनोरथान्तं ययुरिति । ताभिर्यथाकथञ्चित् सम्बन्धोऽभिलषितः । जातस्तु ततोऽनन्तगुणसामग्रीसहितः । अतो मनोरथस्याप्यन्तो यत्र तादृशं ययुः । नन्वनभिलषितं कथं प्रापुः, तत्राह श्रुतयो यथेति । श्रुतयो हि निरन्तरं भगवद्गुणवर्णनपराः । तेन धर्मेण, वाचः पूर्वरूपं यन्मनः, तस्यापि यदगम्यं भगवत्स्वरूपं, तत् प्राप्तवत्यः । 'यतो वाचो निवर्तन्ते

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

रित्याशयेनाहुः तेनात्यन्तं शिवमिति । अर्धद्वयार्थमुपसंहरन्ति परितश्चेति । नेत्यस्य देहलीदीपन्यायेनोभयत्राप्यन्वयः । पुलिनं निर्विश्येति । विभुर्जात इति पूर्वानुसन्धानेनान्वयः । विभुत्वस्य सार्वदिकत्वादधुना प्राकट्यारुच्या पक्षान्तरमाहुः तत्रेति । निर्विश्य स्थित इत्यर्थः । अधुनोपवेशनाकथने हेतुमाहुः भावेनैवेति । ताभिर्भावेनासने कृते सत्युपवेशनम्, भवतीति शेषः । अतोग्रे वक्ष्यतीत्यन्वयः । गोपिकानां कृत्यमिति । *मनोरथान्तप्राप्त्या आसनक्लृप्तिरित्यर्थः ।*

तद्दर्शनेत्यत्र । 'विधूतशोकाभि'रित्युक्त्वा'द्विधूतहृद्रुज' इति पुनरुक्तिर्भवेदित्याशङ्क्याहुः शोके गतेपीति । अत्र मनोरथस्यान्तो यत्र तादृशमानन्दं ययुः प्राप्तवत्य

---

१३. आवा प्रभुना दर्शनना आनंदथी श्रीगोपीजनना हृदयनां दुःख मटीगयां, अने जेम श्रुतिओ भगवद्गुणगान करतां करतां वाणी अने मनने अगोचर भगवान्नां दर्शन करी मनोरथना अंतने पाम्यां तेम श्रीगोपीजनना आनंदनो पार रह्यो नहि. अने पूजा अने आत्मनिवेदनथी पोताने कृतार्थ करवाने पोताना आत्माना बंधु भगवान्‌ने माटे कुचकुंकुमथी अंकित पोताना उत्तरीय वस्त्रोथी आसन रच्युं.

अप्राप्य मनसा सहे'ति भगवदानन्दो मनोरथान्तो भवति । तत्प्रतिपादिकाः श्रुतयो जाताः । सर्वे च मन्यन्ते । 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति, 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिवाक्यैः ब्रह्मणि श्रुतयः प्रमाणमित्यध्यवसीयते । 'सर्ववेदान्तप्रत्यय'मिति न्यायाच्च । अलौकिको वेदार्थः । अलौकिका वेदशब्दाः । लोके च न सङ्केतः । तथापि निरन्तरं भगवत्कार्यं कथयन्तीति लोकाः तच्छ्रवणेन शुद्धान्तःकरणाः स्वयमेवालौकिकविषये सामर्थ्यं मन्यन्ते । श्रुतिश्च तत्प्रतिपादिका भगवदिच्छया । नात्र लौकिकं साधनमपेक्षते, युक्तिं वा । तथा एतासामपि मनोरथान्तप्राप्तिः । एवं परमपुरुषार्थदातुर्भगवतोऽन्यत्राभिनिवेशे आधारधर्मसम्बन्धात् स्वस्य कृतार्थता न भविष्यतीति पूजार्थमात्मनिवेदनार्थं च आसनं चक्रुरित्याह स्वैरुत्तरीयैरिति । तद्देशस्थानां स्त्रीवस्त्राणि त्रीणि भवन्ति । परिधानीयं, कुचपट्टिका, उपरिवस्त्रं च । सर्वाभिरेव स्वोपरिवस्त्राणि आसनार्थं दत्तानि । उपरिवस्त्राण्यपि द्विविधानि भवन्ति । सर्वदा परिधेयानि, भोगसमये च । तानि सूक्ष्माणि भवन्ति । तान्येव भगवते दत्तानीति ज्ञापयितुमाह कुचकुङ्कुमाङ्कितैरिति । शुष्काण्यपि कुङ्कुमानि क्रीडायामार्द्राणि भवन्ति । अतस्तेनाङ्कितानि उत्तरीयाणि, अचीक्लृपन् कल्पयामासुः । ननु स्वोपरिपरिधेयं कथमधः कल्पयाञ्चक्रुरित्याशङ्क्याह आत्मबन्धव इति । आत्मनः स एव बन्धुः, रक्षित आत्मा, तदर्थमेव देहः स्वात्मा च । अत उपर्याच्छादनमपि तदर्थमिति तस्यासनक्लृप्तिरुचिता १३

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

इत्यर्थः । श्रुतयो जाता इत्यन्तेन भगवत्स्वरूपानुभूतिरूपटिप्पण्युक्तः श्रुत्यंशो निरूपितः । द्वितीयांशमाहुः सर्वे चेति । श्रुतिभ्य इति शेषः । सर्वे श्रुतिभ्य एव भगवत्स्वरूपं मन्यन्ते जानन्तीत्यर्थः । एतस्य द्वितीयांशत्वसूचनाय चकारः । नन्वेवं सति वागगम्यत्वं स्यादित्यत आहुः अलौकिक इति । वेदप्रतिपादितो यज्ञस्तदङ्गभूताः पश्वादयश्च भगवत्तदवयवभूताः । अन्यथा लोकसिद्धानुवादकत्वे अनधिगतार्थगन्तृत्वाभावात् प्रामाण्यं न स्यादित्यर्थः । व्युत्पादितं च वैदिकसृष्टेर्भिन्नत्वं 'शब्द इति चेन्नातः प्रभवा'दिति सूत्रे । अलौकिका इति । तामसाहंकारकार्यशब्दरूपा नेत्यर्थः । अत एव नामसृष्टेर्व्यवस्था भिन्नैवोक्ता । तथाच सङ्केतग्रहाभावान्न शब्देन ज्ञानम्, किन्तु चित्तशुद्ध्या स्वरूपयोग्यता सम्पाद्यते इत्यर्थः । स्वयमेवेति । भगवदनुग्रहादेवास्माकमलौकिकविषयज्ञाने सामर्थ्यं जातमिति मन्यन्त इत्यर्थः । ननु शक्तिग्रहाभावे तदुक्तधर्मज्ञानमपि कथं भवेदित्यत आहुः श्रुतिश्चेति । भगवदिच्छयैव तद्बोध इत्यर्थः । आत्मबन्धवे इत्यत्रात्मपदस्यार्थमाहुः देहः स्वात्मा चेति ।

ततो भगवान् तासु सर्वत्र निविष्ट इति ख्यापयितुं तद्दत्तासन उपविष्ट इत्याह तत्रोपविष्ट इति ।

**तत्रोपविष्टो भगवान् स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः ।**
**चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥**

भगवानिति तेषां कार्यसाधकत्वम् । ननूत्तरीयवस्त्रापगमे सभायां रसाभासो भवेत्, अतः कथमुपविष्ट इति चेत्, तत्राह स ईश्वर इति । सः पूर्वं प्रार्थितः । ईश्वरः सर्वकरणसमर्थः । अतस्तासां दिव्यानि वस्त्राणि सम्पन्नानीति बोधितम् । येषां जलक्रीडायां न वाससामार्द्रता । अतः सर्वकरणसमर्थः तत्रोपविष्टः सः प्रार्थितः । ( यद्वा[1] । पूर्वं वरदानसमये वस्त्रेष्वपहृतेषु सर्वथा तदभावे यस्य रसाभासो न जातः, तस्य केवलमुत्तरीयाभावे कथमधुनापि स भवेदिति वक्तुं स इत्युक्तवान् । ननु तदानीमपि कथं न रसाभास इत्यत आह ईश्वर इति । कर्तुं सामर्थ्यवत्त्वात् । यदि स भवेत्, तदा तथा न कुर्यादेव । अकर्तुं सामर्थ्यवत्त्वेन रसाभासहेतुत्वेऽपि तद्दत्तमासनं त्यक्तुमशक्यमेव । अन्यथाकर्तुं सामर्थ्यवत्त्वेन रसाभासप्रकारेणापि रसमुत्पादयितुं शक्तः । अतस्तादृशे न किञ्चिदनुपपन्नमिति भावः । ) ननु भगवान् अपवित्रे भोगादिलेपयुक्ते कथमुपविष्ट इति चेत्, तत्राह योगेश्वरान्तर्हृदि कल्पितासन इति । योगेश्वराणां हृदयं शुद्धम् । तत्राप्यन्तर्हृदयम् । तत्रापि कल्पितमेव भगवदासनम्, न तु कृतम् । मानसी मूर्तिस्तिष्ठति, न तु कदाचिदपि स्वयमुपविष्ट इति मुख्यमासनमेतदेव । अतश्चकास, परमशोभां

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तत्रोपविष्ट इत्यस्याभासे । आसनकृतिकथनेनैवोपवेशनस्य प्राप्तावपि तत्रोपविष्ट इत्यनेन पुनस्तत्कथनस्य तात्पर्यमाहुः तासु सर्वत्रेति । वसनद्वारा तत्परिधात्रीषु सर्वासु निविष्ट इत्यर्थः । मूले तत्रोपविष्टः सर्वासूपविष्ट इत्यर्थः । व्याख्याने, वसनानामेवं सामर्थ्ये हेतुमाहुः भगवानितीति । तेषां वसनानां कार्यसाधकत्वं स्वद्वारा भगवत्सम्बन्धसम्पादकत्वम्, उपवेष्टुर्भगवत्त्वादित्यर्थः । तथा च स्वसमर्पितपदार्थाङ्गीकारे तद्द्वारा भगवत्सम्बन्धः स्वस्यापि भविष्यतीति भावेन भगवते पदार्थाः समर्पणीया इति स्वीयेभ्य उपदेशोऽपि सूचितः । दिव्यानीति । कामरूपाणि व्रतचर्यायां दत्तानीत्यर्थः । तत्रोक्तं स्मारयन्ति येषामिति ।

१४. भगवान् ते आसनपर विराज्या अने सर्वे गोपीजनना अंतरमां पधार्या. तेमनी प्रार्थना स्वीकारी. कर्तुं, अकर्तुं अन्यथा कर्तुं समर्थ होवाथी उत्तरीय वस्त्रना अभावथी रसाभास थयो नहि, पोते तेमने जलक्रीडामां भीना न थाय एवां दिव्य वस्त्र आप्यां. योगेश्वरोना शुद्ध हृदयमां पण मात्र कल्पित आसनपर मानसी मूर्ति ऊभी रहे छे, अने आ मुख्य आसनपर पोते विराज्या. श्रीगोपीजननी परिषद्मां सभापतिरूपे पोते परम शोभा पाम्या. श्रीगोपीजने आपनुं पूजन कर्युं. भगवाने तेमने माटे त्रण लोकनी लक्ष्मीना स्थानरूप अत्यंत सुंदर वपु धारण कर्युं.

१ यद्वेत्यारभ्य भाव इत्यन्तः प्रभूणां स्वतन्त्र इति ।

प्राप्तवान् । पूर्ववद् गोपीनां परिषदं गतश्च जातः । परितो गोपिका उपविष्टा इत्यर्थः । सभापतिर्भगवान् । अतस्ताभिरर्चितः । ततो भगवान् तासामर्थे त्रैलोक्ये यावन्ति लक्ष्मीरूपाणि इन्द्रपदादीनि, तासां यदेकं पदं, यस्यांशविलासाः तत्तलक्ष्मीभोक्तारः, तादृशं वपुर्धृतवान् । अस्मिन्नर्थे देशकालादिभेदेन यावन्त उत्कृष्टा अर्था अपेक्ष्यन्ते, तान् प्रकटितवान्, तादृशवपुर्धारणेन ॥ १४ ॥

एवं प्रसन्नं भगवन्तं दृष्ट्वा स्वान्तःकरणदोषदूरीकरणार्थं स्वकृतघ्नतां पूर्वं भगवति कल्पितवत्य इति तन्निराकरणार्थं लोकदृष्ट्या भगवति कृतघ्नतालक्षणो दोषोऽस्ति न वेति निर्णयार्थं किञ्चित् प्रष्टुमुद्यता इत्याह सभाजयित्वेति ।

**सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा ।**
**संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥**

प्रश्नार्थं प्रथमतः सभाजनं स्तोत्रं कृत्वा । ननु किमनेन विचारेण साम्प्रतम्, जातं फलं भुज्यतामिति चेत्, तत्राह अनङ्गदीपनमिति । अनङ्गं दीपयति निरन्तरमेव । अङ्गाभावं सम्पादयतीति च ध्वनिः । अतो नैकेन भोगेन कार्यनिष्पत्तिः । पुनस्तेनापि भोगेनाग्रे अधिक एव खेदः स्यात् । स चेत् स्वदोषेण, तदा दोषो दूरीकर्तव्यः । भगवद्धर्मेण चेत्, वाङ्निर्बन्धं कारयित्वा प्रार्थयित्वा वा फलानुभवः कर्तव्य इति भावः । अनङ्गदीपने साधनमाह सहासेति । साधनाभावार्थं वा प्रार्थनीय इति साधनकीर्तनम् । हासपूर्वकं यल्लीलेक्षणं, तेन विभ्रमन्ती या भ्रूः, तया अनङ्गं दीपयति । पञ्चात्र साधनानि । हासो लीला ईक्षणं विलासाः भ्रूश्चेति । पञ्च चेद्धेतवः कार्यमप्रतिहतं भवति । माया व्यामोहिका स्वरूपविस्मारणार्थम् । लीला स्वासक्तिं साधयति । ईक्षणं तत्र ज्ञानजनकम् । अन्यथा ज्ञानान्तरेण तन्निराकरणं स्यात् । विलासाः पोषकाः । भ्रूर्यमः नियन्ता काल इति । यावत्प्रसाददाता वा तत्रैव । ततः प्रश्नार्थं उपढौकनं कुर्वन्ति संस्पर्शनेनेति । अङ्के कृतः स्थापितो यो भगवदङ्घ्रिः, तत्सम्बन्धिनौ यौ हस्तौ, तयोः सम्यक्स्पर्शनेन

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख. ।

सभाजयित्वेत्यत्र । अङ्गाभावमिति । देहानुसन्धानाभावमित्यर्थः । अत इति । अनङ्गदीपनत्वादित्यर्थः । पञ्च चेदिति । पञ्चभिः साधितं कार्यं अप्रतिहतं भवतीति लोकप्रसिद्धिः । स्वस्वरूपेति । भक्तस्वरूपेत्यर्थः । स्वासक्तिमिति । लीलासक्तिमित्यर्थः । तत्रेति । लीलायामित्यर्थः । दृशा सूचने चिकीर्षितलीलाज्ञानं भवतीति भावः । यमः कालः । भ्रुवस्तद्रूपत्वे हेतुमाहुः नियन्तेति । नियन्तृत्वात् कालत्वमित्यर्थः । उपढौकनमिति । उपगमनमित्यर्थः । उपगमनस्वरूपमाहुः संलालयन्त्य इति । तत्सम्बन्धिनौ यौ हस्ताविति । भगवान् स्वामिन्यङ्ककृतस्वचरणे हस्तौ स्थापयित्वा स्थित इति स्वच्छन्द-

---

१५. हास्यसहित लीलायुक्त दर्शनथी विलास करती भ्रकुटिवडे अनंगने उद्दीपन करनार, भगवान्‌नी स्तुतिकरीने, अंकमां स्थापित भगवच्चरणसबंधी हस्तोथी सारी रीते लाड लडावतां, स्तुति करतां कांइक कोप सहित बोल्यां.

सँल्लालयन्त्य इत्यर्थः । संस्पर्शनेन सहिताः । तत आभिमुख्यार्थं संस्तुत्य । एवं सर्वभावेन प्रपन्नानपि त्यजतीति भगवति दोषदृष्ट्या ईषत्कुपिताः । साधनैर्निवर्तितोऽपि दोषो न सम्यक् निवर्तते, यावद् भगवान्न निवर्तयतीति । अतो विवादमिव कुर्वन्त्यो बभाषिरे ॥ १५ ॥

तासां प्रश्नमाह भजत इति ।

गोप्य ऊचुः–भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् ।
नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ॥ १६ ॥

त्रयः पक्षाः सन्दिग्धाः, फलतः, स्वरूपतश्च, भजनाभजनाभ्याम् । तत्रैके ये यथा भजन्ति, ते तथा तानपि भजन्ति । एके पुनरभजतोऽपि भजन्ति । अन्ये तु उभयानपि न भजन्ति । तेषां त्रयाणां उभयोरपि प्रतियोगिनोः फलं वक्तव्यम् । ये भजनानुसारेण भजन्ति, ते किं कृतघ्नाः, आहोस्वित् धूर्ताः, आहोस्वित् समीचीना इति । केनचित् पादप्रक्षालनं कृतम्, सोऽपि चेत् करोति, तदा किं स्यात् । फलार्थकरणे फलं देयम् । तेनापि तदेव कर्तव्यमिति करणे तदेव कर्तव्यम् । निरपेक्षकरणे तु सन्देह एव । अभजतो भजने क्वचिद्दोषः स्यात् । यथा निष्कामे कामिनी । क्वचिदुपकारः, अपेक्षितश्चेदर्थः । क्वचित् स्नेहः । क्वचिद्धर्म इति । एकं फलं निर्धारितं वक्तव्यम् । यो वा न भजति पूर्वः, तस्य वा किं फलमिति । ये वा नोभयविधान् भजन्ति, तेषामुभयविधानां वा किं फलमिति । कृतस्य साधनस्य कुत्र वा उपयोगः । एतत् सर्वं ब्रूहि । साधु यथा भवति तथा । भो इति सम्बोधनं सावधानार्थम् । भजतः पुरुषाननु तदनुसारेण भजन्ति । एके पुनः भजनव्यतिरेकेणैव भजन्ति । इत्युभये भजनकर्तारः । अन्ये तु भजनरहिता एव ॥ १६ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

*स्थित्यनुकरणम् । तत इति । अत्रायं क्रमः । पूर्वं सभाजनरूपं स्तोत्रम्, सम्यक्क्रमागत-*मित्यादिरूपम्, ततोऽङ्घ्रिहस्तसंस्पर्शनम्, तत आभिमुख्यार्थं स्तुतिः हे स्वामिन्नित्यादिरूपेति । साधनैरिति । कराम्बुजधारणादीनि साधनानि इति टिप्पण्यामुक्तम् । तथा च कृत्येत्यर्थः । भगवानिति । वाच्येति शेषः ।

भजत इत्यत्र । कृतघ्ना इति । तत्कृतं भजनं घ्नन्ति स्वभजनरूपप्रत्युपकारेण मुख्यफलासम्पादकं कुर्वन्तीत्यर्थः । अयमेव पक्षोऽग्रे निर्धारणीयः । यथेति । निःकामे पुरुषे कामिनी, चेद्भजते इति शेषः । तदा दोषः कामिन्याः स्यादिति पूर्वेणान्वयः । अपेक्षितश्चे-दिति । भजनकर्तुरर्थापेक्षायामर्थः फलं भवतीत्यर्थः । ये वा नोभयविधानिति । भजनकर्तुः प्रतियोगी यो भजनकर्ता तस्य फलं द्वितीयकृतं भजनं स्पष्टमेवेति तदत्र नोक्तम् ।

---

१६. हे चतुर, केटलाक पोतानुं भजन करनाराने भजेछे, केटलाक नहि भजनाराने पण भजेछे, केटलाक भजनार तेम नहि भजनार बंनेने भजता नथी, सावधानतायी आ सर्वनुं वर्णन अमने करो.

एतेषां भेदान् फलं चाह भगवान् मिथो भजन्तीति त्रिभिः ।

श्रीभगवानुवाच-**मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते ।**
**न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥**

तत्राद्यपक्षस्य निर्धारमाह । ये मिथो भजन्ति, ते स्वार्थैकान्तोद्यमाः । स्वार्थ एव एकान्तः एकं फलमुद्यमस्य । ते हि ज्ञात्वैवान्योन्यं भजन्ते । तरतमभावेन च भजनमनुवर्तयन्ति । अतो न तेष्वन्योन्यं वञ्चनापि सम्भवति । अतः स्वार्थमेव लौकिकार्थमेव तेषामुद्यमः । ननु उभये ब्राह्मणाः, अतोऽन्योन्यभजनेन धर्मः स्नेहो वा भवेत्, कथं स्वार्थ एवेत्याशङ्क्याह न तत्र सौहृदमिति । क्षणेनैव द्वितीयस्याभजनं ज्ञात्वा क्रोधकरणात् । अतो न सौहार्दम् । नापि धर्मः । 'सम्भोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान् । इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्से'ति । गुरुसेवायामपि यदि दृष्टार्थतोभयोः, तदापि न धर्मः । शास्त्रानुसारी चेत्, मिथोभजनाभावः । विद्या तु फलरूपा । सख्य इति सम्बोधनादप्रतारणा । य इति प्रसिद्धास्ते वणिज इव । स्वार्थ एव तेषां प्रवृत्तिः । यद्यपि धर्मादयोपि स्वार्था एव, तथाप्यन्योन्यभजने न ते सिध्यन्ति । तथा सौहार्दमपि, यद्यन्यमपेक्षेत । तस्य साधनस्य विनियोगमाह स्वार्थार्थमिति । अन्यार्थमपि प्रतीयमानं स्वार्थमेव । एवं सेवादिदानेष्वपि । दुःखनिवृत्तिस्तत्र फलम् । अत्रार्थे सर्वोपि लोकः प्रमाणमिति हिशब्दः । अन्यथा परोपकाराय न । अन्यस्य हृदये तत्प्रतीकारार्थं चिन्ताजननात् । अतः फलं स्वार्थसिद्धिः लौकिकी । नाममात्रेणैव तेषां धर्मत्वम्, न तु वस्तुतः ॥ १७ ॥

ये पुनः अभजतोऽपि भजन्ति, ते द्विविधा इत्याह भजन्तीति ।

**भजन्त्यभजतो ये वै करुणाः पितरौ यथा ।**
**धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥**

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

मिथो भजन्तीत्यत्र । स्वार्थ एकान्तो यस्य तादृश उद्यमो येषामिति विग्रहः । दृष्टार्थतेति । गुरुः प्रशंसते चेत्, सेवां करोति, तूष्णीं तिष्ठति चेत्, न करोतीत्यर्थः । शास्त्रानुसारीति । शास्त्रविहितसेवाकर्ता शिष्यश्चेदित्यर्थः । 'स्वार्थैकान्तोद्यमा' इत्यनेन सर्वेषां निराकरणसम्भवेपि धर्मसौहार्दयोः पृथङ्निराकरणे हेतुमाहुः यद्यपीति । एतयोरपि स्वार्थत्वात् तेनैव तयोर्निराकरणं न भवेदित्यर्थः । पुनः स्वार्थार्थमिति । अभ्यासे भूयांसमर्थं मन्यन्त इति न्यायेनोक्तमित्याशयेनाहुरन्यार्थमपीति ।

---

१७. श्री भगवान् कहेछे-हे सखीओ! जेओ परस्पर भजन करेछे तेओना उद्यमनुं फल मात्र स्वार्थज होय छे. एमां सौहार्द पण होतुं नथी, अने एथी धर्म पण थतो नथी. एमां स्वार्थ शिवाय बीजुं कांई होतुं नथी.

१८. जेओ नहि भजनाराने भजेछे तेओ मातापितानी माफक करुण होय छे; हे सुंदर कटिवाळीं! अहीं कांइ पण अपवाद विनानो धर्म होय छे, अने प्रेम पण होय छे.

१. उद्यमो यस्येति पाठः ।

ये अभजतोऽपि तूष्णींस्थितान् भजन्ति, तत्र निमित्तद्वयम्, लौकिकं वैदिकं वा, स्नेहो विधिश्च। तत्र सौहार्दे धर्मश्च फलं क्रमेणैव। यः पूर्वः तस्य सौहार्दे अवसरे कर्तव्य एवोपकारः। अन्यथा कृतघ्नः स्यात्। धर्मशेषश्चेत्, प्रायश्चित्तं विधेयम्। तदीय एव धर्मः तद्द्वारा तेषु गच्छतीति। तत्र धर्मे यत्र कर्म प्रधानम्, यत्र वा देवता, तदुभयं न विवक्षितम्। प्रतियोगिनि भजनशङ्काभावात्। यत्र वा असमानता, गोः पङ्कोद्धारणवत्, तत्रापि तथा। यत्र पुनराधारे प्रत्युपकारः सम्भवति, तत्र प्रवृत्तौ, पूर्वस्याभजने, उत्तरभजने, निरपवादो धर्मः, सौहृदं च फलम्। अधिकारिविशेषणं तु एकत्र करुणा, अपरत्र दैहिकः सम्बन्धः। तदाह करुणाः पितराविति। अन्यत्रापि दृश्यत इति तद्धर्मातिदेशमाह यथेति। ये संसारिणः क्रूराः, तेऽपि कदाचिद्दीनेषु भजनं कुर्वन्ति, स्निग्धा इव च भवन्ति। तेषां सङ्ग्रहार्थं यथेति। सम्बन्धस्तु जन्मान्तरीयोऽपि भवतीति उपमानोपमेययोरभेदादेकविधा एव। निरपवाद इति। एतदुपकारेण हि तस्यापवादः। तदभावान्निरपवाद एव। अत्र तादृशेऽर्थे। अनेन यत्र प्रत्युपकारसम्भावनापि न, तत्र धर्म इति सूचितम्। अत एव केचित् क्रियमाणमपि नाङ्गीकुर्वन्ति। सौहार्देऽपि धर्मोऽस्तीति चकारः। सुमध्यमा इति सम्बोधनमुक्तविश्वासाय। धर्मेणैव उत्तममध्यमता ॥ १८ ॥

ये तु पुनः सर्वथैव न भजन्ति, भजनार्थं भजतः, सौहृदेन वा भजतः। धर्मार्थे तु न शङ्का। तानुभयविधानपि केचिन्न भजन्ति। अभजतो दीनान् धर्माधिकारिणश्च। तानपि न भजन्ति। तेषां स्वरूपमाह भजतोऽपीति।

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

भजन्तीत्यत्र। यः पूर्व इति। यः सौहार्देन भजनकर्ता तस्यावसरे प्राप्ते भजनीयेनोपकारः कर्तव्यो भवति, तदकरणात् सौहार्दं निरपवादमपवादरहितम्। धर्मार्थं भजने प्रायश्चित्तं विधेयम्। तदकरणाद्धर्मो निरपवाद इति शेषः। अन्यथा 'कृतघ्नः स्या'दिति मध्यस्थमुभयत्रान्वेति। सम्बन्धस्त्विति। आधुनिकसौहार्देन जन्मान्तरीयसम्बन्धस्यादृष्टस्यानुमेयत्वाद्धेतुत्वेन तत्र यथेत्युक्तम्। यथा पितरौ, तथा भ्रात्रादयोपीत्यर्थः। करुणा दृष्टत्वेनैकैवेति तत्रोपमानोपमेययोरेकत्वमुक्तमित्यर्थः। धर्मेणैवेति। स्वापेक्षया उत्तमानभजतो ये भजन्ति, ते उत्तमाः। मध्यमान् ये भजन्ति, ते मध्यमा इति धर्मकृत एव उत्तममध्यमभावस्तेष्वन्योन्यमित्यर्थः।

मूले भजत इति पदस्यार्थमाहुः भजनार्थमिति। तानुभयानपीति। भजनार्थं भजतः सौहृदेन वा भजतः पुरुषानित्यर्थः। मूले अभजत इतिपदं विवृण्वन्ति दीनानिति। येषां भजनेन भजस्तु दया स्निह्यति तानित्यर्थः। धर्माधिकारिण इति। धर्मस-

---

१. उभयविधानिति मूलपाठ.।

**भजतोऽपि न वै केचिद् भजन्त्यभजतः कुतः ।**
**आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥**

केचिन्महापुरुषा भजतोऽपि न भजन्ति, अभजतः कुतो भजिष्यन्ति । ते पूर्वोक्तन्यायेन चतुर्विधाः । तन्मध्ये उभये समीचीनाः, उभये न । ये धर्माधिकारिणस्ते अधमाः । ये लौकिकनिमित्तास्ते उत्तमा इति । तान् गणयति साङ्कर्याभावाय । आत्मारामा इति । आत्मन्येव रमन्त इति । अन्येन भजनीयो देहादिर्नापेक्षित इति भजनमेव न मन्यन्ते । तेषां भजनार्थं च साधनत्वेन स्वदेहादिकमपि न मन्यन्ते । तथा अन्ये आप्तकामाः । आप्तः प्राप्तः कामो यैः । यो भुक्तवन्तं ब्रूयात्, त्वं भुङ्क्ष्व, मा भुङ्क्ष्वेति वा । एकत्राप्रवृत्तिः । अपरत्र सिद्धसाधनत्वेनानुवादः । उभयथापि वैयर्थ्यम् । प्रवर्तमानस्य धर्मः सेत्स्यति । अज्ञानं वा । उभये तु अधमा इत्याह । ये कृतं न जानन्ति तदुपकारम्, ते प्रत्युपकारसमर्था अपि उभयविधानपि न भजन्ति । तेषामज्ञानमेव हेतुरभजने । ज्ञात्वा चेदभजनम्, गुरुद्रोहः । यः कश्चित् स्वस्य पुरुषार्थसाधकः स गुरुः, स पूज्यः । तस्यापदि स्वशक्तौ सत्यां तदुपेक्षायां तद्द्रोहः अनेनैव कृत इति गुरुद्रोहकर्ता भवति । एवं सर्वेषां गुणदोषा निरूपिताः ॥ १९ ॥

गोपिकानां हृदये भगवानेतन्मध्ये क इति जिज्ञासायां अभजनकर्तृत्वाद् भजनसामर्थ्यस्यापि विद्यमानत्वान्मिथोभजनपक्षः अभजनभजनपक्षश्च व्यावर्तितः । ननु द्वितीये पक्षे गोपिकानां भजने स्नेहाद् भजनमस्तु, अतो भगवान् निरूपकत्वेन नैषामन्तर्भूतः । ईश्वरश्च नैषामन्तर्भवतीति कथमेवं विचार इति चेत्, मैवम् । गोपिका भोग्या इत्यविवादम् । ताश्च भोग्यसमर्पकत्व एवोपक्षीणाः । अतो भगवत एव विचारः कर्तव्यः । ईश्वरोऽपि फलार्थं सेव्यश्चेत्, न विचार्यः । व्यवहारे दृष्टार्थश्चेद्, दीयमानग्रहणाग्रहणाभ्यां

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

म्पादने समर्थान् येषां भजनेन धर्मः सिध्यति तानित्यर्थः । एते एव व्याख्याने दयाधर्माधिकारिण इत्यनेनोक्ता इति ज्ञेयम् । दयायां धर्मे चाधिकारिणः समर्थास्तद्द्वयसाधकास्तान् ये न भजन्ति तेऽधमा इत्यर्थः । साङ्कर्याभावायेति । तद्धर्माणामिति शेषः । प्रवर्तमानस्येति । भुङ्क्ष्वेति कथने प्रवर्तमानस्य तादृशवाक्यवक्तुर्धर्मः । मा भुङ्क्ष्वेति वक्तुरज्ञानमित्यर्थः । तदुपकारमिति । दयां धर्मं चेत्यर्थः । पुरुषार्थसाधक इति । दयाधर्मसम्पादक इत्यर्थः । भजनसामर्थ्यस्येति । सामर्थ्याभावे तु गोः पङ्कोद्धारणवदविवक्षितत्वमेव स्यादिति भावः । नन्विति । द्वितीयपक्षस्था गोपिका भवन्तु । भगवांस्तु

---

१९. केटलाक भजनाराने ज भजता नथी, तो न भजनाराने तो क्यांथी ज भजे? तेओ क्यां तो आत्माराम होयछे, अथवा आप्तकाम होयछे, अथवा कृतघ्न होयछे, अथवा गुरुद्रोही होय छे.

१. दयाधर्माधिकारिण इति पाठः न संबद्धः, अतः अदया इति छेत्तव्यमिति श्रीपुरुषोत्तमाः । दयाधर्मेति पाठो लेखकृतामपि संमतः । मूले तु दयेति नास्ति श्रीविट्ठलरायाणां पुस्तके ।

विचार्य एव । पूर्वं गृहीतत्वात् नात्मारामता, नापि पूर्णकामता । प्रथमप्रवृत्त्या तृप्तावपि परित्यागो नोचितः । ततस्तृतीयपक्ष एवाभिनिवेश उचितः । तदपि सर्वज्ञस्यानुचितम् । ईश्वराणां फलदातॄणां कदाचिदेवं भवतीति शङ्कायाः परिहारमाह नाहं तु सख्य इति ।

**नाहं तु सख्यो भजतोऽपि जन्तून् भजाम्यमीषामनुवृत्तिवृत्तये ।**
**यथाधनो लब्धधने विनष्टे तच्चिन्तयान्यन्निभृतो न वेद ॥ २० ॥**

तुशब्दस्तं पक्षं व्यावर्तयति । नापीश्वरभजनपक्षः शङ्कनीय इत्याह सख्य इति । गोपिकास्तु सख्यः । रसे तुल्याः । एकार्थाभिनिवेशाश्च । अहमिति भगवान्, न तु जीवः । तेन आत्मारामादिपक्षा व्यावर्तिताः । अहं राम एव, न त्वात्मारामः । ममात्मव्यतिरिक्तपदार्थाभावान्न व्यावर्त्यमस्ति । कामाभावादेव नाप्तकामत्वम् । अतो मम भिन्नैव व्यवस्था, न तु जीवतुल्यता । नाहं तु सख्य इति तामेव व्यवस्थामाह । भजतोऽपि जन्तून् अहं न भजामि । तत्रान्य एव हेतुः । अमीषामनुवृत्तिवृत्तय इति । अमीषां जीवानाम् । जन्तुपदेन प्राणिमात्रम् । भगवतो न केनाप्युपयोगः । भगवान् फलरूप इति सर्वेषामेवोपयोगः । तथा सति तेषां भजनमेव इष्टमिष्टसाधनं वा । तत्राहं चेत् साधनत्वेन प्रविशामि, तदा भजनमेव नाशयामि । अग्रे भजनस्य प्रतिबन्धात् पूर्वभजनस्य च वैयर्थ्यापादनात् । चतुर्धा हि भगवदुपयोगः । भगवान् भोग्यो, भोक्ता वा । भोग्यपक्षे

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कस्मिन्नपि पक्षे नान्तर्भवतीत्यर्थः । प्रथमेति । पूर्णकामत्वेन तृप्तौ सिद्धायामपि परित्यागो नोचितः, तत्र हेतुः प्रथमप्रवृत्त्येति । परित्यागे करिष्यमाणे प्रथमत एव प्रवृत्तिः किमर्थं कृतेत्यर्थः ।

नाहं त्वित्यत्र । अहं राम एवेति । अहं तु राम एव, स रमते सर्वत्रैव तादृश एवेति । बाहुलकात् कर्तरि घञ् । ममात्मेति । जीवानामात्मानात्मविवेकोऽस्ति । मम तु देहादिकं विषयाश्चात्मरूपा एवेत्यर्थः । इष्टमित्यनेन फलरूपं भजनमुक्तम् । इष्टसाधनमिति साधनरूपम् । कामनापूरकत्वेन भोग्यत्वपक्षे विषयत्वेन भोक्तृत्वपक्षे चेष्टसाधनत्वम् । इतरयोः पक्षयोरिष्टत्वमिति विभेदः । तत्रेति । उभयोर्मध्ये साधनत्वेन भजने क्रियमाणे चेदहं प्रविशामि, कामपूरकत्वेनेति शेषः । तदा कामभोगेनाग्रे भजनप्रतिबन्धाद्भजनं नश्येदित्यर्थः । भगवत एवेष्टत्वात् तत्साधनत्वं भजनस्य न जातमेवेति भावः । वैयर्थ्यापादनादिति । नित्यफलासाधकत्वे भजनफलं न सिद्धमेवेत्यर्थः । एतदेव विशदयन्ति चतुर्धा हीति । भगवानिति । भोग्यत्वेन भोक्तृत्वेन वा भगवदुपयोग इत्यर्थः ।

---

२०. हे सखीओ, हुं तो आ भजनथी एक पण नथी. आ भजन करनारा जंतुओनुं ध्यान मारामां रहे तेनेमाटे हुं तेमने भजतो नथी. जेम निर्धन मनुष्य मळेलुं धन नष्ट थतां तेनी चिंतामां डुबेलो बीजुं कांई जाणतो नथी. (तेम गोपीजन प्रथम नहि प्राप्त थयला भगवान्ने प्राप्त करी भगवान् तिरोभाव पामतां तेमां मग्नचित्त थई प्रपंचनुं स्मरण करशे नहि). १. मर्यादामार्गे भजनं न करोति ।

कामनापूरकत्वेन, स्वातन्त्र्येण वा । भोक्तापि भक्त्या भक्तदत्तपदार्थस्वीकाराद्, विषयत्वेन भोगाद्वा । आद्ये भजनं नश्येत् । अल्पफलदानात् । स्वरूपतो महत्त्वेऽपि कालपरिच्छेदात् । द्वितीये तु तथात्वमतिभजनेन भवति । तद् गोपिकानां नास्तीति तत्सिद्ध्यर्थमभजनम् । अपेक्षाभावात् नाहं विषयन्यायेन भोक्ता । भक्त्यर्थं तु अभजनमेवेति सिद्धान्तसङ्ग्रहः । यथा अभजने अनुवृत्तिः सिध्यति, तथा प्रकारमाह यथाधन इति । पूर्वमधनः, पश्चाल्लब्धं धनं, तच्चेद्विनष्टं, तदा तच्चिन्तया व्याप्तः, निभृतः तदेकनिमग्नः सन्, अन्यन्न वेद । एतत्तु लोकप्रसिद्धम् । तथा गोपिकानामपि पूर्वमप्राप्तो भगवान् प्राप्तश्चेत्तिरोभवति, तदा निभृताः, तत्रैव मग्नचित्ताः न प्रपञ्चं स्मरिष्यन्ति । निभृतानां प्रयोजनं पूर्वमुक्तमेव ॥२०॥

एवं स्वस्याभजने हेतुमुक्त्वा प्रकृते तदभावमाह एवमिति ।

**एवं मदर्थोज्झितलोकवेदस्वानां हि वो मय्यनुवृत्तयेऽबलाः ।**
**मया परोक्षं भजता तिरोहितं मासूयितुं मार्हथ तत्प्रियं प्रियाः ॥२१॥**

यदुक्तं ताभिररण्ये स्त्रियो रात्रौ कथं त्यक्तव्याः । तदर्थमेवमुच्यते । द्वयमत्र कर्तव्यम् । भजनानुव्यावृत्त्यर्थमभजनम्, रात्रौ रक्षार्थं भजनं च । तत् परोक्षभजनेन सिध्यतीति मया परोक्षं भजता तिरोहितम् । भजने हेतुमाह एवमिति । मदर्थमेव उज्झिता लोकवेदस्वा याभिः । वृथापरित्यागव्यावृत्त्यर्थं मोक्षार्थपरित्यागव्यावृत्त्यर्थं च मदर्थमुज्झितेत्युक्तम् । आद्ये त्यागोऽनिष्टहेतुः । द्वितीये न मम भारः । त्रयः पदार्थास्त्यक्तव्याः । लोको दुस्त्याज्यः । आर्यमार्गो वैदिकः । प्रकारस्तादृश इति । मय्येव लोके तथैव प्रतीतिजननात् । पतिपुत्रादयो दुस्त्याज्याः । तत्रापि न मयि प्राप्ते, किन्तु मदर्थे मत्कामनायामेव । तदा मे विचिकीर्षितो भवतीति । 'सर्वधर्मान् परित्यज्ये'ति तादृश एव मम

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कामनेति । परिरम्भादिभिरभिलाषां कामिन्याः पूरयतीत्येवं तद्भोग्यो भवतीत्यर्थः । स्वातन्त्र्येणेति । भक्तो यथैवेच्छति, तथैव स्वरूपानन्दमनुभवतीत्यर्थः । भक्त्येति । हेतौ तृतीया । भक्तदत्तपदार्थस्वीकारात् तस्य भक्तिसिद्ध्यर्थं तद्दत्तपदार्थभोक्तेत्यर्थः । विषयत्वेनेति । काममात्रपूरकत्वे भोग्यत्वम् । स्वेच्छया भोगे भोक्तृत्वमिति भावः । निभृतानामिति । स्वातन्त्र्येण भगवतो भोग्यत्वं प्रयोजनं फलमित्यर्थः ।

एवमित्यस्याभासे । तदभावमिति । अभजनाभावमाह । अहं तु भजन्नेव स्थित इत्यर्थः । व्याख्याने । तादृश इतीति । दुस्त्याज्य इत्यर्थः । तस्य दुस्त्याज्यत्वे हेतुमाहुः मय्येवेति । विचिकीर्षितो भवतीति । कृतिर्लीला तदिच्छाविषयो भवतीत्यर्थः । तस्मिन्

२१. हे अबलाओ, आप्रमाणे मारी कामनाथीज लोक वेद अने स्वजननो त्याग करनार तमारा चित्तनी वृत्ति माराभां होवाने माटे परोक्ष तमारुं भजन करतां हुं तिरोभूत थयो हतो. माटे हे प्रियाओ! प्रियनी ईर्ष्या करवी तमने योग्य नथी.

भाव इति त्रितयपरित्यागे मया भजनं कृतम्। (वस्तुतस्तु स्वपदं स्वात्मपरम्। अन्यथा पतिपुत्रादीनामपि लोकवेदमध्यपातात्तेनैव तत्प्राप्तेः स्वपदमनर्थकं स्यात्। तथा च स्वात्मत्वेन स्नेहविषयत्वाभाव एव तत्त्यागः। एतासां भगवदर्थत्वेन प्रीतिविषयत्वादात्मादीनामिति सारम्।) युक्तश्चायमर्थः। अनन्याः पालनीया इति। वः युष्मान्। मय्यनुवृत्त्य इत्येकं फलम्। अबला इति सम्बोधनात् न सतामिव प्रत्यक्षेण भवतीनां भजनं सिध्यतीति ज्ञापितम्। परोक्षं भजता अतिरोहितं वा। भजनं भोगो वा। भोक्त्रैव मया भोगं कुर्वता तिरोहितम्। भवतीभिर्न दृष्ट इत्यर्थः। अनेनाभजनपक्षो व्यावर्तितः। तस्मिन् सत्यसूया सम्भवति। अकृतज्ञत्वादिदोषारोपणेन मा मां असूयितुं नार्हथ। यतः प्रियम्। प्रिये दुष्टे स्वस्यापि तथात्वस्यावश्यकत्वात् त्यक्तुमशक्यत्वात्। किञ्च, प्रिया यूयम्। कृतज्ञत्वादयो हि धर्मा न प्रीतिविषये भवन्ति। औदासीन्यसामानाधिकरण्यात्॥ २१॥

एवं तासां मनोमार्जनमुक्त्वा भक्तिमार्गविरोधं परिहर्तुं ताः स्तौति न पारयेऽहमिति।

**न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः।**
**या माभजन् दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुना॥ २२॥**

इति श्रीमद्भागवते महापुराणे दशमस्कन्धपूर्वार्धे रासक्रीडायां गोपीसान्त्वनं नाम एकोनत्रिंशोऽध्यायः॥

निरवद्यसंयुजां निर्दुष्टभजनयुक्तानाम्। स्वसाधुकृत्यं स्वप्रत्युपकारकरणम्। विबुधायुषा ब्रह्मायुषा। मन्वन्तरपरिमितायुषा वा। विशेषेण बुधानां ज्ञानिनामनन्तायुषा वा। न पारये। भजनप्रत्युपकारयोर्वैसादृश्यात्। भवतीनां भजनं निष्कपटम्। अस्मद्भजनं सकपटमिति। न ह्यल्पजलस्यापि तुल्यं बह्वपि मरुमरीचिकाजलं भवति। सत्यभजनं तु ब्रह्मणोऽशक्यमेव, जीवधर्मत्वात्। तत्रापि विशेषमाह या माभजन्निति। दुर्जरा हि गेहशृङ्खला, या जीर्यतोऽपि न जीर्यत इति। तां संवृश्च्य छित्त्वा। याः भवत्यः प्रसिद्धाः। मा मामभजन्। यैः पूर्वं बद्धाः स्थिताः स्वार्थं तेषामर्थमात्मानं च

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

लीलां कर्तुमिच्छामीत्यर्थः। वः युष्मानिति। च इति पदमावृत्तमेकत्र षष्ठ्यन्तमेकत्र द्वितीयान्तम्। तथा च त्यक्तलोकादीनां युष्माकमेवमभजनसिद्धानुवृत्तिप्रकारेणानुवृत्तये वः युष्मान् परोक्षं भजता तिरोहितमित्यन्वयः।

न पारयेहमित्यत्र। निरवद्यं यथा स्यात्तथा संयुञ्जन्तीति निरवद्यसंयुजः। कर्तरि क्विप्। तादृशीनामित्यर्थः। एकोनत्रिंशाध्यायव्याख्या समाप्ता।

---

२२. तमे मारा निर्दोष भजनथी मारी साथे जोडायांछो. तमारा उपकारनो बदलो हुं ब्रह्माना आयुष्यथी पण वाळी शकुं एम नथी. दुर्जर गृहशृंखलाने तोडी नांखीने तमे मारुं भजन कर्युं छे. आ तमारा सत्कार्यनो प्रत्युपकार तमारा संतोषथी ज थाओ.

१ विहारान्तर्गतं प्रभूणाम्।

मय्येव समर्पितवत्यः । बहिःशृङ्खला त्यक्तुमपि शक्या । न तु सर्वत आवृते गृहे शृङ्खला । एवमलौकिककर्त्रीणां यद् भजनं तद् भवतीनामेव । साधुना । भावप्रधानो निर्देशः । साधुत्वेन प्रतियातु, प्रत्युपकृतं भवतु । साधवो हि महत् कर्म कृत्वा स्वयमेव तुष्यन्ति, न तु प्रत्युपकारमपेक्षन्ते । अतो मयि भजनं नास्ति । भजनस्य जीवधर्मत्वात् । अतोऽग्रेऽपि यदि स्वत एव सन्तुष्टाः, तदा भजत, नो चेत्, यथासुखं विधेयमिति भावः । न ह्यशक्यं कश्चित् कर्तुं शक्नोतीति ॥ २२ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मज श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे एकोनत्रिंशाध्यायविवरणम् ॥

---

## त्रिंशत्तमोऽध्यायः ।

त्रिंशत्तमे हरिः प्रीतो लीलां कामकृतामपि ।
इन्द्रादिदुर्लभां चक्रे स्वानन्दार्थमितीर्यते ॥ १ ॥
अस्याः सर्वोपकाराय फलश्रुतिरुदीर्यते ।
लौकिक्यपि यदा दृष्टिस्तदा सिद्धान्त ईर्यते ॥ २ ॥
रसात्मकस्तु यः कामः सोत्यन्तं गूढ एव हि ।
अतः शास्त्रं प्रवृत्तं हि तृतीयं भारतं तथा ॥ ३ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्रिंशेध्याये । त्रिंशत्तमे ईर्यत इत्यन्वयः । 'तासामाविरभू'दित्यस्याभासे 'कृष्ण एव जात' इत्यनेनोक्तं तासु स्वसत्तानन्दस्थापनमधुनैतादृशलीलाकरणे हेतुत्वेनानुवदन्ति प्रीत इति । प्रीतेरानन्दधर्मत्वात् तद्युक्तः सन्नित्यर्थः । तथा च तासु स्वसत्तानन्दस्थापनपूर्वकत्वं प्रथमाध्यायापेक्षया विशेष इति भावः । लीलामिति । अलौकिकचन्द्रप्रकाशयासु रात्रिष्वलौकिकप्रकारिकामित्यर्थः । कामकृतामिति । कामशास्त्रोक्तरीत्या कृतां लौकिकचन्द्रप्रकाश्यासु रात्रिषु लौकिकप्रकारिकामित्यर्थः । तथा च द्विविधामपि लीलां प्रकटां चक्रे इति हेतोरुभय्यपि लीला त्रिंशत्तमे ईर्यते इति टिप्पण्यनुसारेणार्थः । अलौकिकलीला 'यथा मदच्यु'दित्यन्तेनोक्ता । लौकिकलीला 'एवं शशांकांशु'ति श्लोके काव्यकथापदे अतिदेशेनोक्तेति ज्ञेयम् । रसात्मक इत्यस्याभासे । टिप्पण्यां नृत्यबन्धादेरिति । अलौकिकप्रकारकरमणे इति शेषः । जलानिलयोरिति । 'ततश्च कृष्णोपवने' इति श्लोकोक्तयोरित्यर्थः । तस्योद्बुद्धेति । अत्रोद्बोधकानामुक्तत्वात् प्रभुरपि लोकमनुसृत्य लीलां कृतवान्, न तु स्वरूपप्राधान्येनेति ज्ञायते । अतः स्वरूपमपि विशेषतो न वक्तुं शक्यं इति भावः । सुबोधिन्याम् । कामस्य गूढत्वमर्थापत्त्या साधयन्ति अतः शास्त्रमिति ।

अतोऽत्र भगवांश्चक्रे नृत्यं कारितवांस्तथा ।
सर्वाङ्गेषु तु यो लीनः स यथा व्यक्ततां व्रजेत् ॥ ४ ॥
जलं वायुश्च सामग्री श्रमात् शीताच्च जायते ।
अत्रैव लोके प्रकटमाधिदैविकमुत्तमम् ॥ ५ ॥
कामाख्यं सुखमुत्कृष्टं कृष्णो भुङ्क्ते न चापरः ॥

एवं पूर्वाध्याये तासां सर्वभावेन प्रमाणेन प्रमेयेन दुःखं दूरीकृतवान् । तद् दुःखमज्ञानतश्चेत्, तदैव दूरीकृतं भवति । अन्यथा भगवतैव दुःखं दत्तं स्यात् । अतो भगवता त्यक्त्वा न गतमिति न भगवान् दुःखे हेतुः, किन्त्वज्ञानमेव । अतो भगवद्वाक्यादज्ञाने गते तन्मूलकं दुःखमपि गतमित्याह इत्थमिति ।

श्रीशुक उवाच—**इत्थं भगवतो गोप्यः श्रुत्वा वाचः सुपेशलाः ।
जहुर्विरहजं तापं तदङ्गोपचिताशिषः ॥ १ ॥**

भगवतो वाचः श्रुत्वा विरहजं तापं जहुः । भ्रमादेवास्माकं विरहो जात इति ।

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख ।

तस्य गूढत्वाच्छास्त्रोक्तनृत्यबन्धादिभिरेव स प्रकटो भवति । अन्यथा महता समारम्भेण शास्त्रद्वयं न प्रवृत्तं स्यादित्यर्थः । अतोत्रेति । कामस्य गूढत्वात् तदुद्बोधार्थमित्यर्थः । नृत्यं कारितवानिति । स्वामिनीभिरिति शेषः । बन्धोपयोगमाहुः सर्वाङ्गेष्विति । नायकस्य स्वरूपे कामस्थितिः । नायिकानां विभेदेन प्रत्यङ्गेषु कामस्थितिरिति विभेदः शास्त्रसिद्धः । अत्रैवेति । आधिदैविकं, जीवानां रूपमिति शेषः । तच्च कामरहितं लौकिकवासनात्मकलिङ्गरहितमिति यावत् । 'कामं हृद्रोगमाश्वपहिनोती'तिवाक्ये लिङ्गभङ्गफलमुक्तम् । लौकिकलिङ्गरहितमेवाधिदैविकं रूपमिति भावः । तथा च जीवानामाधिदैविकं रूपं अत्रैव लोके प्रकटं यथा स्यात्तथा कामाख्यमुत्तममुत्कृष्टं सुखं कृष्णो भुङ्क्ते इति टिप्पण्यनुसारेणान्वयः । उत्तमत्वं मोक्षेप्यस्तीति ततोप्युत्कृष्टमित्युक्तम् ।

इत्थमित्यसामासे । वाचां शब्दरूपत्वात् ज्ञानजनकत्वम्, न तु तापनिवर्तकत्वमित्याशङ्क्य तद्व्युत्पादनाय पूर्वाध्यायार्थमनुवदन्ति एवमित्यारभ्य, दुःखमपि गतमित्यन्तेन । तथा च शब्दादज्ञाननिवृत्तिः, ततो विरहरूपदुःखनिवृत्तिः, ततस्तापनिवृत्तिः । तथा च मूले इत्थममुना प्रकारेण श्रुत्वेत्यनेन दुःखनिवृत्तिपर्यन्तार्थमनूद्य तापत्यागो विधीयते इति भावः । तथा चेत्थमित्यनेनोक्तायां प्रकारतायां अज्ञाननिवृत्तिदुःखनिवृत्त्योर्निवेश इति ज्ञेयम् । इत्याहेति । इति हेतोराह । तापनिवृत्तिमिति शेषः । व्याख्याने । अज्ञाननिवृत्तिं विवृण्वन्ति भ्रमादिति । विरहो विरहजन्यं दुःखमित्यर्थः । इति ज्ञातवत्य इति

---

१. श्री शुकदेवजी कहेछे–आप्रमाणे भगवान्नी अति मनोहर वाणी साभळीने, भगवान्ना अंगोना स्पर्शथी जेमना सर्व मनोरथ पूर्ण थया छे एवा गोपीओए विरहजन्य तापनो त्याग कर्यो.

ननु वचनमात्रेण कथमज्ञाननिवृत्तिः, तत्राह भगवत इति । गोप्य इति विपरीतभावनानिवृत्त्यर्थम् । ननु ता वाचः कथं न मनसि सन्देहमुत्पादितवत्यः, तत्राह सुपेशला इति । अतिमनोहरा इति । मनसि विचिकित्सायामेव सन्देहः । शब्दस्याभाव्यादेव मनसि सन्देहो न जातः । अतो विरहजं तापं जहुः, नास्माकं विरहो जात इति ज्ञातवत्यः । यथा स्वप्नादुत्थितः स्वाप्निकं दुःखं न मन्यते । तस्य भगवत अङ्गस्पर्शचिता आशिषो यासाम् । भगवत्कार्यव्यतिरेकेणैव भगवदवयवैरेव सर्वमनोरथाः पूरिताः ॥ १ ॥

एवं दुःखाभावसुखयोः प्रतिबन्धकं रूपेण वाचा च निवार्य स्वकर्तव्यमारभते तत्रारभतेति ।

तत्रारभत गोविन्दो रासक्रीडामनुव्रतैः ।
स्त्रीरत्नैरन्वितः प्रीतैरन्योन्याबद्धबाहुभिः ॥ २ ॥

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ज्ञेयः । परोक्षभजनाज्ञानं निवृत्तमित्यर्थः । वचनमात्रेणेति । वक्तर्याप्तत्वनिश्चयव्यतिरेकेणेत्यर्थः । भगवत्त्वेनाप्तत्वनिश्चयादिति भावः । तर्हि पूर्वानुभवस्यापि दृढत्वेनोभयविधज्ञानात् संशयः स्यादित्याहुः नन्विति । शब्दस्वाभाव्यादिति । एतद्वाचां स्वभावो मनोहरणमुक्तम् । तच्च स्वोक्तस्य परोक्षभजनस्य मनस्यनुभावनमिति भावः । भगवत्कार्येति । भगवत्कृतस्पर्शादिव्यतिरेकेणेत्यर्थः । भगवदवयवैरिति । सहासलीलेक्षणविभ्रमभ्रूवाऽनङ्गदीपनमित्युक्त्या अङ्कृताङ्घ्रिहस्तयोः संस्पर्शनेनेत्युक्त्या च भुवादिभिरङ्घ्रिहस्ताभ्यां चेत्यर्थः । तथा च तत्रैतद्विशेषणोक्त्या भाविरमणमेतैः सूचयन्नेव वाक्यान्युक्तवानिति निरूपणादवयवानामपि वचनाङ्गत्वादेतत्कृतोपचयोपि वाकृत एवेति भावेनाग्रिमश्लोकाभासे सुखप्रतिबन्धस्य वाचा निवारणमनुवदिष्यन्तीति ज्ञेयम् ।

तत्रारभतेत्यस्याभासे । पूर्वाध्याये 'सर्वास्ता' इति श्लोके 'तापं जहु'रित्युक्तम् । अत्रापि 'तापं जहु'रित्युक्तम् । अनयोस्तापयोर्विभेदमनुवादेनाहुः एवं दुःखाभावेति । प्रतियोगिनः अभावे प्रतिबन्धकत्वाद्दुःखाभावप्रतिबन्धकं दुःखं पूर्वत्र तापशब्दवाच्यम् । तं तापं स्वरूपेण निवारितवानिति 'सर्वास्ता' इति श्लोके निरूपितम् । अत एवानिष्टनिवृत्तिमाहेति तत्रोक्तम् । अनिष्टं दुःखं, तन्निवृत्तिमाहेत्यर्थः । वक्ष्यमाणसुखे प्रतिबन्धकमवयवेषु कार्श्यादिकमत्र तापशब्दवाच्यम् । अत एव तदङ्गोपचिताशिष इत्युक्तम् । आशिषो व्रतचर्यायां वसनदानेन कालक्रमं विनैव सम्पादितावयवाः उपचिता यासामित्यर्थः । कार्श्यादौ विद्यमाने क्षीणरसता स्यादतस्तन्निवर्तनमिति भावः । स्वकर्तव्यमिति । स्वस्य भगवतः कर्तव्यमित्यर्थः । उभयविधतापनिवृत्तिस्तु प्रतिबन्धकाभावरूपा स्वरूपदर्शनेन वचनश्रवणेन च स्वत एव सिद्धा, न तु तदर्थं भगवत उद्यम इति भावः । व्याख्याने ।

१. स्त्री प्रसन्नपयलां, परस्पर हस्त झालीने उभा रहेलां, भगवानने अभिप्रेत रसना उत्सुक स्त्रीरत्नोथी विंटळायला गोविंदे रासक्रीडानो आरंभ कर्यो.

गोविन्द इति । एतदर्थमेवेन्द्रो जातः । अतोऽसाधारणो भोगश्च तस्यावश्यक इति च । अनुव्रतैः स्त्रीरत्नैरन्वितः रासक्रीडामारभत । वहुनर्तकीयुक्तो नृत्यविशेषो रासः । रसस्याभिव्यक्तिर्यस्मादिति । रसप्रादुर्भावार्थमेव हि नृत्यम् । रासे क्रीडा लीला स्वस्य । क्रीडायां मनसो रसस्योद्गमः । नृत्ये देहस्य । कामस्तु भोक्तृनिष्ठ इति स्वप्राधान्यम् । समाजेनापि रस उत्पद्यत इति एकवचनम् । तदा हीक्षुरसवद् भक्तिरसवद्वा कामरसोऽप्युत्पद्यते । गोपिकानां रसयोग्यतामाह अनुव्रतैरिति । अनुव्रतं यासाम् तासामपि रसोत्पादनमावश्यकमिति । यादृशो भगवतोऽभिप्रेतः, तादृश एवेति च । नन्वयं रसः अलौकिकः, न लौकिकेपूत्पद्यते, अतो व्यर्थ आरम्भः । न हि सिकतासमूहात् तैलमुत्पद्यत इति चेत्, तत्राह स्त्रीरत्नैरिति । स्वभावतः स्त्रियस्त्रिविधाः, लोकभेदेन । तत्रापि मानुषीषु जातिभेदाश्चत्वारः, पद्मिन्यादयः । वासनाभेदाश्चतुर्दश अश्वक्रान्तादयः । सर्वास्वेवैता रत्नभूताः । स्वासाधारणधर्मैस्तद्धर्मप्रकाशिकाः । अतः सर्वभावेन रसोत्पत्तियो-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेख- ।

इति चेति । आधिदैविकरूपप्राकट्यार्थं लीलां कृतवानित्युक्तम् । गोविन्दत्वाच्च तथेत्यर्थः । अभिव्यक्तिर्यस्मादिति । इदमर्थकथनम् । विग्रहस्तु रसस्यायं रासः । रसाभिव्यञ्जकं नृत्यमित्यर्थः । रासक्रीडयोर्विभेदमाहुः क्रीडायामिति । नृत्ये इति । अत्र नायिकाप्राधान्ये वक्तव्येपि भगवतः प्राधान्यकथने हेतुमाहुः कामस्त्विति । क्रीडायाः कामरूपमनोरसोद्गमहेतुत्वमुक्तम्, तस्य च भोक्तृनिष्ठत्वाद्भोक्तुरेव तत्र प्राधान्यमित्यर्थः । क्रीडाया अनेकविधत्वेप्येकवचने हेतुमाहुः समाजेनापीति । रसः एक इति शेषः । तदा हीति । समाजे कृते इत्यर्थः । इक्ष्विति । यथा बहुभ्य इक्षुभ्योपि निर्गतो रस इक्षुरसत्वेनैक एव, यथा वा भक्तिरूपोऽधरसुधारसोऽनेकस्वामिनीमुखारविन्देभ्योपि निर्गतः सुधारसत्वेनैक एव, अत एव 'अन्तः प्रविष्टो भगवा'निति कारिकायामेकवचनमेवोक्तम् । तथा कामरसोपि सर्वाभ्योपि निर्गतः कामरसत्वेनैक एव । सोऽप्युत्पद्यते । एक इति शेषः । भगवता एकीकृत्य भुज्यते इत्यर्थः । अपिशब्दान्नृत्यरसः । तथा च रासे क्रीडा कामलीलेत्यर्थः । अत एव स्वस्येत्युक्तम् । कामभोक्तुरित्यर्थः । अग्रे तु नृत्यकामरसयोः प्रत्येकपर्यवसानं वक्ष्यते । तादृश एवेति । तासामभिप्रेत इति शेषः । तथा चानुव्रतत्वेनावश्यकत्वादेकाभिप्रायकत्वाच्च रसोत्पादनमित्यर्थः । लौकिकेष्विति । 'पादन्यासै'रित्यत्र वक्ष्यमाणप्रकारेणावयवेभ्यो रसनिर्गमार्थं हि रासारम्भः । तथा चैतदात्मनामलौकिकत्वेप्येतदवयवानां तु लौकिकत्वम् । अन्यथा तत्तदवयवलक्षणरूपपद्मिनीत्वादिव्यवहार एतासु न स्यात् । परिचयार्थं लौकिकैरेवावयवैः शास्त्रे लक्षणकरणात् । अतः स रसो लौकिकेष्ववयवेषु नोत्पद्यते, न तिष्ठत्यतस्ततः कथं निर्गम इत्यर्थः । उत्पत्तेः सत्तार्थकत्व'मौत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति सूत्रे व्याख्यातम् । स्वासाधारणेति । स्वस्यासाधारणा ये धर्माः पद्मिनीत्वादयस्तेषां यत्किंचित् स्थापनेन लौकिकीनां लौकिकेष्वप्यङ्गेषु पद्मिनी-

ग्यता । तैरन्वित इति । स्वयं नायकमणिः । तद्योग्या एते मणय इति । एकरसत्वाय च मेलनम्। अनेन रसप्रकटनार्थं शुल्कदासिका भगवते दत्ता इति यदुक्तम्, तदपि समर्थितम् । नन्वेते जीवाः, भगवानानन्दमयः, कथं वैषम्याद्रसोत्पत्तिरिति चेत्, तत्राह प्रीतैरिति । ता अपि भगवत्सदृश्यो जाताः । सर्वतः प्रीता इति । तासामभिनिवेशप्रकारमाह अन्योन्यावद्धवाहुभिरिति । ताः परस्परमासमन्तादुभयतः बद्धौ बाहू यासाम् । न तु भगवता सह ॥ २ ॥

भगवान् पुनः हस्तमण्डलाद्बहिःस्थितो यथा सम्बध्यते, तथा सन्निवेशमाह रासोत्सवः सम्प्रवृत्त इति ।

**रासोत्सवः सम्प्रवृत्तो गोपीमण्डलमण्डितः ।**
**योगेश्वरेण कृष्णेन तासां मध्ये द्वयोर्द्वयोः ।**
**प्रविष्टेन गृहीतानां कण्ठे स्वनिकटं स्त्रियः ॥ ३ ॥**
**यं मन्येरन्, नभस्तावद्विमानशतसङ्कुलम् ।**
**दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम् ॥ ४ ॥**

सर्वेषामेव गुणभावात् रसप्राधान्यात् रासोत्सव एव सम्यक् प्रवृत्तः । उत्सवो नाम मनसः सर्वविस्मारक आह्लादः । उत्सवत्वसम्पादनाय सजातीयानेकरसोत्पादनार्थं विशेषमाह गोपीमण्डलमण्डित इति । गोपीनां मण्डलैरनेकविधैर्मण्डितः । उत्सवो-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्वादिधर्मप्रकाशिकाः । नैतावता तासां स धर्मः, किन्त्वेतदवयवानामेवेति भावः । यथा श्रीपुष्टादीनां लौकिकेषु यत्किञ्चित्स्थापनेन तेष्वपि श्रीपुष्ट्यादिमन्त इति व्यवहारः, न तु वस्तुतस्तास्तेषां शक्तयः, किन्तु भगवत एवेति सिद्धान्तः, तथात्रापीति ज्ञेयम् । तथा च रत्नानि रत्नसदृश्य इत्यर्थः । यथा कङ्कणादिषु स्थितानि रत्नानि स्वासाधारणधर्मैश्चाकचिक्यादिभिः कृत्वा कङ्कणादिष्वपि चाकचिक्यादिप्रकाशकानि, तथैता अपीति सादृश्यम् । अनेनेति । क्रीडार्थमन्वितत्वकथनेनेत्यर्थः । एवं कथनेन कामेन हेतुनान्वितो जात इत्युक्तं भवति । तथा च भगवते कामेन समर्पिता इति सिद्धमेवेत्यर्थः । भगवत्सदृश्यो जाता इति । प्रीतेरानन्दधर्मत्वात् तद्युक्ता आनन्दरूपा जाता इत्यर्थः । सन्निवेशमाहेति । 'गृहीतानां कण्ठे' इत्यन्तस्याभासोयम् । सर्वेषामिति । कामलीलान्तःपातिनामाश्लेषादीनामित्यर्थः । 'मह उद्धव उत्सव' इति कोशप्रसिद्धमुत्सवलक्षणमाहुः उत्सव इति । अत एव नामेत्युक्तम् । प्रसिद्धमित्यर्थः । उत्सवत्वेति । रासजन्यह्लादस्य सर्वविस्मारकत्वं संपाद-

---

३. बे बे गोपीजननीवचे योगेश्वर कृष्णे प्रवेश कर्यो, कंठथी तेमनुं ग्रहण कर्युं, दरेक बे गोपीजनोए तेमने पोतानी निकटज मान्या, ए प्रमाणे गोपीमंडलोथी मण्डित रासोत्सव प्रवृत्त थयो.

४. तें समये देवताओ, जेओ पोतानी स्त्रीओ सहित आव्या हता, जेमनी बुद्धि उत्सुकताथी हराइ गइ हती, तेमना सेंकडो विमानोथी आकाश भराइ गयुं.

ऽप्यनेकविधैर्मोहणादिमण्डलैर्मण्डितो भवति । अत्रापि तुल्यस्वभावाः रसार्थमेकीकृताः पृथङ्मण्डलभाजः । तैरपि मण्डितः । पोपकाश्च रसास्तत उत्पादिता इति उत्तरोत्तरमण्डलैः पूर्वपूर्वरसः पोष्यत इति नायं रसोन्यत्र भवितुमर्हति । सम्यक्प्रवृत्तिर्निरन्तरमाविर्भावः । ननु कालकर्मस्वभावानां प्रतिबन्धकत्वादनेकत्र जायमानो रसः कथमेकीभवति; तत्राह योगेश्वरेणेति । स हि सर्वोपायवित् । सर्ववस्तुषु विद्यमानं भगवदैश्वर्यादिकं योग एवोद्घाटयतीति साधनेषु योगः प्रधानम् । तत्रैश्वर्ये सर्वत्रैव मूलभूतो रस उत्पादयितुं शक्यत इति सिद्धमेव । किञ्च । कृष्णोऽयमिति । स्वयमेव सदानन्दः । उद्गतोऽग्निः सर्वत्रैवाग्निं लीनं जनयितुं शक्नोति । तस्य भगवतस्तासु सन्निवेशप्रकारमाह तासां मध्ये द्वयोर्द्वयोरिति । मण्डलीकृता यावत्यो गोप्यः तासां द्वयं द्वयं भिन्नतया भावनीयम् । द्वित्वद्वयस्य नैकाधिकरणता भाव्या । अतो मण्डलमध्ये यत्र हस्तद्वयग्रन्थिः, तत्र भगवदुदरं यथा भवति, तथा भगवानुत्थितो जातः । तथोद्गतस्योभयत्र सम्बन्धमाह, द्वयोर्द्वयोर्मध्ये प्रविष्टेन भगवता कण्ठे गृहीतानामिति । हस्तद्वयेन पार्श्वस्थितयोः कण्ठे ग्रहणम् । एवं षोडशगोपिकानामष्ट कृष्णा भवन्ति । अन्यथा रसाभासः स्यात् । कृष्णद्वैविध्यप्रतीतेः । इममेवार्थमाह स्वनिकटं स्त्रियः यं मन्येरन्निति । स्वस्यैव निकटे, न त्वन्यासाम् । स्वसम्मुखस्थितगोपिकाकण्ठालिङ्गितभगवद्दर्शनमपि भगवदिच्छया तासां न जायत इति । प्रयोजनार्थं हि रूपकरणम् । तदर्थसङ्ख्ययैव प्रयोजनं भवतीति न समसङ्ख्या मृग्या । 'यावतीर्गोपयोषित' इत्यग्रे समसङ्ख्यां भगवतो वक्ष्यति । यत्पुनः कैश्चिदुक्तं 'अङ्गनामङ्गनामन्तरे माधव' इति, तत्रापि सविसर्गः पाठो ज्ञेयः । द्विवचने

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

पितुमित्यर्थः । तथा च रासजन्याह्लादो रासोत्सव इत्यर्थः । पोषकाश्चेति । अतोपि मण्डलपदमित्यर्थः । मण्डलस्य पोषकत्वं व्युत्पादयन्ति उत्तरेति । कालकर्मस्वभावानामिति । प्राकृतानां पूर्वमेव निरस्तत्वात् 'तमद्भुतं बालक'मित्यत्रोक्तानां भगवद्रूपाणामित्यर्थः । तेषामपि लीलार्थं तथा स्वभावत्वादिति भावः । तत्रेति । योगे इत्यर्थः । अग्निं लीनमिति । एतास्वपि 'कृष्ण एव जात' इत्यनेन स्वानन्दस्थापनस्योक्तत्वादिति भावेन दृष्टान्तः ।

सन्निवेशप्रकारमाहेति । 'रासोत्सव' इत्यत्रोक्ताभासस्यानुवादोयम् । नैकाधिकरणतेति । गोपीनां द्वित्वद्वयमेकस्मिन् भगवति न, एकं भगवन्तमवलम्ब्य न तिष्ठति, किन्तु द्वित्वान्तरे द्वितीयो भगवानित्यर्थः । अन्यथेति । समसङ्ख्यायामित्यर्थः । तासां द्वयोर्द्वयोर्मध्ये प्रविष्टेन भगवता कण्ठे गृहीतानां सम्बन्धी रासोत्सवः योगेश्वरेण कृष्णेन सम्प्रवृत्त इत्यन्वयः । स्वस्यैवेति । स्वद्वित्वस्यैवेत्यर्थः । ननु स्वपार्श्वस्थद्वित्वस्थितभगवद्दर्शनेपि संमुखस्थितं तद्दर्शनं तु स्यादित्यत आहुः स्वेति । सविसर्ग इति । अङ्गना अङ्गना अन्तरे इत्यत्र लुप्तविसर्ग इत्यर्थः । इदं बहुवचनं च महत्त्वविवक्षया द्विवचनार्थे । तथा चाङ्गनयोः

---

१ गोपिकानां मध्येऽष्टेति पाठः सूचितः ।

बहुवचनप्रयोगश्च । अन्यदेव वा तन्मण्डलम्, न भागवतोक्तम्। मध्ये वेणुनादस्योक्तत्वात्। अत्र तु रसार्थं नृत्यमिति । गानार्थमपेक्षायामपि देवैरेव तत्सिद्धिः । 'मध्ये मणीनां हैमाना'मित्यत्र तु दर्शनार्थमुक्तत्वात् गोपिकानां देवानां च दर्शनं तथैवेति नानुपपन्नं किञ्चित् । एवं रसार्थं सर्वसामग्र्यामुक्तायां स रसः प्रादुर्भूतः सर्वेषां भविष्यतीति देवादयः सर्वे अलौकिकज्ञानयुक्ता दर्शनार्थमागता इत्याह नभस्तावदिति । तावन्नभो विमानशतसङ्कुलमासीत् । मण्डपे हि नृत्यं रसजनकम् । अन्यथोपरि वैचित्र्यं न स्यात् । तदर्थमपि विमानशतेन सङ्कुलम् । यथा रसोत्पादनार्थं स्त्रियः पुरुषाश्च सम्बद्धाः नानाबन्धयुक्ताः चित्रे स्थाप्यन्ते । तदर्थं भगवता ते चित्रप्रायाः स्थापिताः । अत एवाग्रे 'औत्सुक्यापहृतात्मना'मिति वक्ष्यति । स्वलीलार्थं सर्वं तथा प्रेरयतीति न औत्सुक्येनान्यथासिद्धिः । तासां रसग्रहणार्थमागमनम्, भगवदिच्छा तु चित्रार्थम् । विमानस्थितान् तत्सम्बन्धिनो वर्णयति दिवौकसामिति । स्वर्ग एव स्थानं येषाम् । सदाराणामिति तेषां भावान्तरव्युदासार्थम् । स्त्रीणामुपसर्जनत्वं तासां भावार्थम् । स्वर्गस्थिता रसाभिज्ञा रसयोग्याश्च भवन्तीति । नन्वीश्वरलीला न द्रष्टव्येति कथं तेषां दर्शनार्थं प्रवृत्तिः, तत्राह औत्सुक्यापहृतात्मनामिति । औत्सुक्येन विचाररहितलीलाक्षिप्तमनसा अपहृत आत्मा स्वरूपं बुद्धिर्वा येषाम् । अतः स्वधर्मादेव प्रवृत्ताः, न तु भगवद्धर्मं विचारितवन्तः ॥ ४ ॥

ततो नृत्यारम्भे यद् भाव्यम्, तज्जातमित्याह तत इति ।

**ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः ।**
**जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम् ॥ ५ ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अन्तरे इत्यर्थः। द्विवचनान्तत्वे पररूपापत्त्या 'अङ्गनेङ्गनेन्तरे' इति स्यात्, तथाच छन्दोभङ्ग इति भावः। नृत्यमितीति । नृत्यस्यैव रसोद्बोधार्थकत्वात् तदुद्बोधको वेणुनादो नोक्त इति शेषः । नन्वेवंप्रकारकमण्डले सति 'मध्ये मणीना'मित्यनेन भगवत एकस्य स्थितिः कथमुक्तेत्याशङ्क्याहुः मध्ये मणीनामिति । तत्र तु दर्शनार्थं दृष्टान्तस्योक्तत्वात् गोपिकानां देवानाम्, चकारात् गन्धर्वादीनां दर्शनं तथैव। परितो गोपिकाः, मध्ये एको भगवानिति प्रकारकमेवेत्यर्थः । तथा च तत्र दृष्टानुवाद इति भावः । सर्वेषामिति। द्रष्टॄणामपीत्यर्थः । यथाधिकारमिति शेषः । सामग्र्यामित्यस्यानन्तरं सत्यामिति शेषः । उक्तायां सामग्र्यां सत्यामित्यर्थः । अन्यथेति । विमानाभावे इत्यर्थः । तदर्थमपीति । दर्शनार्थमागमनं वैचित्र्यार्थमपीत्यर्थः । अन्यथासिद्धिरिति । प्रकृत्यात्रागमनमित्यर्थः । तत्सम्बन्धिन इति । दारसाहित्यकथनात् मिथुनरससम्बन्धिन इत्यर्थः । औत्सुक्येनेति । उत्सुकतया विचाररहितं लीलाक्षिप्तं च मनो जातमत आत्मनोपहार इत्यर्थः ।

---

५ ते समये दुन्दुभियोनो नाद थयो, पुष्पवृष्टिओ थई, स्त्रीसहित गन्धर्वोए प्रभुना निर्मल यशनुं गान कर्युं.

आदौ दुन्दुभिवादनम् । 'परमा वा एषा वाग् या दुन्दुभा'विति श्रुतेः । ततः प्रथमतः पुष्पवृष्टिर्मङ्गलार्था । पुष्पाञ्जलिः प्रसिद्धः । आगतो रसः तदधिष्ठाता वा पूज्यत इति । नानाविधानां पुष्पाणां भिन्ना वृष्टय इति बहुवचनम् । ततो गानं साधारणं जातमित्याह जगुर्गन्धर्वपतय इति । भगवान् श्रोष्यतीति उत्तमैरेव गानम् । गन्धर्वपतयो विश्वावसुप्रभृतयः । ते ह्यधिकारिण इति नटानामिव तेषां दर्शनं न दोषाय । अन्यथा भगवद्धस्तस्थितेन्द्रादीनामपि दोषत्वं स्यात् । 'अर्थद्रव्यविरोधेऽर्थो बलीया'निति न्यायात् । तथापि तेषामन्यथाबुद्धिः सम्भाव्येतेति विशेषणमाह सस्त्रीका इति । वैषयिकदोषव्यावृत्त्यर्थमाह अमलं तद्यश इति । तद्धि मलनिवर्तकम् । अतो न तासां तेषां वा तत्कालोपयोगिपदार्थादतिरिक्तो भाव उत्पद्यते ॥ ५ ॥

एवं वाद्यगीतवाद्यादिकमुक्त्वा नृत्यमध्ये रसोपयोगिवादित्राण्याह वलयानामिति ।

**वलयानां नूपुराणां किङ्किणीनां च योषिताम् ।**
**सप्रियाणामभूत् शब्दस्तुमुलो रासमण्डले ॥ ६ ॥**

स्थानत्रये हि वादित्राण्यपेक्ष्यन्ते । नीचस्थाने भूमाविव मध्ये उपरि च । तथैव तालभेदाः । अतोऽत्रापि उपरि वलयानां शब्दः । अधो नूपुराणाम् । मध्ये किङ्किणीनाम् । अन्योन्यावद्धबाहव एव मध्ये मध्ये हस्तद्वयं योजयन्तीति वलयानां शब्दः । अथवाग्रे शब्दोत्पत्त्यर्थं प्रकारं वक्ष्यति 'पादन्यासै' रिति । सप्रियाणां कृष्णसहितानाम् । अत एव सर्वलास्यसम्पत्तिः सर्वासां भगवत्सम्बन्धार्थम् । चकारात् अन्येऽपि कूजितशब्दा मुखशब्दाश्चोक्ताः । सर्वः एकीभूय तुमुलो भूत्वा यथा दूरस्थानामवान्तरग्रहणं न भवति । तथा सति किं स्यात्, अत आह रासमण्डल इति । रसानां समूहमण्डले । यथानधिका-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ततो दुन्दुभय इत्यत्र । दोषत्वमिति । दोषयतीति दोषस्तत्त्वं दोषजनकत्वमित्यर्थः । अर्थद्रव्यविरोधेऽर्थ इति । 'अर्थद्रव्यविरोधेऽर्थो द्रव्याभावेऽतदुत्पत्तेर्द्रव्याणामर्थशेषत्वा'दिति प्रतितन्त्रसूत्रादित्यर्थः । अतस्तेषां दर्शनं न दोषायेति पूर्वेणान्वयः । तथापीति । तद्दर्शनस्य भगवति दोषावहत्वाभावेपि तेषु दोषावहत्वं स्यादित्यर्थः । वैषयिकेति । तत्र तथाउद्भावेपि चित्रदर्शनेनेव स्वस्त्रीष्वेव कामोद्बोधः स्यादित्यर्थः । तासां तेषां वेति । गन्धर्वीणां गन्धर्वाणां चेत्यर्थः ।

अन्योन्येति । ग्रन्थियुक्ते हस्ते एव तालाभिव्यक्त्यर्थं मध्ये मध्ये द्वितीयं हस्तं योजयन्तीत्यर्थः । पादन्यासैरिति इति श्लोके भुजविधुतिमितिशेषः । सर्वलास्येति । कुलाङ्गनानामसम्भावितनृत्याभ्यासानामेतावत्प्रकारकज्ञानं भगवदनुभावादेवेत्यर्थः । सम्बन्धार्थं चेति । सप्रियाणामिति पदमुक्तमिति शेषः । तुमुलो भूत्वेति । स्थित इति शेषः ।

---

१. रासमण्डलमां श्रीकृष्णसहित स्वामिनीओनां नृत्यथी कंकणोनो, नूपुरोनो, किंकिणीओनो, तुमुल शब्द थइ रह्यो.

रित्वेन शूद्रस्य वेदश्रवणे तदध्येतुर्मन्त्रस्य च शक्तिह्रासः, शूद्रे च पापसम्भवः, तथैतद्भक्तातिरिक्तानामेतच्छ्रवणेऽप्यनधिकारादस्य रसस्यालौकिकत्वादेतच्छ्रवणे मण्डले सर्वेषां रसो गच्छेत्। श्रवणे सति तदन्वेषणपरत्वं स्यात्। तत्तेषामेवानिष्टकरमिति तदेव पापरूपम् ॥६॥

एवं नृत्यमध्ये प्रविष्टो भगवान् गुणभावात् कदाचिन्न भासेतेत्याशङ्क्य सर्वजनीना भगवच्छोभा तदा जातेत्याह तत्रेति।

**तत्रातिशुशुभे ताभिर्भगवान् देवकीसुतः।**
**मध्ये मणीनां हैमानां महामरकतो यथा ॥ ७ ॥**

स्वभावशो भातोऽप्यतिशयेन शुशुभे। तदुक्तं 'शक्तिभिः सहितोऽधिकां शोभां प्राप्नोती'ति। कदाचित् स्वत एव शोभां प्रकटयेदिति तद्व्यावृत्त्यर्थं ताभिरित्युक्तम्। ननु सहजशोभायुक्तस्य कथं ताभिरतिशोभा, तत्राह भगवानिति। यथा गुणैः। ननु गुणाः सर्वोत्तमाः, न तथैता इति चेत्, तत्राह देवकीसुत इति। भक्त्या यथा देवक्या अपि पुत्रो जातः। स्त्रीणामेवोपकारायाविर्भूतः। अतस्तास्वपि स्वसामर्थ्यमेव दत्वा शोभां प्राप्तवान्। सहजस्य कृत्रिमैः शोभा न भविष्यतीत्याशङ्क्य दृष्टान्तमाह मध्ये मणीनामिति। महामारकतो गरुडोद्गारी स मणिः सहजः। सुवर्णमणयः कृत्रिमाः। तथापि ते परितः क्लृप्ताः सहजमणिमप्यतिशोभयन्ति ॥ ७ ॥

एवं पूर्वपीठिकामुक्त्वा मुख्यं नृत्यमाह पादन्यासैरिति।

**पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैः**
**भज्यन्मध्यैश्चलकुचपटैः कुण्डलैर्गण्डलोलैः।**
**खिद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो**
**गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः ॥ ८ ॥**

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

तत्रातिशुशुभे इत्यत्राभासे। शोभायाः सार्वदिकत्वेपि कथनस्य प्रयोजनमाहुः नृत्यमध्ये इति। तथा च गौणत्वसंभावितशोभाभावस्य कैमुत्येन निरासो वाक्यतात्पर्यार्थ इति भावः। देवकीसुतपदेन तासामपि तथा व्यवस्थापितत्वात् अग्रिमश्लोके शोभासाधकान्तरं नृत्यसामयिकपादन्यासादिकमेव वाक्यार्थ इत्याशयेन तदाभासमाहुः मुख्यं नृत्यमाहेति।

---

७. सुवर्णना मणिओनीमध्ये जेम महामरक्तमणि शोभे तेम भगवान् देवकीसुत श्रीगोपीजनोनी मध्ये अतिशय शोभा पाम्या.

८. श्रीकृष्णनो उपभोग करनार श्रीस्वामिनीओ, विविध प्रकारना पादन्यासोथी, विविधप्रकारना भुजविधुतिथी, मंदहास्यसहित कटाक्षो अने विविधप्रकारना भ्रूविलासोथी, भङ्गयुक्त कटिओथी, कंपनयुक्त कुचपटोथी, गण्डस्थलपर हालता कुण्डलोथी, खेदयुक्त मुखारविंदवाला, केशपाशनी ग्रन्थिओ जेमनी शिथिल थइ गइ हती एवा, अतः सतोषथी प्रभुना गुणगान करवा लाग्या, अने मेघचक्रमां विद्युतनी माफक शोभी रह्यां

पादन्यासाः सर्वे एव चारीकरणरूपाः । भुजानां विधुतयश्च सर्वहस्तकभेदाः । एकेनावयवेन शिष्टावयवाः तथा संविधानयुक्ता इति ज्ञेयम् । मन्दहाससहिताः सर्वे एव कटाक्षा उक्ताः । भ्रूभेदाश्च । तत्तद्रसे हृदयाविष्टे तथैव भवन्तीति । भज्यद् भङ्गयुक्तानि मध्यानि उपरिभागपरिवर्तनात्मकानि । रसाभिनिविष्टानां तासां सर्वावयवातिभ्रमणेन रस एकीभवतीति । परिवर्तनादिभिरेव वा चलेषु कुचेषु पटा इति सर्वाण्येव कम्पनान्युक्तानि । कुण्डलैर्गण्डलोलैरिति । सर्वे एव शिरोभेदा उक्ताः । शिरोभेदेष्वेव वक्तव्येषु कुण्डलानां यचलननिरूपणम्, तद्विद्युतामिव शोभार्थम् । गण्डलोलैरिति सर्वा कान्तिस्तत्रोपक्षीणेति ज्ञापनार्थम् । गण्डे हि केवलो रसः । पेयो रसस्तत एव पीयत इति । विद्योतनं तस्यैवाभिव्यक्त्यर्थम् । ततोऽन्तःस्थितो रसः पुष्टोऽभिव्यक्त इति ख्यापनार्थमाह स्विद्यन्मुख्य इति । स्विद्यत् स्वेदयुक्तानि मुखानि यासामिति । कबररशनासु च अग्रन्थयो जाताः । रसेन सर्वावयवस्थेन एकीभूतेन देहः सूक्ष्मतामापन्नः । अतः केशपाशे रशनायां च ग्रन्थिः शिथिलः । नन्वेवं कथं श्रमः, तत्राह कृष्णवध्व इति । सदानन्दस्य हि फलस्य ता उपभोक्त्र्यः । अतः क्रियायां श्रमो भवत्येव । एतादृश्योऽप्यन्तःसन्तोषेण गायन्त्यो जाताः । एवं कायादिश्रमैरपि ता विरेजुः । अतिशोभायुक्ता जाताः । ननु लोकानां दर्शनसापेक्षा शोभा, तास्तदा कथं सर्वैर्दृष्टा इति, तत्राह तडित इव ता इति । नहि तडित् बहुकालं दर्शनयोग्या भवति । मेघचक्रे शोभामेव परं सम्पादयति । तथा कृष्णसमूहे भगवता आच्छादिताः । परितः कदाचिदेवोद्गताः केनचिदंशेन दृष्टा भवन्ति । अतस्तासां शोभा न दोषावहा जाता, किन्तु विशिष्टैव जाता ॥ ८ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

पादन्यासैरित्यत्र । अत्र सङ्केतादिसूचनाभावेपि भ्रूविलासकथने हेतुमाहुः तत्तद्रसे इति । स्वत एव भवन्त्यत उक्ता इत्यर्थः । रसाभिनिविष्टानामिति । रसार्थे मण्डले अभिनिविष्टानां अवयवेषु स्थितो रसो भ्रमणेनैकीभवतीत्यर्थः । प्रसिद्धमर्थमाहुः परिवर्तनादिभिरिति । एतैः कृत्वान्तःस्थितो रसोऽनुभूयते, न त्ववयवेषु स्थितस्यैकीभवनमिति पक्ष इत्येवकारः । केवलो रस इति । नत्वधरादिवत् कामादिधर्मसहितः । अत एव गात्रादिभिरपि तत्र चुम्बनं क्रियत इति भावः । धर्मसहितापाने हेतुमाहुः रस इति । नृत्ये इति शेषः । तथा च 'केवलो नाट्ये प्रसिद्ध' इत्युक्तत्वान्नृत्ये लोभादिग्रहणासम्भवाच्च केवलस्यैवाभिव्यक्त्यर्थं गण्डविद्योतनमुक्तमित्यर्थः । गण्डशोभां पश्यन्नृत्यतीत्यर्थः । कामलीलायां तु सर्वं वक्ष्यत एवेति भावः । उपभोक्त्र्य इति । न लौकिकवद्रसानुभवमात्रम्, किन्तु मूर्तिमत आनन्दस्य क्रियारूपं उपभोगं कुर्वन्त्य इत्यर्थः । कायादिश्रमैरपीति । देवकीसुतपदेन तासु स्वसामर्थ्यस्थापनमुक्तम्, तेन ता विरेजुः, पादन्यासादिभिरपि विरेजुरित्यपिशब्दः । सर्वैर्दृष्टा इति । अन्योन्यं ताभिः भावुकैश्चेत्यर्थः ।

गाढनृत्यमुक्त्वा मध्यनृत्यमाह उच्चैर्जगुरिति ।

उच्चैर्जगुर्नृत्यमाना रक्तकण्ठ्यो रतिप्रियाः ।
कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम् ॥ ९ ॥

नृत्यमाना नृत्यं कुर्वन्त्य एव उच्चैर्गानयुक्ता जाताः । अथवा आदावुच्चैर्जगुः । ततो नृत्यमाना नृत्यन्त्यो जाताः । उभयत्र हेतुमाह रक्तकण्ठ्यो रतिप्रिया इति । रक्तः रञ्जकस्वरेण युक्तः कण्ठो यासामस्तीति । रतिरेव प्रिया यासामिति । गानेन व्यामोहनं नृत्येन च तासां प्रसिद्धम् । ननु पूर्वनृत्येन जातश्रमाः कथमेवं कृतवत्य इत्यत आह कृष्णाभिमर्शमुदिता इति । भगवतः अभितोमर्शः प्रोञ्छनादिविशेषरूपः, तेन मुदिताः अन्तःपूर्णानन्दाः । इतरविस्मारणार्थं नादाधिक्यमाह यद्गीतेनेदमावृतमिति । यासां गीतेनेदं जगद् व्याप्तम् । अथवा । यदर्थमेतन्नृत्यादिकम्, तत् सफलं जातमित्याह यद्गीतेनेति । लोकैः क्रियमाणेन गीतेन एतत्प्रकाशकेन एतज्जगद् रसेन व्याप्तमित्यर्थः । लोके रसप्राकट्यार्थमेवैतत् कृतमिति । उत्पन्नस्य नादस्यामृतमयत्वाय भगवतापि नादः

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

उच्चैरित्यस्याभासे । प्रथमव्याख्याने नृत्यस्य गौणत्वेपि द्वितीयव्याख्यानानुसारेणाभासमाहुः गाढेति । पूर्वश्लोके 'गायन्त्य' इत्यनेन गानस्य गौणत्वमुक्तम् । अत्रोभयोः समत्वमुच्यते इत्यर्थः । व्याख्याने । रक्त इति । रञ्जकस्वरस्यैव रागपदार्थत्वादेवमुक्तम् । 'योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः । रञ्जको जनचित्तानां स रागः कथ्यते बुधै'रिति वाक्यात् । तथाच रञ्जनयुक्त इत्यर्थः । कर्तरि क्तः । रतिरेवेति । रतिप्रियत्वात् तत्कर्तुर्भगवतो व्यामोहनार्थं नृत्यमित्यर्थः । तासामिति । स्त्रीणामित्यर्थः । कर्तरिषष्ठी । इतरविस्मारणार्थमिति । नायिकान्तरकृतनादविस्मारणार्थम् । भगवत इतिशेषः । स्वयुगलस्थो भगवान् युगलान्तरकृतं नादं विस्मरत्विति भावेनेत्यर्थः । अस्मिन् पक्षे नादाधिक्यं वाच्योर्थः, अग्रिमपक्षे उपनिबद्धश्रवणानुपपत्तिलभ्यमिति भेदः । लोकैरिति । अत्यनुगृहीतैरेतल्लीलान्तःपातिभिर्गोविन्ददासप्रभृतिभिरित्यर्थः । रसप्राकट्यार्थमिति । अत्रैव लोके जीवानामाधिदैविकरूपप्रकटनेन रसानुभवार्थमित्यर्थः । एतस्य भगवच्चरित्रफलत्वादनुवंदिष्यमाणभगवद्गीतसहितं गीतमेतत्पदेनोच्यते । एवं च प्रथमपक्षेपि यासां गीतेनेत्यत्र भगवद्गीतसहितेनेति शेषो ज्ञेयः । अमृतमयत्वायेति । स्वामिनीनां भगवद्विषयकभावोत्पादनेन रसानुभावकत्वायेत्यर्थः । तथा च स्वामिनीनामेव रसानुभावनार्थं कृतत्वात् तेन जगतः पूरणं न घटेतेत्यर्थः ।

---

१. श्रीकृष्णना प्रोञ्छन वगेरे स्पर्शथी अंतरमां पूर्णानंद अनुभवीने, रतिज जेमने प्रिय छे एवां श्रीस्वामिनीओ रञ्जक स्वरयुक्त कण्ठथी प्रथम ऊंचे स्वरे गान करवा लाग्यां, अने तदनंतर नृत्य करवा लाग्यां, जेमनां गीतथी आ जगत् व्याप्त थइ गयुं, अथवा लोकोना आ रासलीलाना प्रकाश करता गीतोथी आ जगत् रसथी व्याप्त थइ गयुं.

कृतः । स च मधुर एव कर्तव्यः । तेन च जगत् पूरणीयम् ॥ ९ ॥

ततोऽघटमानमेतदिति तदर्थमाह काचिदिति ।

काचित् समं मुकुन्देन स्वरजातीरमिश्रिताः ।
उन्निन्ये पूजिता तेन प्रीयता साधुसाध्विति ॥
तदेव ध्रुवमुन्निन्ये तस्यै मानं च बह्वदात् ॥ १० ॥

मुकुन्देन समं अमिश्रिताः स्वरजातीः काचिदुन्निन्ये । काचित् सम्यग् भगवद्भावं प्राप्ता । भगवतो नादकरणे हेतुः मुकुन्देनेति । मोक्षदानार्थमेव उपनिषदि स्वनादं पूरितवान् । उभयोरेकता । नादे तुल्यता । मोक्षे कार्यद्वयम् । पूर्वसङ्घातान्निवर्तनं ब्रह्मप्रापणं च । तदर्थमितरनिवारणार्थमुपनिषदामुपयोगः । स्वराः षड्जादयः । तेषां जातिभेदाः । यथा मयूरः षड्जं वदति । तथा अन्येऽपि पक्षिणः मनुष्या अन्येऽपि जीवाः षड्जं वदन्ति । तथापि तेषामवान्तरजातिरस्ति । ते चेद्यथाक्रमेण यथारसाभिव्यक्तिः यदभि-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अन्यदप्याहुः स चेति । भगवता कर्तव्यो नादो मूले सहभावोक्त्या मधुर एव । तथा सति गीतकर्तृणामश्रवणे तदुपनिबन्धाभावादपि तेन जगत्पूरणं न घटेत । तथा चैतदर्थं 'कृष्णो मुक्ते' इति विरुध्येतेति भावः । तदर्थमाहेति । भगवन्नादेन जगत्पूरणार्थं मुकुन्दसाहित्यकथनेन मोक्षोपयोग्युपनिषद्रूपत्वं स्वामिनीनां निरूपयन् स्वरजात्युन्नयनमाहेति टिप्पण्यनुसारेणार्थः । टिप्पण्यां स्वस्मिंश्चेति । श्रोतृषु विषयान्तरसञ्चाराभावो भवति, ततस्तज्ज्ञानं भगवन्नादश्रवणं भवतीत्यर्थः । एतदिति । भगवदानन्दानुभव इत्यर्थः । व्याख्याने । एतत्समाधानम् । गीतकर्तृणामुपनिषच्छ्रवणवदेतन्नादश्रवणेन विषयान्तरसञ्चाराभावो भवति, ततो भगवन्नादस्य मधुरस्यापि श्रवणं भवति, ततो भगवदानन्दानुभवो भवति, तेन तत्तदुपबन्धने तत्तच्छ्रवणेनास्मदादीनामपि तत्तत्फलं भवति, एवं जगत्पूरणमिति । तथा चैतत्कृपया भविष्यतीति प्रथमस्यापि समाधानं सम्पन्नमिति ज्ञेयम् । भगवद्भावं प्राप्तेति । इमां स्वरजातिमुन्नेष्ये इति भगवदाशयं ज्ञातवतीत्यर्थः । नादः सर्वसाधारणः, भगवद्विचारितानुपूर्विकोन्नयनमेतस्या एवेति भावः । मोक्षेति । आधिदैविकरूपप्रकटनेनान्येषां भगवद्भजनार्थं स्वामिनीनां च भगवद्विषयकभावोत्पादनेन स्वानुभवनार्थमित्यर्थः । उपनिषदीति । स्वामिनीनादे इत्यर्थः । सममित्यस्य तुल्यार्थकत्वसन्देहेनाहुः एकतेति । मोक्षरूपैककार्यकर्तृत्वमित्यर्थः । इयमेव तुल्यता । [illegible] मोक्षे इति । प्रथमांशः स्वामिनीनादेन, द्वितीयांशश्च भगवन्नादेन [illegible]

प्रायेण सृष्टावुत्पादिताः, तथैवं योजिताश्चेत्, तदा स्वरजातयः अमिश्रिताः भवन्ति। तद्भगवता कर्तुं शक्यम्, नान्येन। तासां चेदुन्नयनम्, तदा युक्त एव सन्तोषः। तदाह पूजिता तेन भगवतेति। स्वस्य अज्ञत्वात् स्वविचारितानुपूर्वीति स्वस्य तथा गानं नाश्चर्यहेतुः। अन्ये तु तत्स्वरूपमेव न जानन्ति, कुतः पुनः करिष्यन्तीति तेनैव पूजिता। किञ्च, कार्यमपि उन्नयनेन जातमिति। साधुसाध्विति। प्रीयता प्रीतिं कुर्वता भगवता। स्वरूपतः फलतश्च साधुत्वाय द्विरुक्तिः। प्रीतिश्च तुल्यत्वात् सर्वथा कार्यानुगुणत्वात्। अन्या पुनः उन्नीतमेव यावद् भगवता पुनर्गृह्यते, तावत्तथैवोन्नयनं कृतवतीत्याह तदेवेति। तदेवोन्नीतं ध्रुवं निश्चलं यथा भवति, तथा उन्निन्ये। तं नादं ध्रुवनादे योजितवती। ध्रुवनादः कारणनादः स्थायी स्वरः। 'यत्रोपविशते रागः स्वरः स्थायी स कथ्यते'। भगवन्नाद एव वा। भगवता तथैव गीतमिति। ध्रुवतालादिषु योजितवतीति केचित्। तन्न विचारक्षमम्। एवं ध्रुवयोजनायां भगवांस्तस्यै बह्वेव सन्मानमदात्। चकारादभीष्टमपि। एवं तासामन्तःसामर्थ्यं जातमिति बहिःसामर्थ्यं किं वक्तव्यमिति भावः। बह्विति सर्वगोप्यधिकम्। ऐश्वर्यवीर्यरूपे चैते निरूपिते। अन्याश्चतस्रः क्रमेण बोद्धव्याः॥ १०॥

कीर्तिर्हि भगवन्तमेवावलम्बते। अतः कायिकं व्यापारं द्वयोराह काचिदिति।

**काचिद्रासपरिश्रान्ता पार्श्वस्थस्य गदाभृतः।**
**जग्राह बाहुना स्कन्धं श्लथद्वलयमल्लिका॥ ११॥**

रासेन परितः श्रान्ता स्वस्यैकस्मिन् पार्श्वे विद्यमानस्य स्कन्धं स्वबाहुना जग्राह। गदाभृत इति भगवतः स्थिरत्वाय। अधिकप्रयत्ने अन्यथा क्रियमाणे रासो भज्येत।

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख।

पुनः करिष्यन्तीति। पूजामिति शेषः। कार्यमपीति। भगवतः स्वामिनीविषयकभावोत्पादनमित्यर्थः। अन्या पुनरिति। द्वितीयपार्श्वस्थितेत्यर्थः। तन्न विचारक्षममिति। तथा सति ध्रुवे उन्निन्ये इति ससम्युक्ता स्यादिति भावः। ऐश्वर्यवीर्यरूपे चैते इति। तत्तद्धर्मस्थापनेऽयोगोलकन्यायेन तत्तद्रूपत्वमेव सम्पन्नमिति भावः। चकारादुपनिषद्रूपत्वम्।

कीर्तिर्हीति। पूर्वद्विकस्य वाचिकव्यापार उक्तः, अस्य द्विकस्य कायिकव्यापार उच्यते। तत्र श्रिया भगवति कायिको व्यापारः प्रसिद्ध इति तद्रूपाया एव स्वामिन्यास्तादृशव्यापारस्य वक्तव्यत्वेपि हि यतः कीर्तिरपि भगवन्तमेवावलम्बतेऽतः कायिकं व्यापारं कीर्तिश्रीरूपयोर्द्वयोरपि स्वामिन्योराहेति श्लोकद्वयाभासकथनम्। स्थिरत्वायेति। स्कन्धं स्वबाहुना जग्राहेति पूर्वेणान्वयः। गदाभृत्त्वात् स्थित्यर्थमवष्टम्भाय गदां स्मरेदिति शङ्कया स्वयमेवावष्टम्भं सम्पादयतीत्यर्थष्टिप्पण्युक्तः। गदाग्रहणे बाधकमाहुः अधिकेति।

११. कोईक रासथी बहु श्रमित थयली स्वामिनीजी जेमनी वलयाकार मल्लिकामाला शिथिल थई गई हती, तेमणे पासे स्थिर उभेला भगवानना स्कंधनो पोताना बाहुथी आश्रय लीधो। १ तासांयेति पाठ.।

परिश्रमो रसाधिक्यात् । अन्यथा रसार्थं प्रवृत्तिर्न स्यात् । मण्डलपरित्यागे मण्डलसिद्ध्यर्थं भगवतापि हस्तग्रहणं सम्भवति । अत एकस्मिन् पार्श्वे भगवानेव । पार्श्वभागे विद्यमानस्य भगवतः कण्ठग्रहणं वृक्षाधिरूढालिङ्गनं भवति । भगवता पूर्वं कण्ठे सा गृहीता, तयापि भगवान् गृहीत इति मित्रवत् स्थितिः स्यादिति तन्निवृत्त्यर्थमाह श्लथद्वलयमल्लिकेति । श्लथन्ती वलयाकारा मल्लिका यस्याः । कबरे वलयाकारेण मल्लिकामाला बद्धा । सा च शिथिला जातेति वैकल्यं प्रदर्शितम् । आसक्ता च प्रदर्शिता ॥ ११ ॥

**तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ।**
**चन्दनालिप्तमाघ्राय हृष्टरोमा चुचुम्ब ह ॥ १२ ॥**

अन्या पुनः स्वस्य एकांसगतं बाहुं उत्पलापेक्षया अधिकपरिमलयुक्तं चन्दनेनालिप्तं बाहुमाघ्राय अन्तःप्रविष्टामोदा पूर्णानन्दा सती हृष्टरोमा बाहुमेव चुचुम्ब । रूपस्पर्शौ पूर्वमेव स्थितौ । गन्धरसयोरप्यनुभवं कृतवतीति । हेत्याश्चर्ये । तत्रेति । तस्मिन्नेव समये, तत्रैव भगवति वा । उभयपार्श्वस्थयोर्गोपिकयोस्तथा सति विनियोग उक्तो भवति । एकां-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

स्थित्यर्थमधिकप्रयत्ने गदया क्रियमाणे इत्यर्थः । अन्यथेति । परिश्रमस्थितावित्यर्थः । मण्डलेति । नृत्यावेशेन कदाचित् स्वामिनीहस्तग्रन्थिवियोजने मण्डलसिद्ध्यर्थं स्वामिन्यन्तरहस्तस्थाने भगवतापि स्वहस्तो ध्रियते, तदा पार्श्वे भगवानेव, न तु भगवद्व्यवहिता स्वामिनीत्यर्थः । **कण्ठे सा गृहीतेति** । 'द्वयोर्द्वयोः प्रविष्टेन गृहीतानां कण्ठे' इति पूर्वमुक्तत्वादिति भावः । **तयापीति** । एकेन हस्तेन ग्रन्थिः स्थापिता, द्वितीयेन बाहुना स्कन्धं गृहीतवती । तथा च सांमुख्यं जातमिति ज्ञेयम् । अयं प्रकारो द्वितीयस्वामिनीस्थितौ न भवतीति पार्श्वे भगवानेवेत्युक्तम् । वलयाकारेणेति । शिरःप्रान्ते शिखायां कङ्कणाकारपरिवर्तनेनेत्यर्थः । **सा चेति** । कबररशनाग्रन्थिशैथिल्यं चकारार्थः । आसक्ता चेति । कबरे धृत्वा चुम्बनं रसातिमादे भवतीति तथाकरणे मल्लिकाशैथिल्यं जातमिति महारसदानेनासक्ता प्रदर्शितेत्यर्थः । अत एवाङ्गुलीभिः पुष्पाणामेव शैथिल्यम्, न मालाया इति भावः ।

**अन्या पुनरिति** । द्वितीयपार्श्वस्थितेत्यर्थः । अनयोर्विनियोगः कालभेदेन । अतः पार्श्वे भगवानेवेत्युक्तेन न विरोधः । 'तस्मिन्नेव समये' इति पक्षे तु भगवदनुभावेनैव द्विकान्तरस्थभगवत इवान्योन्यमप्यदर्शनम् । तथा सतीति । 'अन्या एवं कृतवती'ति पक्षे सतीत्यर्थः । सैवेति वक्ष्यमाणपक्षे तूभयोर्विनियोगो नोक्तो भवेदिति भावः । तत्रैका

---

१२. तेज समये बीजा एक स्वामिनीजीए पोताना एक अंसपर रहेलो कमलना करतां अधिक परिमलयुक्त चन्दनचर्चित भगवान्‌नो श्रीहस्त सुंघ्यो, अने तेना आमोदथी पूर्ण आनन्द पामीने पुलकित थई, तेज श्रीहस्तनुं चुंबन कर्युं.

सगतमिति वा । सैव तथा कृतवतीति केचित् । सदानन्दत्वात् सर्वत्रैव समरसता । उत्पलं हि रात्रिविकासि । तत् स्त्रीणां मनोज्ञम् । आघ्राणे चन्दनजसौरभमेव न हेतुः, किन्तु ततोऽपि विलक्षणं साधारणजनावेद्यं तदपेक्षयापि सौरभयुक्तत्वेनात्यलौकिकभाववतीनामेव वेद्यम् । सहजसौरभमित्यपि ज्ञापनायेदं विशेषणम् । चन्दनालेपः विवेकधैर्येनाशनार्थः । घ्राणेनान्तःप्रवेशनमस्या विशेषः । एषा श्रीरूपा ॥ १२ ॥

कयाचिद्भगवद्गृहीतताम्बूलं ज्ञानवद्गृहीतमित्याह कस्याश्चिदिति ।

**कस्याश्चिन्नाट्यविक्षिप्तकुण्डलत्विषमण्डितम् ।**
**गण्डं गण्डे सन्दधत्या अदात्ताम्बूलचर्वितम् ॥ १३ ॥**

कस्मैचित् ताम्बूलचर्वितमदादिति । स्वगण्डं भगवद्गण्डे सन्दधत्या इति तस्या अपेक्षा लाघवं च सूचितम् । सम्मुखत्वाभावेऽपि लाघवेनैव प्रादात् । अनेन तस्मै स्वविद्या दत्तेति ज्ञापितम् । तेनेयमेवोपदेष्ट्री भगवदसन्निधाने सर्वासां भविष्यति । तस्याः विद्यायोग्यतां वक्तुं लौकिकक्रियाज्ञानशक्तिमत्त्वमाह नाट्यविक्षिप्तकुण्डलत्विषमण्डितमिति । नाट्येन विक्षिप्तस्य कुण्डलस्य त्विषा मण्डितं गण्डम् । नाट्ये क्रियाशक्तिः प्रतिष्ठिता । कुण्डले

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

इति प्रथमान्तं विकल्पेनोक्तम् । सैवेति । पूर्वश्लोकोक्तैवेत्यर्थः । तथा सति कीर्तिश्रीरूपत्वेन तयोर्भेदः पूर्वोक्तो बाधितो भवेत्, अतः केचिदित्यस्वरस उक्तः । आघ्राणस्य सर्वसमत्वेप्यस्यास्तत्कथने विशेषमाहुः घ्राणेनेति । अस्यायं विशेष इत्यर्थः ।

कस्याश्चिदित्यत्राभासे । पूर्वाध्याये 'काचिदञ्जलिने'ति श्लोकोक्तताम्बूलस्य श्रीसमर्पितत्वमुक्तम् । इदं तु ताम्बूलं कस्याश्चिदिति षष्ठ्या सम्बन्धसूचनादेतयैव समर्पितमित्याशयेनाहुः भगवद्गृहीतेति । यथा ज्ञानं गुरूपसत्त्यादियत्नेन गृह्यते, तथा भगवद्गृहीतताम्बूलमनया गण्डसन्धानयत्नेन गृहीतम् । ग्रहणानुकूलव्यापारविषयीकृतम् । ज्ञानवद्ग्रहणार्थं गण्डसन्धानं कृतमिति यावत् । इति ज्ञानवद्ग्रहणाद्धेतोः आह । भगवत्कृतं ताम्बूलदानमिति शेषः । व्याख्याने । कस्मैचिदिति । तस्याः सम्बन्धितया समर्पितं तस्मै अदादित्यर्थः । अनेनेति । दाने प्रकर्षकथनेनेत्यर्थः । वाक्पतिना भक्तानां जीवनसम्पत्त्या द्वितीयदलानुभवार्थं स्नेहेन भक्तविषयकेण निष्पीड्य स्थापितोर्थो विद्यासादृश्याद्विद्येति टिप्पण्यनुसारेणार्थः । मायानिर्मितव्युदासाय स्वपदम् । तथा चैतेन तादृक् सामर्थ्यं दत्तं येन द्वितीयदलानुभावनं भवतीति भावः । लौकिकेति । लोकसिद्धा । संयोगरसानुभाविका या क्रियाशक्तिर्ज्ञानशक्तिश्च तद्वत्त्वं भक्तेराहेत्यर्थः । तथा च प्रथमदलानुभवसामर्थ्यस्य सिद्धत्वाद्द्वितीयदलानुभवसम्पादकविद्याग्रहणयोग्यतेति भावः । अनुकरणे तादृक्शोभां दृष्ट्वा प्रीतस्ताम्बूलं प्रादादिति । कुण्डलपदेन ज्ञानशक्तिः ।

---

१३. कोइ एक स्वामिनीजीए पोतानुं रासथी चलायमान कुण्डलनी कातिथी मण्डित गण्डस्थल भगवान्ना गण्डस्थल साथे धर्युं, अने भगवाने तेमने पोताना ताम्बूलचर्वित ( स्वविद्या ) नुं दान कर्युं.

ज्ञानशक्तिः । क्रियाशक्त्या विक्षेपोऽत्राभ्यासः । योगात्मकत्वात् साधनानि वा । तस्य कान्तिरनुभवः । तेनालङ्कृता भक्तिः । भगवत्प्रेम्णा सम्बद्धा । यथा सा भगवति रता, एवं तस्यामपि भगवान् रतः । तत्रापि गण्डमिदं साध्यरूपा भक्तिरुच्यते । तां लक्ष्मीं प्रति मूलपर्यटनमिति । लक्ष्मीवन्तं प्रति पुनः पुनरावर्तेत इति ज्ञानताम्बूलयोस्तुल्यता । चर्वितमिति साधनप्रयासाभावेन सिद्धदानम् ॥ १२ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

पक्षान्तरमाहुः योगात्मकत्वादिति । साधनानि कुण्डलपदार्थ इत्यर्थः । तस्येति । योगस्येत्यर्थः । तथा च क्रियाशक्त्यभ्यस्तयोगरूपसाधनानुभवसहिता भक्तिरित्यर्थः । ज्ञानस्य कुण्डलपदार्थत्वपक्षे तस्य कान्तिः प्रकाश इत्यर्थः । अलङ्कृता भक्तिरिति । स्वामिनीगण्डं भगवद्विषयकः स्नेह इत्यर्थः । भगवत्प्रेम्णेति । भगवद्गण्डेन स्वामिनीविषयकस्नेहेनेत्यर्थः । तस्यामपीति । भगवानात्मन्यपि रत इत्यपिशब्दः । अत एव 'आत्मारामोपि लीलये'ति वक्ष्यते । सा तु भगवत्येव रता । आत्मापि भगवदर्थमेव प्रिय इति भावः । तत्रापीति । भक्तावपीदमत्रोक्तं गण्डं साध्यरूपा भक्तिः । लोभस्वरसानुभवसहितेत्यर्थः, न तु 'कुण्डलैर्गण्डलोलै'रित्यत्रेव केवलरसग्रहणसहितेत्यर्थः । तां लक्ष्मीमिति । तां कुण्डलशोभां प्रति मूलस्य स्वामिनीविषयकस्नेहरूपभगवद्गण्डस्य पर्यटनं जायते इति हेतोस्तथेत्यर्थः । भगवांस्तच्छोभां लक्षीकृत्य स्वगण्डं पुनः पुनस्तत्र संयोजयतीति यावत् । ज्ञानरूपत्वकथनस्य निगूढाशयमाहुः लक्ष्मीवन्तमिति । तादृशशोभावन्तं गण्डं प्रति मुखान्तःस्थितं ताम्बूलं पुनः पुनरावर्तते इति चर्वणानुकरणम् । भगवज्ज्ञानमपि तादृग्गण्डं प्रत्येवावर्तते, पुनः पुनस्तद्विषयकं भवतीति यावत् । अतस्तुल्यतेत्यर्थः । ताम्बूलदानानन्तरं भगवान् कुण्डलक्विपमण्डितताम्बूलावृतिचलद्गण्डशोभापहृतचित्तस्तदेव पुनः पुनः पश्यति, अतो ज्ञायते ताम्बूलव्याजेन ज्ञानमेव तस्यै दत्तवांस्तस्यां स्वज्ञानं स्थापितवानिति निर्गलितोर्थः । क्विप इति घञर्थे कविधानम् । स्त्रीत्वविवक्षाभावान्न टाप् । कुण्डलयोस्त्विट् कुण्डलक्विपमिति समासान्तो वा, पद्मनाभ इतिवत् ।

---

१. कस्याश्चिदित्यत्र । तत्रापि गण्डमिदमिति । साध्यं फलम्, तद्रूपा फलानुभवरूपेत्यर्थः । तत्र स्थित्वा तत्सम्बन्धेन फलानुभवः कर्तुं शक्यते इति साध्यरूपभक्तित्वं गण्डस्य । तां लक्ष्मीमिति । तां लक्ष्मीं गण्डसम्बन्धिनीं कान्तिरूपलक्ष्मीं प्रति तद्रसानुभवमूलभूतस्य भगवतः पर्यटनमीषत्तदासिगुल्य-करणम् । लक्ष्मीवन्तमिति । पूर्वनिरूपितकान्तिरूपलक्ष्मीवान् गण्डः, तत्स्पर्शजनितरसभावप्रकारविशेष-लीलाविषयकभगवज्ज्ञानावृत्तिरेवावृत्तिः । तद्वन्मुखे चर्वितदानार्थं वारंवारं ताम्बूलावृत्तिरिति ज्ञानताम्बूलयो-स्तुल्यता । अत एवाग्रे चर्वणप्रयासाभावात् सिद्धदानम् । २. प्रादादिति पाठः ।

अपरा पुनः वैराग्यात्मकं क्रियारूपमच्छिद्रं ज्ञाने सहायार्थं भगवद्धस्तं स्वहृदये स्थापितवतीत्याह नृत्यतीति ।

**नृत्यती गायती काचित् कूजन्नूपुरमेखला ।**
**पार्श्वस्थाच्युतहस्ताब्जं श्रान्ताधात् स्तनयोः शिवम् ॥ १४ ॥**

सा नृत्यं गानं च कुर्वती स्थिता । तत्राभिनये यथान्यहस्तः स्थाप्यते, स्वहस्तो वा, तथा भगवद्धस्तमेव स्थापितवती । शाब्दं ज्ञानं तदर्थानुष्ठानं च तस्या वर्तत इति ज्ञापनार्थं नृत्यगानयोः कथनम् । कूजती नूपुरे मेखला च यस्याः । उपरि गानाभिनयनम् । पादयोर्नृत्यम् । अत एव नूपुरयोर्मेखलायाश्च शब्दः । स च भावोद्दीपकः । अनेन तस्याः पूर्वस्थिता सर्वैव क्रियाशक्तिः सफलेति सूचितम् । एकस्मिन्नेव पार्श्वे विद्यमानस्य भगवतः श्रान्ता सती तत्तापहरणार्थं स्तनयोरधात् । तापहारकत्वमब्जस्य प्रसिद्धम् । श्रमो निर्वृतिसूचकः । स्वस्याः पूर्वक्रियापरित्यागः चाह्यत एवेति भगवत एकस्मिन् भागे स्थितिरुक्ता । भगवत्क्रियाशक्तेरक्षयत्वसूचनायाच्युतेति । अग्रे सम्बन्धस्यापि करिष्यमाणत्वात् तदविघातार्थं च । तस्य पुनः कामाद्युद्बोधकत्वेन तापानाशकत्वमाशङ्क्याह शिवमिति । तदेव कल्याणरूपम्, आनन्दरूपत्वाच्च भगवतः ॥ १४ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नृत्यतीत्यस्याभासे । अपरेति । द्वितीयपार्श्वस्थेत्यर्थः । अच्छिद्रमिति । कर्णादिवत् सच्छिद्रं नेत्यर्थः । व्याख्याने । अनेनेति । भावोद्दीपककूजनकथनेनेत्यर्थः । तथा च भगवान्नूपुरमेखलाकूजनेनोद्दीप्तभावोऽन्याज्ञातप्रकारेण तदभिलषितं सर्वं हस्तेनावयवस्पर्शेन पूरितवांस्ततो निर्वृत्या श्रान्ता जाता । वियोगे तापसम्भावनया तापस्य हरणार्थं च तद्धस्तं स्तनयोरधादिति मूलार्थः । अभीष्टपूरणात् क्रियाशक्तिः पूर्वमेतद्भावनया कृता सर्वैव सफला । जातेति शेषः । श्रमे नृत्यपरित्यागे भगवतः स्थितिः पार्श्वे किमर्थेत्याशङ्क्याहुः स्वस्या इति । श्रमावसरेपि नृत्यपरित्यागो चाह्यत एव । अन्तस्तु नृत्याभिलापस्तिष्ठत्येव । अतः पुनर्नृत्यार्थं भगवतस्तथैव स्थितिरित्यर्थः । स्पर्शमात्रेणाभिलापपूरणमच्युतत्वादित्याहुः भगवत्क्रियेति । अनेनैव कार्यसिद्धावग्रे मुख्यभोगो न स्यादित्याशङ्काप्यच्युतपदेनैव निरस्तेत्याहुः अग्रे इति । आनन्देति । शिवत्वेनानन्दसाधनत्वाद्भगवत्सम्बन्धित्वेनानन्दरूपत्वाच्च तापाजनकतेत्यर्थः ।

---

१४ बीजा कोई स्वामिनीजी जेओ नृत्य अने गान करता हता, जेमनां नूपुर अने मेखलानो सुंदर शब्द थई रह्यो हतो, तेओए श्रमित थवाथी पासे उभेला अच्युतना कल्याणकारी हस्तकमळने पोताना स्तनोपर मूक्युं. १ रसोद्दीपक इति पाठ ।

एवं षण्णां स्वरूपमुक्त्वा स्वरूपेण सर्वासां साधारणीं लीलामाह गोप्य इति ।

**गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम् ।**
**गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे ॥ १५ ॥**

अच्युतः कान्तो भगवानेव भवति । अन्तर्बहिश्च नित्यानन्ददायी । अत एव सर्वस्त्रीणां मूलभूतायाः श्रिय एकान्ततो वल्लभः परमः प्रियः । तादृशं लब्ध्वा तमेव गायन्त्यो विजह्रिरे । ननु परमानन्दे प्राप्ते क्रियाया अपगम एवोचितः, न तु पुनः क्रिया, तत्कथं विहार इति चेत्, तत्राह तद्दोर्भ्यां गृहीतकण्ठ्य इति । भगवत्क्रिययैव व्याप्ताः, न तु स्वक्रिया काचित् । कण्ठे क्रियायाः स्थापितत्वाद्गानं क्रिया च सम्भवतः । इयं क्रिया शक्तिरूपेति स्वातन्त्र्यं तासां निरूपितम् ॥ १५ ॥

अतः परं राधादामोदरवदुभयोर्नृत्यमाह कर्णेति ।

**कर्णोत्पलालकविटङ्ककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः ।**
**गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम् ॥**

रासार्थमेवैतदपि, परं प्रत्येकं रस उत्पद्यत इति गोष्ठीमात्रमुक्तम् । 'उभयोर्गाढनृत्ये

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कर्णेत्यस्याभासे । अतः परमिति । अत्र समुदायरमणं प्रत्येकरमणं च वक्ष्यते । तत्तद्रमणानुकूलभावोद्दीपनाय नृत्यमपि तथा तथा वाच्यम् । तत्र समुदायनृत्यं पूर्वमुक्तम् । अस्मिन् श्लोके प्रत्येकनृत्यमुच्यते इत्याहुः उभयोरिति । प्रतिगोपीमेकैकस्वरूपो भगवानासीदित्येका स्वामिनी एको भगवानित्येवं प्रकारकं नृत्यमित्यर्थः । तत्र दृष्टान्तः राधेति । यथा पूर्वं समुदायरमणानन्तरं युगलरसानुभवार्थं एकां गोपीं पृथग्नीतवानिति द्वितीयाध्याये 'ततो गत्वे'त्यस्य टिप्पण्यां निरूपितम्, तथात्रापि युगलरसानुभवार्थमिदं नृत्यमित्यर्थः । एतावान् परं विशेषः, तत्रैकस्या एव युगलरसानुभवः, अन्यासां तु विरहानुभवः, अत्र सर्वासामेव तथेति । षष्ठ्यर्थे वतिः । तयोरिव तयो रमणमित्यर्थः । युगलरसानुभवार्थकत्वेन साधर्म्यम् । सङ्गे नीता या राधेति नामेति सहस्रनामनामावलीपाठादवगन्तव्यम् । व्याख्याने । 'बहुनर्तकीयुक्तो नृत्यविशेषो रास' इत्युक्तत्वादिदं प्रत्येकं भगवतोवस्थानं रासाननुगुणं भविष्यतीत्याशङ्क्याहुः रासार्थमेवैतदपीति । भगवांस्तावद्रूपः सन् प्रत्येकं

---

१५. आप्रमाणे श्रीस्वामिनीजीओए लक्ष्मीजीने अत्यंत प्रिय एवा भगवान्‌नेज कान्त तरीके प्राप्त कर्या, भगवाने पोताना श्रीहस्त तेमना कण्ठमां धर्या, अने श्रीस्वामिनीजीओ प्रभुना गुणगान करतां विहार करवा लाग्यां.

१६. श्रीस्वामिनीजीओए कर्णमां कमल धारण कर्यां हतां, केशरूपी भ्रमर ते रसनुं पान करतां हतां, ए प्रमाणे तेमनां कपोल शोभतां हतां, तेना उपर नृत्यथी आवेला श्रमजलथी तेमनां मुखनी शोभा अलौकिक थई हती, एवां श्रीस्वामिनीजीओ भगवान्‌नी साथे नृत्य करतां हतां त्यारे तेमना केशमांथी मालाओ छुटी जती हती, ए रासगोष्ठीमां भ्रमरो गायको हता, कंकण अने नूपुरना घोष (शब्द) वादित्रनुं कार्य करतां हतां. *( राधादामोदर नृत्य ). अत्र स्वतन्त्रव्याख्यानं वेणुनादे मुद्रितम् ।

विनियोगात्। भ्रमरो गायकः। वाद्यं तु पूर्ववदेव भविष्यति। तदाह वलयनूपुरघोषवाद्यै- रिति । वलयानां नूपुराणां घोषशब्देन किङ्किणीनां शब्दा एव वाद्यशब्दाः । अत्यन्तं नृत्याभिनिवेशार्थं स्वकेशात् स्रस्ताः स्रजो यासामित्युक्तम् । ( यद्वा । गायकास्तु भ्रमरा निरूपिताः, ते च मकरन्दार्थिनः । स च पुष्पेष्वेव तिष्ठति । तानि च वियुक्तानि तद्रहितानि च भवन्तीति स्वनृत्यानुरूपगानकरणादतिप्रसन्नास्तेभ्यः स्रज एव दत्तवत्यः । अन्यथा रसार्थं स्वकेशेषु शोभाहेतुत्वेन धृतानां तासामुपेक्षा न भवेत् । तेन भ्रमराणां गाननैपुण्यं प्रभुप्रियाणां च तदभिज्ञत्वं च ध्वन्यते । ) नृत्यारम्भे तासां शोभामाह कर्णेति । अन्यथा पूर्वोक्तनृत्येन श्रान्तानां पुनर्नृत्यमनुचितमेव स्यात् । न वा रसालम् । कर्णे उत्पलस्थापनं तस्य अपातने चातुर्यार्थम् । तत्सहिता अलकाः भ्रमरा इव रसपातारः । तेषां विटङ्कः अलङ्करणरूपं स्थानम् । एतादृशौ कपोलौ । तत्र यो घर्मः अन्तरुद्गतश्रमजलं नृत्याभिनिवेशाज्जातम् । तैः कृत्वा वक्त्रे श्रीरलौकिकी काचित् सम्पन्ना । यथा मुक्ताभिर्म- ण्डितं भवति कपोलद्वयम् । अनेन मुखे श्रमो निवारितः । ताभिः सह भगवतो नृत्ये अनुभावकश्च भवति । स्वतो वा । क्रीडानिवृत्तिरनेन सूचिता । गोप्य इति । भगवत एव तासामेतावत्त्वम्, न स्वत इति ज्ञापितम् । अतो भगवता समम्, यथा यथा भगवान् नृत्यति, तथा तथा ता अपि नृत्यन्तीति ॥ १६ ॥

एवं प्रादुर्भूते रसे अत्यन्तोद्गमनार्थं साक्षात्कामशास्त्रोक्ताश्चेष्टा निरूपयति एवमिति ।

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

रसमुत्पादितवांस्तावता बहुनर्तकीयुक्तत्वं न क्षतम्, परं समुदितैकरसाभावात् पूर्ववत् क्रीडामित्येकवचनं नोक्तम्, किन्तु प्रत्येकरसोत्पादनाद्गोष्ठीपदमुक्तम् । गोष्ठ्यां हि यथाधिकारं सर्वैर्भिन्नो रसोनुभूयते इति भावः ।—घोषशब्देनेति । घोषयन्तीति घोषा इति व्युत्पत्त्या घोषशब्देन किङ्किण्य उच्यन्ते । तत्त्रयाणां शब्दाः, अतस्त्रयाणां वाद्यत्व- मित्यर्थः । अन्यथेति । शोभाकथनाभावे इत्यर्थः । अनेनेति । कपोलयोः स्वेदेन मुख- श्रीकथनेनेत्यर्थः । श्रमो म्लानतेत्यर्थः । स्वेदश्रीदर्शनेन चुम्बनादिना अनुभावको घर्म इत्याहुः ताभिरिति । घर्मश्रीकथनस्य प्रयोजनान्तरमाहुः स्वतो वेति । नात्र सहार्थे सममिति, किन्तु तुल्यार्थे, तथा च भगवत्प्रधानकमेव नृत्यमित्येताभिः सहेत्युक्तम् । अत इति । भगवता तुल्यतायाः सम्पादितत्वादित्यर्थः । भगवता समं तुल्यमित्यर्थः । भगवन्नृत्यं दृष्ट्वा तदनुसारेण ननृतुः, अतो भगवतः प्राधान्यमिति भावः । साक्षात्कामेति । नृत्यादयः परंपरया कामोद्बोधकाः । आलिङ्गनादयस्तु साक्षादुद्बोधकाः । तथा च साक्षात्त्वेन कामशास्त्रोक्ता इत्यर्थः ।

---

१ प्रभूणां स्वतन्त्रः । २-१-श्रान्तानामिति पाठ. ।

**एवं परिष्वङ्गकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ।**
**रेमे रमेशो व्रजसुन्दरीभिर्यथार्भकः स्वप्रतिबिम्बविभ्रमः ॥ १७ ॥**

आलिङ्गनादयस्तत्र निरूपिताः । एवमेव रसोद्गमनार्थं परिष्वङ्गः, आलिङ्गनम् । ततः कराभिमर्शः, तत्तदवयवेषु भगवद्धस्तस्पर्शः । ततः स्निग्धेक्षणं भावोद्गारि । तत उद्दामो विलासः, अमर्यादो भोगः । ततो हास्यानि पूर्णमनोरथानाम् । एवं परिष्वङ्गादि-हासान्ताः सर्वासु । ननु प्राकृतीभिः कथं रेमे, तत्राह रमेश इति । रमाया ईशः । सर्वत्र तासु रमापि भगवदाज्ञया निविष्टा । ता अपि अधिष्ठानयोग्या इत्याह व्रजसुन्दरीभि-रिति । नन्वात्मारामः कथमेताभी रेमे, लक्ष्मीस्तु ब्रह्मानन्द इति रमणमुचितमपि । एतास्त्वविशेषोऽप्यनुचितः, ब्रह्मभावाभावादिति चेत्, तत्राह यथार्भक इति । बालको हि दर्पणजलादिकं पुरतः स्थापयित्वा, तत्र तत्रात्मानं पश्यन् रमते । तथा भगवानपि स्वसामर्थ्यं स्वरूपं वा तत्र स्थापयित्वा, ब्रह्म ब्रह्मानन्दं चाविर्भावयित्वा रेमे । नन्वेतद-प्यनुचितम्, किमनेनेति चेत्, तत्राह यथार्भकः । यथा बाललीलां कृतवान्, तथैतदपि

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

एवमित्यत्र । नन्वात्माराम इति । आत्मनि स्वार्थभूतायां रमायां दाम्पत्येन रमणकर्ता रमेशो रमासमक्षमेताभिः कथं रेमे । ननु यथैतत्समक्षं लक्ष्म्या रेमे, तथा लक्ष्मी-समक्षमेताभिरपीत्याशङ्क्याहुः लक्ष्मीस्त्विति । सा तु ब्रह्मानन्दत्वादात्मनोर्धम्, स्वीयेति यावत् । अतोन्यसमक्षं तथा रमणमुचितमपि । अपिशब्दात्तत्रापि अस्वारस्यम् । मुख्य-रसप्राप्तिस्तु तस्याः अपि न भवत्येव, किन्तु यथा कथञ्चिद्रमणं स्यात् । परमेताभिस्तु सह लक्ष्मीसमक्षं रमणमपि न स्यादेवेत्यर्थः । आशङ्कान्तरमाहुः एतास्त्विति । द्वितीयाशङ्का-समाधानं सुबोधिन्यां स्फुटमनुक्तं टिप्पण्यामेवोक्तमिति ततोवधारणीयम् । नन्वेतदिति । अतो दृष्टान्तस्याभासान्तरं वक्तव्यमिति शेषः । 'नन्वात्माराम' इत्याभासादाभासान्तरमाहुः किमनेनेति । कैमुत्येनाप्राकृतत्वसूचनार्थेकेन रमानिवेशनेन स्वामिनीनां तु स्वाच्छन्द्यहान्या रसन्यूनतैव भवेत्, अतस्तासां किं फलं सम्पादितवानितिप्रश्ने तासु रसविच्छेदाभावं दृष्टान्ते-नाहेत्यर्थः । अस्मिन्पक्षे स्वप्रतिबिम्बविभ्रम इतिपदस्यार्थटिप्पण्यामावृत्तिकथनेनोक्तः । यथा बालो गृहादिप्रतिबिम्बे सत्यपि स्वप्रतिबिम्बे रमते, तथा भगवानपि लक्ष्मीसमक्षमपि तत्तद्योग्यमेव रसमनुभावयन्ननुभवति चेत्यर्थः । प्रथमपक्षे प्रतिबिम्बाश्रया एताः । अस्मिन्

---

१७. जेम बालक दर्पण वगेरे पोतानी सामे मुकीने तेमां पोताने जोईने तेनी साथे रमेछे, तेम लक्ष्मीपति भगवाने पोतानुं स्वरूप श्रीव्रजसुंदरीओमां स्थापीने, ब्रह्मानन्द प्रकट करीने, आलिङ्गन, कर-स्पर्श, स्नेहयुक्त कटाक्ष, उद्दाम विलास ( अमर्याद भोग ), मनोरथो पूर्ण थवाथी उद्भवता हास्य वगेरेथी व्रजसुंदरीओसाथे रमण कर्युं.

कृतवानित्यर्थः । (यद्वा । कदाचित्प्रकारसाम्येऽपि नैतद्रसानुभवो लक्ष्म्यां भवितुमर्हति, किन्त्वेतास्वेवेति ज्ञापयति पदद्वयेन, रमेशो व्रजसुन्दरीभिरिति । रमाया ईशः स्वामी भर्तेति यावत् । एतास्तु व्रजसम्बन्धिन्योऽन्यसम्बन्धिन्यः सुन्दर्यो, न तु विवाहिता इति । रमारमणदशायां एतादृग्रसानुभवो नोभयोरपि सम्भवति । रसस्वरूपस्यैव तादृशत्वादिति भावः । नन्वीश्वरे नेदमुचितमित्यत आह यथार्भक इति । 'सम्मुष्णन् नवनीतमन्तिकमणिस्तम्भे स्वबिम्बोद्गमं दृष्ट्वे'त्यादिवाक्यनिरूपितमुग्धलीला वान्यथा निरूप्यते । पूर्णज्ञानोऽपि तद्रसस्वरूपस्य तथात्वात् । तथेहापि 'रसो वै स' इति श्रुतेरिदं सर्वं रसमध्यपातित्वेन स्वरूपात्मकमेवेति तदुच्यत इति नानुपपत्तिः काचित् । शङ्काया एवानुदयादिति भावः ।) एतेन यथा प्रभुस्तद्भावो वा, तथैता एतद्भावोपीति ज्ञापितं भवति । तथा प्रतिबिम्बस्वभावात् । अत्र रमणं बहूनामप्येकदा भवति द्वयोश्च । अग्रे तु प्रत्येकपर्यवसानं वक्ष्यति ॥ १७ ॥

एवं सर्वभावेन भगवद्धर्मावेशे तासां देहादिविस्मरणपूर्वकं महारसाभिनिवेशमाह तदङ्गेति ।

**तदङ्गसङ्गप्रमदाकुलेन्द्रियाः केशान् दुकूलं कुचपट्टिकां वा ।**
**नाञ्जः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह ॥१८॥**

तस्य भगवतः अङ्गसङ्गेन यः प्रकृष्टो मदः देहादिविस्मारको भाव उत्पन्नः । तेन आकुलानीन्द्रियाणि यासाम् । सर्वा इतिकर्तव्यतामूढा जाताः । ततः केशपाशं परिहितदुकूलं कुचपट्टिकां वा स्वयमञ्जसा सामस्त्येन प्रति सम्मुखतया विशेषेण वोढुमलं न जाताः । पुनरल्पेनैव तथाविधा जाता इत्यत्र हेतुमाह व्रजस्त्रिय इति । श्रमोऽपि

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख. ।

पक्षे वक्ष्यमाणपक्षे च प्रतिबिम्बरूपा इत्याशयेनाहुः एतेन यथा प्रभुरिति । स्वसामर्थ्यादियोजनप्रकारो नानयोः पक्षयोरिति ज्ञेयम् । अत्र रमणमिति । बहूनां प्रमदाजनानामित्यर्थः । रमारमणसमाधानेन यत्र तत्राप्येवम्, तत्रैतासां बहुत्वे किमाश्चर्यमिति भावः । नृत्यं प्रत्येकमुक्तम्, रमणं समुदायेन । अग्रे तु रमणमपि प्रत्येकं वक्ष्यतीत्यर्थः ।

तदङ्गेत्यस्याभासे । भगवद्धर्मावेश इति । स्वरूपानन्दस्य ऐश्वर्यादिधर्माणां चावेश इत्यर्थः । भगवतो धर्माणां चावेश इति समासः । रसाभिनिवेशमिति । महारसाभिनिवेशनव्यापारजनितं फलमाहेत्यर्थः । व्याख्याने । विशेषेण वोढुमिति । विवोढुम् । वोढुमिति वकारस्य छान्दसो लोपस्ततो यण् । व्योढुम् । पुनरल्पेनैवेति । 'गायन्त्यस्तं विजह्रिरे' इत्यत्र नृत्यादिविरामकथनेन तत्स्वभावप्राप्तमाकुलेन्द्रियत्वादिकमप्युक्तमेव ।

१८. हे कुरुश्रेष्ठ! भगवानना अङ्गसगथी श्रीस्वामिनीजीओने देहादि विस्मरण करावे एवो पद (भाव) उत्पन्न थयो. तेथी तेमनी इन्द्रियो व्याकुल थई गई. तेथी केश, के परेलुं वस्त्र, के कुचपट्टिकाओ बराबर स्थानपर स्थिर राखी शक्या नहि, अने श्रमथी माला तथा आभरण सरी गयां.

१ मद्रेत्यारभ्य—श्लोकान्त व्याख्यानं प्रभूणामिति प्रतिभाति ।

जात इत्याह विस्रस्तमालाभरणा इति । आकुलेन्द्रियत्वान्न विचारो लौकिकः । गोपिकात्वान्न पारमार्थिकः । श्रमान्न दैहिकः । अत आद्यन्तमध्येषु तासु युक्ता भगवतैव धृताः, न-ताभिरित्यर्थः । यद्यप्यन्यप्रतीत्या भ्रियमाणा इव, तथापि न स्वतो धारणम् । कुरूद्वहेति सम्बोधनमभ्रमाय विश्वासार्थं च ॥ १८ ॥

एवं समुदायलीलां निरूप्य तस्याः परिज्ञानं केषामपि न जातमिति वक्तुं देवस्त्रीणां चन्द्रस्य च विस्मयमाह कृष्णेति ।

**कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः ।**
**कामार्दिताः शशाङ्कश्च सगणो विस्मितोऽभवत् ॥ १९ ॥**

नहि कस्याश्चित् पतिः परमानन्दो भवति । नहि निरानन्देनानन्दो दातुं शक्यते । 'एष ह्येवानन्दयाती'ति श्रुतेः । एवकारेणेतरनिषेधश्च । तत्रापि विशेषेण क्रीडा । नहि जीवो विशेषक्रीडां जानाति । खेचराणां स्त्रिय इति तासां सर्वदर्शनार्थं भगवद्दत्तो वरो निरूपितः । स्त्रीणां च दर्शनं न दोषाय । तासां मोह एवोत्पन्नः । न तु परिज्ञानम् । रसो वा । लौकिकोऽपि चन्द्रो दृष्टवान् । सोमात्मकत्वात् देहस्य । 'सोमः प्रथम'इति श्रुतेश्च ।

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कर्णोत्पलालकेत्यनेन पुनर्भावोद्बोधे 'एव'मिति श्लोकेन विहार उक्तः । अत्राल्पेनैव विहारेण पुनराकुलेन्द्रियत्वादिकं जातं तत्र व्रजस्त्रीत्वेन विशुद्धभावभावत्त्वं हेतुरित्यर्थः । लौकिक इति । आदिविचारो लौकिकः, परिधानीयाभावे लोकेऽप्यपासंभवात् । अन्तविचारः पारमार्थिकः, केशविश्लेषे परमार्थे दोषसम्भवात् । मध्यविचारो दैहिकः । कुचपट्टिकाभावेऽवयवयोरन्यथाभावात् । अत्र हेतवः क्रमेण । इन्द्रियाणां रसोन्मुखत्वात् । गोपिकात्वेन प्रमेयमार्गीयत्वात् । श्रमाच्चेति । गोपिकात्वादिति । व्रजस्त्रिय इत्यस्यैवार्थोऽयम् । इदमेयोपसंहारव्याजेनाहुः आद्यन्तमध्येष्विति ।

कृष्णेत्यस्याभासे । केषामपीति । गन्धर्वादीनां तु दर्शनमेव न । स्त्रीणां चन्द्रस्य च विस्मयः । अतः केषामपि न जातमित्यर्थः । व्याख्याने । निरानन्देनेति । निर्गत आनन्द आनन्दत्वं यस्मात्तादृशेन । सच्चिदानन्दानां सत्ताज्ञानानन्दा धर्मा इत्यानन्दस्यानन्दस्वरूपत्वादानन्दपदमेवोक्तम् । तथा चानन्दव्यतिरिक्तेनेत्यर्थः । आनन्दस्यैवानन्ददातृत्वे प्रमाणमाहुः एष ह्येवेति । आनन्द एवेत्यर्थः । तत्रापीति । क्रीडायामपीत्यर्थः । वीक्ष्येति गौणक्रियां विवृण्वन्ति चन्द्रो दृष्टवानिति । दोषाभावार्थमाहुः सोमात्मकत्वादिति । अलौकिकचन्द्रस्य भगवद्भावात्मकत्वमिव, एतस्य स्वामिनीभावात्मकत्वम् । अतः स्वामिनीदेहस्य सोम आत्मनियतस्य तादृशत्वम् । अत एतस्याध्यात्मिकरूपेण देह एव विद्यमानत्वात्तद्दर्शने न दोष इति भावः । 'लोकवत्तु लीला कैवल्य'मितिन्यायानुसारार्थमाहुः सोम इति । 'सोमः प्रथमो विविदे' इति श्रुतेस्तस्य पूर्वमपि भोक्तृत्वाददोष

१९. श्रीकृष्णनी विशेष क्रीडा जोईने आकाशगामि देवताओनी स्त्रीओ कामथी पीडित थई मोह पामी. अने नक्षत्रसहित शशी पण विस्मित थयो. १. श्रमाच्चेति टीकापाठः ।

साधारण्यश्च स्त्रियः । तथापि तस्य दर्शनं तस्यैव हितकारि न भवतीति निरूपयितुमाह शशाङ्क इति । स हि कलङ्की । आनन्दमयोऽपि । सगणो नक्षत्रसहितः । तेनोद्दीपनेऽपि न तस्यान्यासु चित्तसम्भवः । चकारात् सोऽपि मुमुहे । यथा पुनरेताः मोहनानन्तरं पुनःपुनर्दर्शने उद्बुद्धकामा जाताः । गत्वास्माभिरपि कामरूपतया क्रीडा कर्तव्येति कामार्दिता जाताः । तथा चन्द्रोऽपि भगवति निवेशनार्थं यत्नं कृतवान् । अतः कामार्दितो जातः । अनेनाग्रे निसर्गात् सुखमिति पक्षे उपपत्तिरुक्ता । अस्यैव चन्द्रस्य अंशास्ततो निवर्तिष्यन्त इति । अन्यथा 'सहस्रदर्शनान्मुक्ति'रित्येतत्सूत्रं विरुध्येत । सहस्रवणाभावात् । किञ्च, सगणः स्वस्त्रीसहितोऽपि विस्मितो जातः । विस्मयरस एवोत्पन्नः, नान्यो रस इति ॥ १९ ॥

एवमाधिभौतिकानामाधिदैविकस्य च भगवदुत्पादितरसाभिनिवेशमुक्त्वा 'नन्दगोपसुतं देवि पतिं मे कुर्वि'ति प्रत्येकप्रार्थनया व्रतं कृतमिति प्रत्येकं रेम इत्याह कृत्वेति ।

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

इत्यर्थः । एतस्य स्वामिनीभावरूपत्वाददोषः । साधारण्यश्चेति । खेचरस्त्रियोपि दृष्टवत्य इत्यर्थः । तथापीति । दर्शनेपीत्यर्थः । तस्यैवेति । भगवतो दोषाभावेपि तस्यैव तथेत्येवकारः । तस्य हितं स्वामिनीप्राधान्येन रमणम्, तदधुनाऽलौकिकप्रकारकरमणेन सम्पन्नम् । आतिदेशिकलौकिकरमणे तु नायिकाचरणप्रणिपातादिकं वक्ष्यत्येवेति भावः । स हि कलङ्कीति । 'आनन्दादयः प्रधानस्ये'तिन्यायेन भगवतः सकाशादानन्दमभिकाङ्क्षते स्वामिनीभावरूपत्वात् । न तु स्वत एव पूर्ण इत्यर्थः । अतः पूर्वोक्तस्वहिताकाङ्क्षा स्थितैवेति भावः । आनन्दमयोपीति । दृष्टवानिति शेषः । लौकिकं चन्द्रमाहुः सगण इति । चकारात् सोपीति । लौकिक इत्यर्थः । खेचरस्त्रीषु लौकिकचन्द्रे च कामार्दितपदार्थस्तुल्य एवेत्याहुः यथेति । चन्द्रस्य तद्भावरूपत्वात् तासामिवाभिलाप उचित इति भावः । अलौकिकचन्द्रे कामार्दितत्वं भिन्नमाहुः भगवतीति । पूर्वोक्तयोर्भगवद्विषयककामार्दितत्वम् । एतस्य कामिनीविषयककामार्दितत्वमिति भेदः । उपपत्तिरिति । निसर्गे चन्द्रांशनिवर्तनरूपोपपत्तिरित्यर्थः । अन्यथेति । निसर्गाभावे इत्यर्थः । आधिभौतिकानामिति । स्वामिनीदेहाधिष्ठितानां चन्द्रात्मकभावानामित्यर्थः । आधिदैविकस्येति । अलौकिकचन्द्रस्य भगवद्भावरूपस्येत्यर्थः । भगवदुत्पादितेति । भगवतोत्पादितो यः कामरसः, तत्राभिनिवेशस्तदर्दितत्वमित्यर्थः । तथा चोभयोरुदितभावत्वमग्रिमश्लोकोक्तरमणे हेतुरिति भावः ।

---

१. स्त्रीणां पद्मिन्यादिषोडशभेदाः, तेनैकस्याः सहस्रप्रकारेण भगवान् भोगं करोति । तस्मात् षोडशसहस्रसंख्याकानि सर्वाणि यूथानि । सहस्रभगदर्शनान्मुक्तिरित्युक्तेः ।

**कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः ।**
**रेमे स भगवाँस्ताभिरात्मारामोऽपि लीलया ॥ २० ॥**

गोपजातीया योषितो यावत्यस्तावन्तमात्मानं कृत्वा तत्र तत्र मायोद्घाटनेन तथा तथा प्रकटो भवति । एतन्महासौरतम् । एवं करणे सामर्थ्यम्, यतः स भगवानिति । स इति तदर्थमेवावतीर्णः । अत्र तासां व्रतार्थं ताभिः सहैव रेमे । न त्वात्मारामता पूर्ववत् । इममर्थमाह आत्मारामोऽपीति । न त्वात्माराम एव चन्द्रप्रवेशाद् रमणं सम्भवति । अस्यामपि दशायामात्मारामत्वमेव । 'अधिकं तत्रानुप्रविष्टं न तु तद्धानि'रिति । तत्रापि आत्मरमण एव मुख्यतेत्याह लीलयेति । यथा महानपि लीलया विसदृशं करोति । स्वयं पदातिरिव मृगयायां गच्छति । यथा अन्या अपि अवतारलीलाः, तथैतामपि कृतवानित्यर्थः ॥ २० ॥

ततस्तासां सुरतान्तो जात इत्याह तासामिति ।

**तासामतिविहारेण श्रान्तानां वदनानि सः ।**
**प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना ॥ २१ ॥**

अतिविहारेणानेकबन्धैः सम्यक् श्रान्ता जाताः । ततोऽग्रिमलीलार्थं तासां वदनानि स्वहस्तेन प्रामृजत् । यतः स कृष्णः । तदर्थमेवावतीर्णः । सर्वत्रैव तथाविधं जातमिति ज्ञापयितुं बहुवचनम् । तथा करणे हेतुः करुण इति । करुणायुक्तः । सा करुणा उदासीना न भवतीत्याह प्रेम्णेति । मार्जने क्लेश एव निवर्तेत इति ज्ञापयितुं शन्तमेनेत्युक्तम् । अङ्गेति सम्बोधनमप्रतारणाय । एवं तासां दुःखनिवारणपूर्वकं परमानन्दं स्थापितवान् ॥ २१ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कृत्वेत्यत्र । कुमारिकासु गोपसम्बन्धि योषित्त्वं नास्तीत्यत आहुः गोपजातीया इति । तथा च गोपरूपा योषित इत्यर्थः । ताभिः सहैवेति । पूर्वाध्याये तु गोपीरेवारमयत्; स्वयं त्वात्माराम एवेत्युक्तम् । अत्र ताभिः सहैव, न तु भिन्नस्थितेत्येवकारः । अधुना स्वप्राधान्येन स्वेच्छया रमणे हेतुमाहुः चन्द्रप्रवेशादिति ।

तासामित्यत्र । क्लेश एवेति । लोके मार्जनेन क्लेश एव निवर्तते, न त्वविक्रसुखप्राप्तिरिति हेतोरत्र द्वयं स्थापयितुं शन्तमपदमित्यर्थः । इदमत्रोपसंहारव्याजेनाहुः एवमिति ।

---

१०. जेटली व्रजकुमारिकाओ हती तेटला पोताना स्वरूप मायानुं उद्घाटन करी प्रकट कर्यां, अने जो के पोते आत्माराम हता तोपण भगवाने लीलाथी तेमनी साथे रमण कर्युं, कारणके पोते तदर्थेज अवतर्यां हता.

११. हे अंग, अति विहारथी अनेक बंधथी श्रान्त थयेला व्रजांगनाओनां वदन दयाळु श्रीकृष्णे प्रेमथी दुःख हरनार स्वहस्तथी लूछ्यां.

ततोऽतिमुदितानां कृत्यमाह गोप्य इति ।

**गोप्यः स्फुरत्पुरटकुण्डलकुन्तलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन ।**
**मानं दधत्य ऋषभस्य जगुः कृतानि पुण्यानि तत्कररुहस्पर्शप्रमोदाः ॥२२॥**

गोप्यो मानं दधत्यः तत्कृतानि जगुः । गाने हि रजोगुणाभिनिवेशो हेतुः । तदर्थं सहजमेकं भगवत्कृतं च हेतुद्वयमाह । तत्र प्रथमं सहजं निरूपयति । स्फुरद्यत् पुरटं सुवर्णं दाहोत्तीर्णमुज्ज्वलीकृतं च, तस्य ये कुण्डले कुन्तलाश्च, तेषां त्विषा सहिता या गण्डश्रीः । उज्ज्वला गण्डश्रीः पीता वा । उज्ज्वला नीला चेतरे । एवं कान्तित्रयं मूलभूतगुणकार्यरूपम् । तेनासां सर्वोत्कर्षयोग्यता । सुधितं सुधामिव प्राप्तं यद्धासपूर्वकं निरीक्षणम् । अत्राप्यन्तःस्थितो रागः निरीक्षणं हासश्चेति त्रितयमुक्तम् । भगवदीयमेतत् । अत उभाभ्यां सन्माननमभिमानं वा दधत्यः स्वहृदयकृतविपरीतबुद्ध्या जातदोषनिराकरणार्थं तत्कृतानि जगुः । तेषां न केवलं पापनिवर्तकत्वम्, किन्तु पुण्यरूपत्वमपीत्याह पुण्यानीति । भगवता कृतानि पापनिवर्तकानि पुण्यजनकानि च । अतस्तासां दोषाभावः । अग्रिमलीलायां पुण्योपचयश्चोक्तः । पूर्वक्लेशविस्मरणार्थमानन्दाविर्भावमाह । तस्य भगवतः कररुहा नखाः, तेषां स्पर्शेन जातपीडया स्मृतसम्भोगाः प्रमुदिताः जाताः । अन्तःपूर्णानन्दा गानेनापि जाता इति अन्ते विशेषणम् ॥ २२ ॥

ततस्ताभिस्तुल्याभिर्भगवान् जलक्रीडां कृतवानित्याह ताभिर्युत इति ।

**ताभिर्युतः श्रममपोहितुमङ्गसङ्गघृष्टस्रजः स्वकुचकुङ्कुमरञ्जितायाः ।**
**गन्धर्वपालिभिरनुद्रुत आविशद्वाः श्रान्तो गजीभिरिभराडिव भिन्नसेतुः ॥**

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

गोप्य इत्यत्र । सहजमेकमिति । एकं सहजमेकं भगवत्कृतमेवं हेतुद्वयमित्यर्थः । उज्ज्वला नीला चेतर इति । कुण्डलश्रीरुज्ज्वला । तत्र हीरकादिकान्त्येति भावः । कुन्तलश्रीर्नीलेत्यर्थः । कान्तीनां भगवच्चातुर्यैककार्यत्वमुपपादयन्ति तेनासामिति । आसां कान्तीनाम् । सर्वोत्कर्षे मानसम्पादने योग्यता मानधारणहेतुत्वमित्यर्थः । विपरीतबुद्ध्येति । सर्वत आधिक्यज्ञानेन जातमाननिवृत्त्यर्थमित्यर्थः । पापनिवर्तकत्वमिति । अभिमाननिवर्तकत्वमित्यर्थः । मूले पुण्यानि पुण्यजनकानीत्यर्थः । पूर्वक्लेशेति । शन्तमपदसूचितसुखजनने क्लेशनिवृत्तिरुक्ता, न तु विस्मरणम् । अनेनानन्देन विस्मृतिरुच्यते इत्यर्थः ।

२२. उज्ज्वल सुवर्णना कुण्डल अने कुंतलोनी छटाथी शोभित कपोलनी कान्तिथी अने भगवान्‌ना अमृतमय हास्यसहित निरीक्षणथी मान धारण करता श्रीगोपीजन भगवान्‌ना नखस्पर्शथी प्रमोद पामीने भगवान्‌ना पुण्यजनक कर्मोना गुणगान करवा लाग्या.

२३. जेम कोई श्रान्त गजराज सेतुओने तोडी पाडतो हाथणीओनी साथे श्रम दूर करवाने जलमां प्रवेश करे, तेम ते सर्व गोपीजननी साथे आत्मारामरूप पोतानी अने जीवनी मर्यादानो भंग करीने श्रान्त थयला भगवान् श्रम दूर करवाने अगोना संगथी घृष्ट थयली छे माळा जेमनी, अने उत्तम गंधर्वो अने भ्रमरो जेमनी पाछळ त्वराथी जता हता एवा भगवाने श्रीव्रजांगनाओना कुचकुंकुमथी रंगायलां जलमां प्रवेश कर्यो.

ताभिः सर्वाभिरेव युतः । महारात्रसमये यमुनायां जलक्रीडार्थं प्रविष्टः । तत्र प्रयोजनं श्रममपोहितुमिति । तासां सर्वाङ्गश्रमं जलक्रीडयैव दूरीकुर्वन् । भगवतस्ताभिः सह गमने जायमानां शोभां वर्णयति स्रजः गन्धर्वपालिभिरनुद्रुत इति । यमुनाया वा विशेषणानि । गन्धर्वाणां रक्षकाः गन्धर्वपाः गन्धर्वोत्तमाः । ते च ते अलयश्च तैरनुद्रुतः । सद्यः शीघ्रं गतः वाः आविशत् । आमोदस्य निवारणार्थं च तथाकरणम् । सम्भोगेन श्रमोदके पद्मिनीनां कमलरूपो गन्धो भवति । तदुपरोधेन च द्रुतपदविन्यास इत्यनुद्रवणम् । ते च भ्रमरा भगवदीया एवेत्याह । अङ्गयोः सङ्गेन घृष्टा या स्रक् तस्यास्ते । यस्यां वा स्रक् तादृशी । सा चासौ कुचकुङ्कुमरञ्जिता च । भगवत एव माला । कालिन्दी च कुचकुङ्कुमै रञ्जिता । तत्र देहामोदः पुष्पामोदः कुङ्कुमामोदश्चेति । स्वकीयत्वेनासाधारण्यं च । आधिदैविकास्ते भ्रमरास्तद्गन्धभोक्तार इति विशेषणं गन्धर्वपेति । श्रान्तः इभराडिवेति अविचारे हेतुः । श्रान्त इति विशेषणं लीलया गमनार्थम् । प्रत्येकसम्भोगावधि भगवतोऽन्यो भावो निरूपित इति तदपगमात् श्रमलीलाप्याविष्कृता । गजीभिरित्यन्यश्रमो निवारितः । सेतवो बध्यन्ते जलरक्षार्थम् । ते सर्वे भिन्नाः तादृशगजेन भवन्ति । भगवतापि ब्रह्ममर्यादा आत्मारामत्वरूपा जीवानां च मर्यादा तथा सति निवृत्ता । कामरूपस्पर्शात् परदाराणामभिमर्षणाच्च । पूर्वं तासां भगवत्स्पर्श एव स्थितः, न तु

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ताभिर्युत इत्यत्र । सर्वाङ्गश्रममिति । क्लेशनिवर्तनेपि क्वचित् क्वचित् स्थितं श्रमोदकं दूरीकुर्वन्, मार्जयन्निवार्थः । जलक्रीडयैवेति । न तु पूर्ववन्मार्जनेनेत्येवकारः । आमोदस्येति । सम्भोगसूचकस्य प्रातः स्थापयितुमशक्यत्वादिति भावः । चकाराच्छ्रमनिवृत्त्यर्थम् । तथाकरणं जलक्रीडाकरणमित्यर्थः । आमोदस्य भोगसूचकत्वमाहुः सम्भोगेनेति । तदुपरोधेन चेति । भ्रमरोपरोधेन चकारात् स्वामिन्युपरोधेनेत्यर्थः । स्वपदस्य भगवद्वाचकत्वात् षष्ठीसमासानुपपत्त्या कर्मधारयमाहुः स्वा चासाविति । तत्रेति । मालायामित्यर्थः । स्रज इत्यन्तस्य यमुनाविशेषणत्वपक्षेप्यलीनां मालासम्बन्धित्वबोधनाय गन्धर्वपेति विशेषणमित्याहुः आधिदैविकास्ते इति । आधिदैविका अन्तरङ्गलीलास्थास्तद्गन्धभोक्तारः सम्भोगजनितवनमालादिव्यगन्धभोक्तार इत्यर्थः । गन्धर्वपा गायकश्रेष्ठा अन्तरङ्गलीलासमयेपि स्थित्वा गानं कर्तुं योग्या इत्यर्थः । अन्यो भाव इति । उपरिचन्द्रस्थापनरूपो भाव इत्यर्थः । तदपगमात् । चन्द्रांशनिवर्तनादित्यर्थः । कामरूपस्पर्शादिति । कामात्मकं पुरुषोत्तमस्वरूपं 'अत्रैव लोके प्रकट'मिति कारिकोक्तः कामस्तेन स्पर्शस्तासां भोग इति यावत् । तेनात्मारामत्वं निवृत्तं परदारास्पर्शाजीवमर्यादा नम्रतया दास्यकरणरूपा निवृत्तेत्यर्थः । स्वीयानां तु तावानधिकारो दत्त एव भवतीति परेत्युक्तम् । वस्तुतः परत्वस्य दूषितत्वेपि रसार्थं परकीयात्वं स्थापयित्वैव लीलाकरणादिति भावः । ननु रमणं तु पूर्वमप्युक्तमेवेत्याशङ्क्य पूर्वाध्यायैतदध्यायरमणयोर्विशेषमाहुः पूर्वमिति ।

भगवता ताः स्पृष्टा इति। कामाभावात्। देशकालमर्यादा च भग्ना। अतो हस्तिश्रेष्ठ इव जलक्रीडार्थं जलदेवतां दूरीकृत्य, स्वयं तत्र प्रविष्ट इत्यर्थः॥ २३॥

तत्र जलक्रीडां च कृतवानित्याह स इति।

**सोऽम्भस्यलं युवतिभिः परिषिच्यमानः**
**प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग।**
**वैमानिकैः कुसुमवर्षिभिरीड्यमानो**
**रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः॥ २४॥**

स पूर्वोक्तः स्त्रीसहितः। अम्भसि अलं युवतिभिः परिषिच्यमानो जातः। ततः प्रेम्णा ईक्षितश्च। प्रहसतीभिः कौतुकाभिनिविष्टाभिः इतस्ततः सिच्यमानः, यदभिमुखमेव व्रजति, तयैव सह रेमे इति। एवं सर्वाभिः। यथा स्वयं माहात्म्यज्ञानपूर्वकं निर्भरस्नेहेन निर्दोषभावेन वदति शुकः, तथैव राजापि शृणोतीति ज्ञात्वा स्नेहेन स्वमध्यपातित्वं सूचयन् सम्बोधयति अङ्गेति। अत एव तुभ्यमिमां लीलां वदामीति भावः। ननु देवैः कथं न निषिध्यते, तत्राह कुसुमवर्षिभिर्वैमानिकैरीड्यमान इति। सर्वे देवा अभिनन्दनमेव कुर्वन्ति, न तु निवारणमिति। अन्यथा लोके कामरसो न व्यक्तो भवेदिति। युवत्य इत्यविचारे। परिषेके वीररसो मा भवत्विति प्रेम्णैव ईक्षितः। स्वयमिति पदेन बलात्कारेणापि तथेति सूच्यते। तदापि स्वस्मिन्नेव रतिर्यस्य। परं स्वीकृता गजेन्द्रलीला येन। यथायथा जलेनोक्षणम्, तथातथा सुखमिति गजदृष्टान्तः। महासौरतं च॥ २४॥

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

पूर्वाध्याये तत्कर्तृक एव भगवत्स्पर्शः। 'इति विक्लवित'मित्यस्य टिप्पण्यां 'सदयं रेमे' इत्यन्वये तदनुरोधेनैव रमणनिरूपणात्। तत्र हेतुः कामाभावादिति। कामो न विद्यते इति तत्र निरूपणात्। अध्यायकारिकायामत्र तु कामनिरूपणाद्भगवता यथेच्छं भोग इति विशेष इत्यर्थः। देशेति। तत्तदवयवे तथा तथा चुम्बनदंशादिना भोग इति रसानुभवदेशमर्यादा। प्रतिपदादिषु तथा तथा बन्धादिकं कर्तव्यमिति रूपा। 'यामिनी तुर्ययामे' इति रूपा च कालमर्यादेत्यर्थः। चकारात् पूर्वोक्ता ब्रह्ममर्यादापि। आविशदित्या-शयेनोऽर्थमाहुः जलदेवतां दूरीकृत्येति। क्रीडां चेति। प्रवेशमादाय चकारः।

स इत्यत्र। तृतीयचरणस्य प्रत्यक्षेण परोक्षेण चार्थद्वयं टिप्पण्यां विवृतम्। तत्र परोक्षवादे विशेष्यस्यैव बाह्यौ लक्षणा, न तु विशेषणयोः। अतो वैमानिकत्वं कुसुमवर्षित्वं च बाह्यौ नान्वेतव्यम्। यथा गभीरायां घोष इत्यत्र गभीरत्वं नदीत्वं च तीरे नास्ति तथेति ज्ञेयम्।

२४. हे अंग, व्रजयुवतिओ जलने विषे आपने सर्वत. अभिषेक करवा लागी, कौतुकथी अभिनिविष्ट हास करती व्रजयुवतिओ आपनुं प्रेमथी ईक्षण करवा लागी, कुसुमनी वृष्टि करता विमानमां स्थित देवो आपने अभिनन्दन करवा लाग्या, एवा आत्माराम अने पोताने विषेज जेमनी रति छे एवा भगवाने गजेन्द्रलीलानो स्वीकार करीने रमण कर्युं.

ततः पुष्पावचयक्रीडामाह तत इति ।

**ततश्च कृष्णोपवने जलस्थलप्रसूनगन्धानिलजुष्टदिक्तटे ।**

**चचार भृङ्गप्रमदागणावृतो यथा मदच्युद् द्विरदः करेणुभिः ॥२५॥**

जलक्रीडानन्तरं कृष्णायाः यमुनाया उपवने जलस्थलप्रसूनानां ये गन्धाः तत्सम्बन्धिना वायुना जुष्टाः दिक्तटाः सर्वदिग्भागा यस्मिन् वने तत्र पुनश्चचार । भृङ्गैः प्रमदागणैश्चावृतः । पुनर्भृङ्गाणां गमने हेतुं दृष्टान्तेनाह । यथा मदच्युत् मदस्रावी गण्डयोरन्यत्र च । द्विरदो हस्ती करेणुभिः सहितो भवति, भ्रमरैश्च सहितः । सहज एवान्तःस्थितो रस आविर्भूत इति भ्रमराणामनुद्रवणम् । चचारेति सर्वत्र नानाविधलीला निरूपिता । क्वचिल्लतानां भङ्गः, क्वचिद् वृक्षशाखानाम् । तथा मर्यादामार्गः लौकिकश्चान्यथाकृत इति । एषा त्रिविधा लीला अत्यलौकिकी । तत अविचारेण रमणमिति ॥२५॥

एवं लीलामुक्त्वोपसंहरति एवमिति ।

**एवं शशाङ्कांशुविराजिता निशाः ससत्यकामोऽनुरतावलागणः ।**

**सिषेव आत्मन्युपरुद्धसौरतः सर्वाः शरत्काव्यकथा रसाश्रयाः ॥२६॥**

शशाङ्कांशुभिः चन्द्रकिरणैः लौकिकैः या विराजिता निशाः तां एवं रेमे । पूर्वोक्तप्रकारस्तु सर्वदा लीलारूपः । स केनापि न विरुध्यते । नन्वेवं रमणे को हेतुरिति

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तत इत्यत्र । पुनरिति । जलक्रीडायां कुङ्कुमकस्तूरिकादिनिवर्तनात् पुनर्भ्रमराणां गमने हेतुर्वक्तव्य एवेति भावः । एषा त्रिविधेति । एषा कामलीला स्थलजलपुष्पावचयभेदेन त्रिविधात्यलौकिकी अलौकिकप्रकारिका । लौकिकप्रकारिकामग्रिमश्लोके काव्यकथापदेन वक्ष्यते इति भावः । तत इति ।

एवमित्यत्र । ता एवं रेमे इति । पूर्वमेकस्यां रात्रौ रमणमुक्तम् । अस्मिन् श्लोके सर्वास्वपि तदतिदिश्यते । एवं लौकिकीषु रात्रिषु अलौकिकीस्थापनादिप्रकारेण सर्वासु रेमे, कामलीलां कृतवानित्यर्थः । पूर्वोक्तेति । मूलेनान्तर्भावोद्बोधेनान्तररमणरूप इत्यर्थः । तत्र हि यो भावो यस्या अन्तःस्थापितः, सा तं भावं सर्वदानुभवति । अत एव ज्ञानात्मकताम्बूलवत्याः कार्यं भगवदसन्निधाने सर्वोपदेष्टृत्वं तत्रोक्तम् । केनापीति । गृहगमनादिनापीत्यर्थः । अत एव 'स्त्रीषु रेमे ह्यहर्निशं'मित्युक्तम् । तथा च तस्य दिवसेऽपि विद्यमानत्वात् तत्र नालौकिकीस्थापनादिप्रकार इति भावः । एवं रमणे इति । कामलीलया

२५. त्यार पछी जल अने स्थलना पुष्पोना सुगन्ध अने गन्धयुक्त वायुथी युक्त श्रीयमुनाजीना उपवनना सर्व दिग्भागवाला तट उपर आप भ्रमरोना प्रकार तथा प्रमदाओना यूथथी आवृत त्यां जेम मदस्रावी हस्ती हस्तिनीओ साथे खेले छे, तेम खेल्या.

२६. आ प्रकारे सत्य छे काम जेमनो एवा भगवान्, अने तेवाज सत्य कामवाला स्त्रीयूथ—जेमनी प्रभु उपर प्रीति छे. ते प्रभुए रति वीर्य पोतामांज स्थापी, चन्द्रमाना किरणोथी शोभित रसाधारभूत काव्यरूपामां वर्णित शरद् रात्रिओनुं सेवन कर्युं—रमण कर्युं. १ अत्र स्वतन्त्रटिप्पणी वेणुनादे मुद्रिता ।

२० श्रीसुबो०

चेत्, तत्राह ससत्यकाम इति । सत्यः कामो यासां ताः सत्यकामाः । ताभिः सहित इति ससत्यकामः । स इति तथा प्रार्थितो वा । एवमपि क्रीडायां कामः सत्य एव स्थितः, न तु क्षीणः, असद्विषयको वा जातः । अनुरता अबलागणा यस्य । सर्वथा रतासु नित्यसम्बद्धासु स्वविवाहितासु न कापि शङ्का, सर्वथा प्रपन्नासु च । अग्रे मर्यादाभङ्गो रसपोषाय । तदुक्तं 'शास्त्राणां विषयस्तावद् यावद् मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रम' इति । तथापि तासु सत्य एव कामः स्थापितः । यो मोक्षपर्यवसायी । स कामो भगवन्तं प्रापयिष्यत्येव । एवं निशाः सिषेवे । तदनन्तरमात्मन्येव उपरुद्धं सौरतं यस्य तथा जातः । न तु तासु रतिं स्थापितवान् । तथा सति तासु स्वस्मात् पुत्रा भवेयुः । सर्वा एव निशा एवं नीताः । शरदपि नीता । काव्यकथा अपि नीताः । काव्योक्तप्रकारेण गीतगोविन्दोक्तन्यायेनापि रतिं कृतवान् । तत्र हेतुः रसाश्रया इति । कामरसस्तेष्वेव प्रसिद्धः । यावत् पुरुषो रसे गौणभावं न प्राप्नोति, तावन्न रसिको भवतीति । शरद्वर्णनायां वा यत् काव्यम्, तत्र याः कथाः, तासां रसाश्रया इति । निशा एता न लोकप्रसिद्धाः, किन्तु काव्योक्ता एव । तत्र हि नियतिकृत्यादिराहित्यं ह्लादैकता अनन्याधीनता, तथा अन्येऽपि गुणाः । तथा भगवल्लीलारात्रयो जाता इत्यर्थः ॥ २६ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

रमणे इत्यर्थः । सत्यः काम इति । कुमारिकाणां 'पतिं मे कुरु'इति कामप्रकारकोऽभिलापः । श्रुतिरूपाणां 'कामिनीभावमासाद्ये'ति वाक्यात् तथाभिलापः । अन्तर्गृहगतानां तु स्पष्ट एव कामाभिलापः । अतस्त्रयाणामप्यभिलापस्य सत्यत्वात्तत्पूरणायैवं कृतवानित्यर्थः । स इतीति । अस्मिन् पक्षे सत्यकामपदं भगवद्वाचकम् । तद्विवृण्वन्ति एवमपीति । भगवद्धर्माणां नित्यत्वेन कामः क्षीणो न जात इत्यर्थः । असद्विषयक इति । भगवद्धर्माणां नित्यसत्त्वस्य व्यवस्थापितत्वेन विषयतोप्यसत्सम्बन्धाभावादिति भावः । ननु लोकदृष्ट्या परदारत्वस्य विद्यमानत्वादसद्विषयकत्वं शङ्क्यतैवेति शङ्कानिवारणार्थं विशेषणान्तरमित्याहुः अनुरता इति । गणानां पूर्वव्याख्यातरीत्या त्रिविधत्वम् । अतो बहुवचनम् । सर्वथेति । विशेषणत्रयेण क्रमेण श्रुतिरूपास्वन्तर्गृहगतासु कुमारिकासु चानुरतत्वं व्याख्यातम् । कुमारिकाणां लोकन्यायेन विवाहाभावेपि 'पतिं मे कुरु' इति प्रार्थनाद्वरसिद्धो विवाहः । अत एव स्वेत्युक्तम् । स्वेनैव न तु लोकसमक्षमिति भावः । एतादृशीषु मनोरथपूरणार्थरमणे दोषशङ्का नेत्यर्थः । प्रसङ्गात् साधारणमपि पक्षमाहुः सर्वथेति । इदमनुरतत्वं सर्वसाधारणमित्यर्थः । तर्हि तावद्रमणमेवोचितम्, न त्वमर्यादरमणमित्यत आहुः अग्रे इति । तथाऽकरणे रसपोषाभावात्तावदपि न सिध्येदिति भावः । तथापीति । एवममर्यादरमणे कृतेपीत्यर्थः । स्थापनप्रयोजनमाहुः मोक्षेति । न तु तासु रतिमिति । सहस्रत्वेपि चन्द्रांशान् स्वस्मिन्नेव स्थापितवान्, न तु तास्वित्यर्थः । यथा घृतस्य द्रवीभूतस्य तस्मिन्नेव पात्रे स्थितिस्तथेति ज्ञेयम् । स्वस्मादिति । यद्यपि तदुत्पादनमपि भगवत एव केनचित् प्रकारेण, तथाप्यधुना रतिस्थापने स्वस्मात् प्रकटस्वरूपा भवेयुरित्यर्थः । तत्रेति । गीतगोविन्दोक्तलौकिकप्रकारकरमण इत्यर्थः । तेष्वेवेति । काव्येष्वित्यर्थः ।

एवमेतां लीलां श्रुत्वा राज्ञः सन्देह उत्पन्नः । तन्निवारणार्थं शङ्कते संस्थापनायेति त्रिभिः ।

राजोवाच—**संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।**
**अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥ २७ ॥**

अवतारविरुद्धं लोकवेदविरुद्धं प्रमेयविरुद्धं चेति । तादृशकरणे अवश्यं हेतुर्वक्तव्यः । तदभावेऽपि लीलायाः सिद्धत्वात् । तत्र प्रथममवतारविरोधमाह । धर्मसंस्थापनाय भगवदवतारः । 'धर्मसंस्थापनाय चे'ति वाक्यात् । अधर्मनिवृत्तये च । तदुभयार्थमेव भगवदवतारः । दैत्यादिवधो भूभारहरणं च अधर्मनिवृत्तये । एतदर्थमेवावतारः, नान्यार्थमिति हिशब्द आह । भगवानिति तस्य साधनम्, अन्यथा पूर्णकामस्यावतारो न घटेतेति । लोकोपकारश्च एताभ्यामेव । अंशेन बलभद्रेण । अगत्य तथाकरणे हेतुः **जगदीश्वर** इति । स हि सर्वरक्षकः । अतः पालनार्थमेवं कृतवान् ॥ २७ ॥

किमतो यद्येवम्, एवमेतदित्याह स कथमिति ।

**स कथं धर्मसेतूनां कर्ता वक्ताभिरक्षिता ।**
**प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनम् ॥ २८ ॥**

धर्ममर्यादापालकानां निर्माता । स्वयं वक्ता च । उपघातेऽभिरक्षिता च । तादृशः प्रतीपं प्रतिकूलमाचरत् । धर्मो नष्टः, अधर्मः स्थापितः । अधर्मः कृतः उक्तः रक्षितश्च । अतः प्रतीपाचरणमयुक्तम् । तत्र हेतुर्वक्तव्य इति ब्रह्मन्निति सम्बोधनम् । ये पञ्चपदार्था उक्ताः, तेषां स्वरूपमेकत्रैवेति तन्निर्दिशति परदाराभिमर्शनमिति ॥ २८ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेख. ।

संस्थापनायेत्यस्याभासे । राज्ञः सन्देह इति । कस्यचिद्भ्रान्तस्य अस्यां लीलायां विपयत्वेनानौचित्यबुद्धिः स्यादिति शङ्कोत्पन्नेत्यर्थः । तन्निवारणार्थमिति । राज्ञः शङ्कायां शुकेन तत्समाहितावन्यस्य सा बुद्धिर्निवर्तिष्यते इत्यर्थः । व्याख्याने । तस्य साधनमिति । गुणा एव लीलायां साधनमित्यर्थः । अन्यथेति । धर्मस्थापनरूपप्रयोजनाभावे इत्यर्थः । मोक्षदानमपि प्रयोजनमित्यत आहुः लोकोपकारश्चेति । लोकानामुपकारो मोक्ष इत्यर्थः ।

स कथमित्यत्र । धर्मसेतुकर्तृत्वं विवृण्वन्ति धर्मेति । एतत्पालकानां मन्वादीनां निर्माता स्रष्टा । अतस्तद्द्वारा मर्यादां करोतीत्यर्थः ।

---

२७. धर्मनुं संस्थापन करवाने, अने अधर्मनी निवृत्तिनेमाटे भगवान् जगदीश्वर बलदेवनी सहित अवतर्या.

२८. हे ब्रह्मन्, धर्मनी मर्यादापालकोना निर्माता, अने स्वयं वक्ता अने सर्वप्रकारे रक्षण करनार एवा ए भगवाने परस्त्रीसङ्गरूपी ( धर्मनी मर्यादाने ) प्रतिकूल आचरण केम कर्युं ?

ननु कामात् करणमिति चेत्, तत्राह आप्तकाम इति ।

**आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितम् ।**
**किमभिप्राय एतं नः संशयं छिन्धि सुव्रत ॥ २९ ॥**

स्वत एवाप्ताः कामा येन । यदुपतिरिति विद्यमानायामपि कामनायामनेकस्त्रीप्राप्तिः । तादृशोऽपि भूत्वा जुगुप्सितं लोकनिन्दितं कृतवान् । तत्र करणे कोऽभिप्रायः । परस्परविरुद्धार्थत्वादुभयोर्ग्रहणं न सम्भवति । नैकतापि विरुद्धानाम् । विरुद्धसर्वधर्माश्रयत्वेऽपि प्रयोजनं वक्तव्यम् । नैतत् कर्म लोकहितम्, नापि स्वहितम् । स्वस्य पूर्णत्वात् । लोकस्य मर्यादैव हितकारिणी । तथा गोपिकानामपि । अन्तर्यामिणि ईश्वरस्य न किञ्चिदसाध्यम् । अत एवं सति किमभिप्राय एतत् कृतवान् । कः अभिप्रायो यस्येति । एतं नोऽस्माकं सर्वेषामेव संशयं छिन्धि । किञ्च, सुव्रत हे सदाचारलक्षणव्रतयुक्त । यदीदमसङ्गतमिव स्यात्, त्वया नोक्तं स्यात् । यदि वा अधर्मः स्यात्, तव रुचिर्न स्यात् । प्रतीयते च विपरीतम्, अतो निर्णयो वक्तव्य इत्यर्थः ॥ २९ ॥

प्रथमतः अवतारविरुद्धं कृतवानिति यदुक्तम्, तत्रोत्तरमाह धर्मव्यतिक्रम इति ।

श्रीशुक उवाच—**धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ।**
**तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ३० ॥**

किमेतदीश्वराणां चरित्रं न भवतीत्युच्यते । आहोस्विदन्यार्थमागतोऽन्यत् करोतीति । नहि किञ्चिद् घटनार्थमागतः किञ्चिन्न विघटयति । न ह्यन्यार्थमप्यागतः स्वधर्मं परित्यजति । प्रकाशनार्थमागतो दीपः गृहेण स्पृष्टश्चेत् दहत्येव । अत ईश्वरधर्मोऽयम् ।

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

आप्त काम इत्यत्र । नैकतापीति । एकाधिकरणत्वमित्यर्थः । तर्हि न कृतवानिति विपरीतनिश्चय एवास्त्विति शङ्कायामाहुः अन्तर्यामिण इति । असाध्यमपि नास्ति । तत्र दृष्टान्तार्थं विशेषणद्वयम् । यथान्तर्याम्यपि सन्नीश्वरो वहिरपि फलदाता, तथेदमपि विरुद्धमसाध्यं नास्ति । तथाप्यभिप्रायः क इत्यर्थः । राज्ञः पूर्वसन्देहाभावेप्यभिप्रायसंशयोस्त्येवेत्याशयेनाहुः सर्वेषामिति । किञ्चेति । पूर्वं तस्यासङ्गतत्वं साधितम् । सन्देहस्वरूपार्थं द्वितीयकोटेरपि समुच्चयोऽनेन क्रियत इत्यर्थः । जुगुप्सितत्वशङ्का अभिप्रायशङ्का चेति प्रश्नद्वयं सम्पन्नम् । आद्यान्येषाम् । द्वितीया स्वस्यापि । द्वितीयशङ्कासमाधान'मनुग्रहाय भक्ताना'मित्यनेन करिष्यते ।

धर्मव्यतिक्रम इत्यत्र । दहत्येवेति । स्वरूपं योजयति, स्वसदृशं करोतीत्यर्थः ।

---

२९. भगवान् आप्तकाम छे, अने यदुपति छे, एटले ( कामना होय तो पण अनेक स्त्री जेमने प्राप्य छे ), तेमणे आ अभिप्रायथी आवुं निन्दित कर्म कर्युं? हे सुव्रत, हमारो आ संशय छेदो.

३०. श्रीशुकदेवजी कहेछे–धर्मनुं उल्लंघन अने साहस ए ऐश्वर्य धर्मवाळाओमां जोवामां आव्याछे. अति तेजस्विओमां ते अधर्म उत्पन्न करतां नथी, जेम अग्नि सर्वनो भोग करेछे तेम.

अन्यथा ईश्वर एव न भवेत् । नहि वणिजामिव प्रभोर्नियमोऽस्ति सर्वकर्मसु । ईश्वरधर्माश्चैते इति तान् गणयति धर्मव्यतिक्रमः साहसमित्यादयः । धर्मव्यतिक्रमो विद्यमानोल्लङ्घनम् । साहसमविद्यमानकरणम् । एतदुभयमीश्वरे दृष्टम् । 'नहि दृष्टे अनुपपन्नं नाम' । चकारादीश्वरसेवकानामपि, वीर्यादिमतां वा । एतदेव वा साहसम्, सहसा क्रियमाणत्वात् । नन्वेवं सति तत्कर्मफलं कथं न भवेदित्याशङ्क्याह तेजीयसामिति । अतितेजस्विनामेतन्नाधर्मजनकम् । विधिनिषेधवाक्यानां नियोज्यविषयत्वात् । यथा लोके, तथा वेदेऽपि । अतितेजस्विनां सर्वकर्मदहनसमर्थानां न दोषजनकं भवतीत्यत्र दृष्टान्तमाह वह्नेः सर्वभुज इति । नहि सर्वान् दहन् वह्निर्वधभाग् भवति । सर्वं भक्षयन् अभक्ष्यभक्षको वा । तथा सर्वं पिबन् सर्वत्र प्रविशन् सर्वसम्बद्धः तत्तत्कारी भवति । मिथ्याज्ञानसलिलावसिक्तायामेवात्मभूमौ कर्मबीजं धर्माधर्माङ्कुरतामारभते, न तु तत्त्वज्ञाननिदाघनिष्पीतसलिलतयोषरायाम् ॥ ३० ॥

ननु 'तेजीयसामपि ह्येतन्न सुश्लोक्य'मिति न्यायाद् 'यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय कल्पते' इति विरोधाच्च कथमेतत् कर्तुं शक्यत इति चेत्, तत्राह नैतत् समाचरेदिति ।

**नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः ।**
**विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम् ॥ ३१ ॥**

एतदीश्वरकृतमनीश्वरो न समाचरेत् । ऐश्वर्यसमानाधिकरणमेवैतत् नानिष्टं करोति । अतः जातु कदाचिदपि औत्सुक्यादपि न समाचरेत् । किं बहुना मनसापि । ऐश्वर्यतुल्यमेव तेषां तत्कर्म । यथैश्वर्यकामनायामपि अनीश्वरो वधमर्हति । यथा महाराज्यानधिकारी तदिच्छां कुर्वन् । अतो मनसापि न समाचरेत् । विपरीते बाधकमाह विनश्यतीति । मौढ्यादैश्वर्यसहभावं तस्य कर्मणः अज्ञात्वा केवलं तत् कर्म आचरन् तेनैव कर्मणा नष्टो भवति । नन्वेकमेव कर्म कथं धर्मान्तरसहितं न नाशकम्, इतरथा नाशकमिति चेत्, तत्राह । अरुद्रः रुद्रव्यतिरिक्तः रुद्रसमानपराक्रमरहितः अब्धिजं विषं कालकूटमाचरन् आसमन्ताद् भक्षयन् विनश्यति तथेत्यर्थः । निन्दितं कर्मापि कालकूटवन्नाशकम् । तदीश्वरस्यैव शोभाकरम्, येन नीलकण्ठो भवति । तथैव गोपीजनवल्लभ इति ॥ ३१ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तथा भगवानपि धर्मस्थापनार्थमागतस्तथाभावेन गृहीतश्चेत् स्वरूपानन्दं स्थापयत्येवेति दृष्टान्तसामञ्जस्यम् । वीर्यादिमतामिति । ईश्वरपदेनैश्वर्ययुक्तमिति चकारेण वीर्यादीनां समुच्चयो युक्त इति भावः । पूर्वोक्तसाहसस्यात्र प्रसङ्गाभावात् पक्षान्तरमाहुः एतदेव वेति । तत्तत्कारी भवतीति । नहि भवतीति पूर्वेणान्वयः । आत्मभूमाविति । अन्तःकरणे इत्यर्थः । नैतदित्यत्र हिशब्दसूचितां युक्तिमाहुः ऐश्वर्यतुल्यमेवेति ।

---

३१. जे ईश्वर नथी तेणे मनथी पण ईश्वरना कर्मनुं अनुकरण करवुं नहि. जो मूढताथी तेवुं आचरण करे तो तेनो विनाश थाय, जेम रुद्रसमान पराक्रमविनानो समुद्रनुं विष-कालकूटनुं भक्षण करे तो नाश पामे तेम.

ननूक्तं 'यद्वृत्तमनुतिष्ठे'त्निति, तत्राह ईश्वराणामिति ।

**ईश्वराणां वचस्तथ्यं तथैवाचरितं क्वचित् ।**
**तेषां यत् स्ववचो युक्तं बुद्धिमाँस्तत् समाचरेत् ॥ ३२ ॥**

ईश्वराणां वच एव तथ्यम्, न त्वाचरितम् । क्वचिदाचरितमपि वचनानुगुणं चेत् । ईश्वराणां बहवो धर्माः । यथैश्वर्यम्, तथा धर्मात्मत्वम्, तथा दया । तत्रैश्वर्यज्ञानवैराग्यैर्यत् करोति, तत् स्वच्छन्दचरितमित्युच्यते । बुद्धिमान् तन्न समाचरेत् । ते ह्यन्यथा न वदन्ति । अन्यार्थं कथनमन्याधिकारेणेति । अतस्तद्विरुद्धं न कथयन्तीति ॥ ३२ ॥

ननु यथान्यस्मै न कथयन्ति, तथा स्वयमपि कुतो न कुर्वन्ति, तत्राह कुशलाचरितेनेति ।

**कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।**
**विपर्ययेण चानर्थो निरहङ्कारिणां प्रभो ॥ ३३ ॥**

एषामीश्वराणां कुशलाचरितेन अर्थः प्रयोजनं न विद्यते, ततोऽप्यनन्तफलस्य प्राप्तत्वादेव । विपर्ययेण अकुशलाचरितेन अनर्थोपि न विद्यते । ईश्वराणामेव निषिद्धकर्मणा अनिष्टाभाव इति न, किन्तु ज्ञानिनामपीति ज्ञानवैराग्ययोस्तुल्यं स्वरूपमाह निरहङ्कारिणामिति । अहङ्काररहितानाम् । न केनापि किमपि, कर्तृत्वाभिमानाभावात् । प्रभो इति सम्बोधनमीश्वरस्य लोकविलक्षणत्वज्ञापनार्थम् ॥ ३३ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ईश्वराणामित्यत्र । ईश्वराणां वच एवेति । वचसि तथ्यत्वं करणीयप्रतिपादकत्वम् । आचरिते तथ्यत्वं स्वसजातीयत्वेन ग्रहविषयत्वमिति ज्ञेयम् । तत्रैश्वर्येति । अग्रिमश्लोके 'एषा'मित्यनेनैश्वर्यं 'निरहङ्कारिणा'मित्यनेन ज्ञानवैराग्ये च विवरिष्यते इति भावः । वचसस्तथ्यत्वं व्युत्पादयन्ति ते ह्यन्यथेति । 'कुशलाचरितेने'त्यत्र चरणत्रयेणेश्वराणामिष्टानिष्टसम्बन्धाभावं प्रतिज्ञाय निरहङ्कारिणामित्यारभ्य 'किमुते'ति श्लोकेन कैमुत्येन तदेव साधितमित्याशयेनाहुः ईश्वराणामेवेति । अत्र कैमुत्येन दृष्टान्तसाधका अन्येपि सन्तीत्यर्थः ।

---

३२. ऐश्वर्य युक्त पुरुषोनुं वचन ( सदा ) सत्य होय छे, तेमज क्वचित् आचरण पण होय छे. ( ईश्वरोना घणा धर्म होय छे, जेम ऐश्वर्य, तेमज धर्म, तेमज दया. तेमां ऐश्वर्य ज्ञान अने वैराग्यथी जे कर्म करे छे ते स्वच्छन्दचरित कहेवाय छे, तेनुं अनुकरण बुद्धिमाने करवुं नहि. पण तेओ अन्यथा वचन उच्चारता नथी. ) माटे तेमना वचनने योग्य जे कर्म होय तेनुं अनुकरण बुद्धिमाने करवुं.

३३. हे राजा, तेमने कर्तापणानुं अभिमान नहि होवाथी कुशल आचरण करवामां कांई अहीं स्वार्थ होतो नथी, तेमज अकुशल ( निषिद्ध ) कर्म करवाथी तेमने अनर्थ थतो नथी. १ शोकम्पम् ।

यत्र ज्ञानसहकृतमेव तत्कर्म नानिष्टजनकम्, किं वक्तव्यमैश्वर्यसहकृतमित्याह किमुतेति ।

**किमुताखिलसत्त्वानां तिर्यङ्मर्त्यदिवौकसाम् ।**
**ईशितुश्चेशितव्यानां कुशलाकुशलान्वयः ॥ ३४ ॥**

ईश्वरस्य सेवकमारणे सेवकानामन्यथाकरणे च न काचित् शङ्का भवति । यथैहिकी, तथा पारलौकिकी । नियामकाद्धि शङ्का । भगवतो न नियामकोऽन्योऽस्तीत्याह । अखिलसत्त्वानां सर्वजीवानाम् । तिर्यङ्मर्त्यदिवौकसां गुणत्रयकार्याणां जीवजडानामप्राकृतप्राकृतानां वा सर्वेषामेव ईशितुः प्रभोः कृष्णस्य । चकारादात्मनश्च । ईशितव्यानां सेवकानां सम्बन्धी । तत्कृतगुणदोषाभ्यां कुशलाकुशलयोरन्वयः कुतः । नहि दासीभिः स्वात्मभूताभिः सम्बन्धे अनियम्यस्य ऐहिके पारलौकिके वा कश्चनापकारः सम्भवति । अन्तरङ्गैरेव तथा ज्ञायत इति न सुश्लोक्यतानिवृत्तिः ॥ ३४ ॥

नापि कर्ममार्गविचारेण कर्मप्राधान्यपक्षेऽपि दोषः शङ्कनीयः । यथा 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्' 'ब्रह्म वा इदमग्र आसीत्' 'स आत्मानमेवावैत्' इत्यादिश्रुतिषु यथा ज्ञानकर्मभ्यामुत्कर्षः, एवमपकृष्टज्ञानकर्मभ्यामपकर्षोऽपि सम्भाव्यत इति, तत्राह यत्पादेति ।

**यत्पादपङ्कजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः ।**
**स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयात्तवपुषः कुत एव बन्धः ॥**

नहि सर्वेषामेव जीवानां समानकर्मणा समानं फलमुपलभ्यते । अन्यथा शास्त्रवै-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

किमुतेत्यत्र । गुणत्रयेति । तिर्यगादीनां क्रमेण तमोरजःसत्त्वरूपत्वादिति भावः । तथा चावस्य द्वितीयं विशेषणम् । उभयोर्भिन्नत्वेन व्याख्यानमाहुः जीवेति । अखिलसत्त्वानामित्यनेन जीवाः । तिर्यगादीनां देहत्वेन जडा उक्ताः । पूर्वेणाप्राकृता द्वितीयेन प्राकृता इति वेत्यर्थः । ईशितव्यानामित्यस्य चतुर्थचरणेनान्वय इत्याहुः सेवकानां सम्बन्धीति । सम्बन्धं विवृण्वन्ति तत्कृतेति। सेवकसम्बन्धकृतगुणदोषाभ्यां कुशलाकुशलान्वय इष्टानिष्टसम्बन्ध इत्यर्थः । नहीति । ईशितृत्वाद्दासीभिः । चकारसूचितात्मत्वात् स्वात्मभूताभिः । ईशितृत्वादैहिकेऽनियम्यस्य । आत्मत्वेन ब्रह्मत्वात् पारलौकिकेऽनियम्यस्येत्यर्थः । ईशितव्यसम्बन्धादन्तरङ्गैरेवेत्युक्तम्। श्रुतिष्विति। आद्यश्रुतौ कर्मणोत्कर्षः, द्वितीयश्रुतौ ज्ञानेनोत्कर्ष उक्तः। तन्न्यायेनापकर्षोपि शङ्कनीय इति शेषः। इदमेव विवृण्वन्ति यथाज्ञानेति । यत्पादेत्यत्र । अन्यथा शास्त्रेति । ज्ञानादिशास्त्रस्येत्यर्थः । तृप्तिपदार्थमाहुः

---

आप्रमाणे ज्यारे ज्ञानथी करेलुं कर्म अनिष्टजनक थतुं नथी, तो सर्वजीवो, पशुपक्षी, मनुष्य अने देवताओना ईश्वर कृष्णना निजसेवको साथे पोते ऐश्वर्यथी करेला कर्मोथी कुशल अने अकुशलनो संबंध केम थाय ?

३५ जे भगवाननूना चरणकमलना परागभूत सेवकोनी सेवाथी तृप्त थया छे, योगना प्रभावरूप विभूतियोथी जेमनां कर्मनां बंधन छुटीगयाछे, जेओ मुनिओ छे, ते सर्वे ( भक्तिमार्गीओ, कर्ममार्गीओ, ) बंधन नहि पामता स्वैर आचरण करेछे, तो स्वेच्छाथी भोगार्थ तनुओ धारण करनार भगवान्ने बंध क्यांथी थाय ?

फल्यापत्तिः । उत्कृष्टकर्मादौ प्रवृत्तो नापकृष्टकर्मणा कादाचित्केन अपकृष्टो भवति । तत्र मार्गत्रयम् । त्रिष्वपि प्रवृत्तो नापकर्षं यातीत्याह । तत्र प्रथमं भक्तिमार्गे प्रवृत्तस्य, तत्र पुष्टस्य, न केनाप्यपकर्ष इत्याह । यस्य भगवतः पादपङ्कजस्य परागभूता ये सेवकाः तेषां निषेवो निषेवणं तेन तृप्ताः । भगवद्भक्तैः सह भगवद्गुणस्मरणेनैव विस्मारितदृष्टश्रुतसुखलेशाभासाः स्वैरं चरन्ति । न तेषां कर्मोत्कर्षापकर्षौ साधकबाधकौ । तथा कर्ममार्गेऽपीत्याह योगप्रभावेति । योगो हि महान् धर्मः । 'अयं हि परमो धर्म' इति स्मृतेः । तस्य प्रभावः अणिमाद्यैश्वर्यसम्पत्तिः । ज्ञानादयश्च । तेनैव विशेषेण धुताः । पूर्वकर्मजनिता अपि अखिलकर्मबन्धाः विशेषेण धुता भवन्ति । तेऽपि स्वैरं चरन्ति । ज्ञानमार्गेऽप्याह मुनयोऽपि स्वैरं चरन्तीति । सर्व एव न नह्यमानाः अबध्यमानाः । णह बन्धने । सर्वत्रैव असम्बध्यमानाः । यत्र भगवत्प्रवर्तितमार्गेष्वप्येषा व्यवस्था, तत्र भगवतः किं वक्तव्यमित्याह तस्येच्छयात्तवपुष इति । इच्छया भोगार्थं आत्तानि वपूंषि 'यावतीर्गोपयोषित' इति तावन्ति येन । तस्य कुत एव बन्धो भवेत् । यो हि तावद्रूपो भवति, कार्यं कृत्वा च तान्याच्छादयति, तस्य केन कर्मणा बन्धो भवेत् । कर्म हि प्रतिनियतं व्यवस्थितम् । तत्र यदि भिन्नो भिन्नो जीवः स्यात्, तदा तेन कर्मणा बन्धो वा भवेत् । आकाशवद् भगवद्रूपाणि प्रतिपदमन्यान्येव भवन्ति । यथान्नभेदेनाप्येकदेहव्यवहारः, एवं देशभेदेनापि भगवतः सर्वतः पाणिपादान्तस्य तावत्परिच्छेदेन प्रादुर्भाव इच्छयेति । स्वामिनीनां वा वपूंषि । अतः सर्वथा प्रमाणप्रमेयविचारेणापि न बन्धः सम्भवति ॥ ३५ ॥

ननु तथापि लोकमर्यादाया भग्नत्वात् 'यद्यदाचरति श्रेष्ठ' इति न्यायेन शब्दबलविचारेण बन्धो भवेत् । ते ह्यवधूतास्त्रयोऽपि, न ते व्यवहारनियामकाः । अतो विषमो दृष्टान्त इति चेत्, तत्राह गोपीनामिति ।

**गोपीनां तत्पतीनां च सर्वेषामपि देहिनाम् ।**
**योऽन्तश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक् ॥ ३६ ॥**

नहिं स्वस्पर्शः स्वस्य क्वापि निषिद्धः । परा चासौ स्त्री च परस्य च स्त्री । उभयमपि न भगवति । यतः भगवान् गोपीनां तत्पतीनां च आत्मा । बान्धवाः सर्वे लौकिकाश्च न मन्यन्त इति चेत्, तत्राह । सर्वेषामपि देहिनामयमात्मेति । यो भगवान् अन्तश्चरति । आसन्यो जीवो वा । सर्ववादिसिद्धान्तसङ्ग्रहाय सामान्यवचनं योऽन्तश्चरतीति । स एवायं भगवानध्यक्षः प्रत्यक्षः क्रीडनेन कृत्वा नटवत् पुरुषदेहं भजते । वस्तुतस्तु नायं पुमान्, न च स्त्री, नाप्यन्यः कश्चित् । 'न स्त्री न षण्ढो न पुमा'निति श्रुतेः । अतः केनापि विचारेण नास्य दोषसम्भवः ॥ ३६ ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तत्र पुष्टस्येति । योगस्य कर्मत्वं व्युत्पादयन्ति योगो हीति ।

---

३६. गोपीओ, तेमना पतिओ, तथा सर्व देहीओना जे अन्तर्यामी छे, तेज भगवान् क्रीडा करवाने पुरुषदेह धरेछे. ( वस्तुतः ए पुरुष नथी, स्त्री नथी, तेम अन्य पण नथी ).

हन्त चित्रमबलाः शृणुतेदं हारहास उरसि स्थिरविद्युत्।
नन्दसूनुरयमार्तजनानां नर्मदो यर्हि कूजितवेणुः ॥ ४ ॥
वृन्दशो व्रजवृपा मृगगावो वेणुवाद्यहृतचेतस आरात्।
दन्तदष्टकवला धृतकर्णा निद्रिता लिखितचित्रमिवासन् ॥ ५ ॥

हे अबलाः, इदमाश्चर्यं शृणुत । यर्हि नन्दसूनुः कूजितवेणुः, तर्हि वृपा गावो दन्तदष्टकवला निद्रिता आसन्निति सम्बन्धः । कामः पशुषु सजातीय एव, नोत्कृष्टे नापकृष्टे । अश्वतरे त्वन्यैव व्यवस्था । हीनेषु महतो रमणार्थं सम्बन्धोऽपि रसाभासजनकः । अतः सम्भोगलक्षणं कामं निराकृत्य पशुष्वत्यावश्यकं भक्ष्यं निरुणद्धि । पूर्वोक्तं वामबाहुकृतवामकपोलत्वमनुवर्तते । तत्रैवावान्तरभेदो वक्तव्यः । हन्तेति खेदे । यत्र गवामपि सर्वक्रियानिवृत्तिः, तत्रास्माकं न निवर्तते इति चित्रम् । पूर्वापेक्षयाप्युत्कृष्टम् । देवस्त्रियो हि पुरुषोत्तमे कामुक्यो भवन्त्येव । इदं त्वत्याश्चर्यमिति । अबला इति सम्बोधनं गत्वा दर्शनाभावाय । इदं मया प्रोच्यमानं शृणुत । अत्र गोपिका नवविधाः । गुणातीते प्रकारत्रयमिति । कर्मज्ञानभक्तिभिः । वक्तृव्यवस्थैषा । प्रथमा राजस्यः । इयं राजसराजसी । अपेक्षितं पूर्वं सर्वमेवानुवर्तते सर्वत्र । आदौ भगवतः स्वरूपं शृणुतेति । तं चतुर्धा वर्णयति । हारवत् हासो यस्य । उरसि स्थिरा विद्युद्

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

हन्तेत्यत्र । पशुष्विति । मनुष्याणामपि पशुत्वं श्रुतिसिद्धम् । देवानां तु मानुषीष्वपि प्रवृत्तिरिति भावः । अन्यैवेति । सर्गादावेव तथा सिद्धत्वात् सजातीयत्वमेवेत्यर्थः । एतेन तेषु भगवद्विपयकः कामो निषिद्धः । भगवति तद्विपयकं कामं निषेधन्ति हीनेष्विति । निराकृत्येति अविद्यमानत्वात्तमनुद्बोध्य वेणुनादो भक्ष्यं निरुणद्धीति । यथा पूर्वत्र सम्भोगरसानुभवो न जातः, तथात्र भक्षणरसानुभवो न जात इत्यर्थः । तत्रास्माकं न निवर्तत इति । क्रियोद्बोध एव जायत इति खेद इत्यर्थः । अत्रेति । आन्तररमणे इत्यर्थः । इहायमभिसन्धिः । बाह्यरमणे स्वरूपप्राधान्यम् । तच्च षड्गुणमिति तदेकनिष्ठत्वादेता अपि षड्गुणरूपा निरूपिताः । आन्तररमणे भावप्राधान्यम् । ते च सत्त्वादिदृष्टान्तैस्तावन्त इति तदेकनिष्ठत्वादेता अपि तथा निरूप्यन्त इति । प्रथमा इति । तिस्र इति शेषः । राजस्यः रजोभेदभिन्ना इत्यर्थः । इयमिति । तत्रेति शेषः । इयं शुद्धराजसीत्यर्थः । तथा च पूर्वोक्ता राजससात्त्विकी, अग्रिमा राजसतामसीति ज्ञेयम् । स्वरूपमिति । मया वर्णितमिति शेषः ।

४-५. हे अबलाओ! आ आश्चर्य श्रवण करो. ज्यारे नन्दना पुत्र, जेमनुं हास्य हारना जेवुं छे, जेमना वक्षःस्थलपर विद्युत् स्थिर छे, जे आर्त जनोने सर्वने सुख आपेछे, एवा वेणु वगाडे छे, त्यारे व्रजना वृषभो, मृगो अने गायो वेणुनादथी जेमना चित्त हरण थई गयाछे एवां थई जाय छे, दांतथी करडेला कवलो ( कोळीआ ) एमने एम रही जाय छे, कर्ण उंचा धरीने उभा रहेछे, नादथी सर्वतः व्याप्त थई निद्रित थई जायछे, चित्रमां आलेखेला होय एवा जड थई जायछे.

यस्य। नन्दस्य च सूनुः। आर्तजनानां सर्वेषामेव नर्मदः। तत्र हेतुरयमिति। अन्यथेदानीमग्रे प्रकटो न भवेत्। द्वितीये मुहूर्ते निर्गच्छन्तं बालक्ष्याह। तदा प्रतिमुहूर्तं युगलानि भवन्ति। सन्ध्यासन्ध्यांशयोरन्तरेण द्वादशैव मुहूर्ता इति सोमोत्पत्तौ निर्णयः। *अन्येषां हास्यं किर्मीरितं भवति, रज्जुवत्। भगवतस्तु दन्तानां कान्त्या विभक्तो हासः* मुक्ताहारवद् भवति। यथा रत्नैर्व्यवहिता मुक्ता इति। अनेन जगतः प्रपञ्चे मोहजनकत्वं स्थिरीकृतम्। स्नेहकलाभिर्मोया विभक्तेति श्रुतार्थापत्तिरर्थनिरूपणे मूलं सर्वत्र। यथा दृष्टे नानुपपत्तिः। दृष्टानुसारेणैव सर्वं व्यवस्थाप्यते। 'नहि दृष्टे अनुपपन्नं नाम व्याघाता'दिति। लौकिकानामेषा व्यवस्था। सर्वथा दृष्टविरोधो नाङ्गीक्रियत इति। तथा वैदिकानां श्रुतिः। यावतैव बोध्यमानः पदार्थः स्थिरीभवति, तावांस्तदनुगुण उच्यत इति सर्वत्रैवैषा व्यवस्था। *न केवलं संसारे पुत्राद्यासक्तिमेव स्थिरीकरोति, किन्तु धनासक्तिमपीत्याह।* स्थिरा लक्ष्मीर्येनेति। एवं प्रमाणबलनिराकरणार्थं द्वयं विधाय प्रमेयबलनिराकरणार्थं द्वयं कृतवानित्याह। यतोऽयमेव नन्दस्य सूनुर्जातः। आर्तानां च स्वयमागत्य सुखं प्रयच्छति। परिदृश्यते च तथेति च प्रमाणम्। नहि महानेवं करोति। अतः इदमाश्चर्यम्। एतमेवार्थं प्रकटीकुर्वन् कूजितवेणुर्भवति। अथवा। पूर्वापेक्षया अधोवक्त्रलीलया वेणुर्वाद्यते। हारवद्धासो यस्मिन् उरसि। तस्य स्थिरता विभागस्थैर्यं चाश्चर्यम्। श्रीवत्सोप्यत्युत्कृष्ट इति शोभार्थं तस्य स्थिरत्ववर्णनम्। तादृशस्य नन्दसूनुत्वे स्नेहो वर्धते। तत्रापि स्वोपकारक इति। कूजितत्वं वादनविशेषधर्मः। सर्वेषामान्तरं प्राणधर्ममप्याकर्षति। यत्र पशूनामपि प्राणादिधर्महारी, तत्रान्येषां किं वक्तव्यमिति पशूनां निरूपयति। एकस्य तथात्वं हेत्वन्तरसिद्धमपि भवेत्। अत

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

सर्वेषामेवेति। न तु नन्दस्यैवेत्यर्थः। तत्रेति। सर्वेषां सुखदत्वकथने प्राकट्यं साधकमित्यर्थः। किर्मीरितमिति। एकरूपमित्यर्थः। तेषां दन्तेषु प्रभाऽभावान्न तैर्विभागः कर्तुं शक्यः। भगवतस्तु दन्तेषु *माणिक्यदृष्टान्तस्योक्तत्वात्* प्रभावत्वेन तैर्हासविभागो भवतीति भावः। मोहजनकत्वमिति। भगवत इति कर्तृषष्ठीति शेषः। श्रुतार्थापत्तिं दृष्टान्तेन व्युत्पादयन्ति यथेति। नाङ्गीक्रियत इत्यन्तं लौकिकानां यथा, तथा वैदिकानां श्रुतिरतोत्र तथा निरूप्यते इत्यर्थः। यावतैवेति। बोध्यमानो हारहासस्वरूपः पदार्थो मोहजननपर्यन्ततात्पर्येण स्थिरीभवति। प्रयोजनाभावेन हारहासपदं न वदेदिति भावः। तावन्मोहजननपर्यन्तार्थो हारहासपदानुगुणस्तदनुगत इत्यर्थः। स्थिरीकरोतीति। टिप्पण्युक्तद्वितीयव्याख्यानपक्षे स्वस्मिन्निति शेषः। पूर्वं पुत्रादिषु स्थितामासक्तिं स्वस्मिन्नेव स्थिरीकरोतीत्यर्थः। धनासक्तिमिति। अत्रापि स्वस्मिन्निति शेषः। तथेति च प्रमाणमिति। चकारेण पूर्वोक्तश्रुतार्थापत्तेः समुच्चयः। अथवेति। अस्मिन् पक्षे हारहासे इति ससम्यन्तमुरसो विशेषणम्। अस्मिन् पक्षे चित्रतां निगृण्वन्ति। तस्येति। वादने इति। वादनजनितो विशेषधर्मो वेणनिष्ठ इत्यर्थः।

उक्तं वृन्दश इति । समूहशः । यत्रैव वेणुनादः प्रविष्टः, तेषां सर्वेषामित्यर्थः । व्रजस्थिता वृषाः ककुद्मिनो मत्ताः । उत्सृष्टवृषा इव शकटादिनेतारः । ते व्रजसमीप एव तिष्ठन्तीति ग्राम्यपशूपलक्षणार्थं व्रजपदम् । मृगा गावश्चारण्ये मिलिता भवन्ति । आरण्या ग्राम्याश्चैवं भवन्तीति ज्ञापनार्थं मृगपदम् । किं बहुना सर्व एव पशवो वेणुवाद्येन कृत्वा हृतचेतसो भवन्ति । नापि भगवत्समीपगमने समर्थाः । किन्तु हृतचेतसो दूरादेव भवन्ति । अनेन वेणुनादस्य स्वाभाविक एवायं धर्मो, न तु भगवत्समीपकृत इति । कवलास्तृणरूपाः, केवलं दन्तैर्दष्टाः, न त्यागे, न च भक्षणे समर्थाः । दन्तदंशमात्रेण प्रयत्नो निवृत्त इति नादस्येतरकार्यनिवर्तकत्वमुक्तम् । पूर्वक्रियाया अत्यावश्यकत्वाय कवलपदम् । देवस्त्रीवन्मूर्च्छानिवृत्त्यर्थमाह धृतकर्णा इति । अन्यत् सर्वं परित्यज्य कर्णमेव साधनं धृतवन्तः । ततो बाह्यान्निवृत्ता इत्याह निद्रिता इति । ततो नादेन सर्वतो व्याप्ताः । लिखितं गवादीनां चित्रमिव पश्चात्ते जाताः । स्थावरापेक्षयापि स्थिरा जाताः । पूर्वोक्तार्थादधिकोर्थ इति चित्रता ॥ ५ ॥

वेणुनादेन नदीनामतिजडानामपि स्पृहा जायत इति वक्तुं पुनर्वेणुनादं वर्णयन्ति बर्हिण इति ।

**बर्हिणः स्तबकधातुपलाशैर्बद्धमल्लपरिबर्हविडम्बः ।**
**कर्हिचित् सबल आलि सगोपैर्गाः समाह्वयति यत्र मुकुन्दः ॥ ६ ॥**
**तर्हि भग्नगतयः सरितो वै तत्पदाम्बुजरजोऽनिलनीतम् ।**
**स्पृहयतीर्वयमिवाबहुपुण्याः प्रेमवेपितभुजाः स्तिमितापः ॥ ७ ॥**

आवेशो देववेशश्च पूर्वं निरूपितौ । लीलावेशोऽधुना निरूप्यते । निरन्तरक्रिया हि

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

वृन्दश इत्यत्र । अनेनेति । आरादिति कथनेन वेणुनादस्य कार्यम्, न तु भगवत्सामीप्यस्येत्युक्तमित्यर्थः । इतरकार्येति । कार्यमात्रनिवर्तकत्वे कर्णधारणमपि न कुर्युरितीतरपदम् । स्वोपयोगीतरकार्यनिवर्तकत्वमित्यर्थः । पूर्वेति । दन्तदंशानन्तरं वेणुनादः श्रुतः । ततोऽदनं कर्णधारणं च प्राप्तम् । तत्र दंशस्य पूर्वत्वात्तत्सम्बन्धिन्यदनक्रिया आवश्यकी । कवलत्वेन सिद्धत्वादत्यावश्यकीत्यर्थः । तथापि न जातेति नादस्य माहात्म्यमिति भावः । पूर्वोक्तादिति । देवस्त्रीणां कश्मलादित्यर्थः ।

बर्हिण इत्यस्याभासे । अतिजडानामिति । जडा मूर्खाः पूर्वोक्ताः पशवः लीलाविशेषज्ञानरहिताः । ततोप्यतिजडा नद्यो यासां किञ्चिदपि न ज्ञानं तासामपीत्यर्थः । व्याख्याने । आवेशो देववेशश्चेति । आसमन्ताद्वेशः सार्वदिक इत्यर्थः । स प्रथमयुगले

---

६-७. हे आलि! कोईक समय ज्यारे मुकुन्द भगवान् मोरपिच्छना गुच्छाओ, गेरुवगेरे धातुओ, तथा पत्रो वडे मल्लनो शृंगार धारण करेछे, त्यारे बलभद्रसहित अने गोपोनी साथे गायोने वेणुनादथी आह्वान करेछे, ते समये सरिताओनी गति भांगी जाय छे, वायुथी आवेली भगवानना चरणारविन्दनी रज लेवानी इच्छा करेछे, पण आपणी माफक तेमनुं पुण्य ओछुं होवाथी मात्र प्रेमथी तरंगरूपी हस्त हलाव्या करेछे, अने तेमनां जल स्थिर थई जाय छे.

नदीनाम् । चेतनानां तु निद्रामूर्च्छादौ क्रियानिवृत्तिरपि दृष्टा । नदीनां तु न कदापि निवर्तते इति । तत्रापि महतीनाम् । बन्धोऽपि न तासां भवति । सापि वेणुनादेन निवृत्ता । बर्हिणो मयूरस्य । स्तवकाः गुच्छकाः पिच्छगुच्छानि । धातवो गैरिकादयः । पत्राणि च । धातूनां वा पत्राकारेण लेखाः । कमलपत्राण्यपि आकारार्थं बध्यन्त इति । तैः कृत्वा मल्लानां परिबर्हः अलङ्करणं वेश इति यावत् । स्वयं स्तबकादिभिः बद्धो योऽयं मल्लपरिबर्हः तं विडम्बयति । विडम्बो वा बद्धः । अस्वाभाविकं विडम्बनमेव भवति । नटमल्लवत् । अनेनायं नादो नृत्योपयोग्येव निरूपितः । तेन क्रियाशक्तिरुद्गता नादस्था निरूपिता नदीनामाकर्षे हेतुर्भवति । कर्हिचिदिति । यदोत्साहः क्रियाशक्तौ । अत एव सबलः बलभद्रसहितः । आलीति सम्बोधनं गोप्यतयायमर्थो निरूपितः, अप्रतारणार्थं च । प्रायेणैषा तदा दर्शनार्थं गतवती स्नानादिव्याजेन । एवं सामग्रीं विधाय सोऽस्माकं भोक्ता वस्तुतो वा जातो वा, तादृशो गोपैः सहितः । अनेनात्र वैकुण्ठस्थितलीला सूचिता । अत्रापि लक्ष्मीरस्माभिः सहिता रात्रौ, गोपैः सहिता दिवसे तिष्ठतीति । अत एव सम्बोधनं रहस्यसूचकम् । तदा गाः समाह्वयति, वेणुनादेनैव, प्रकरणित्वाद् ।

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेख ।

उक्तः । अवेश इति पाठे अवस्थितिविशेष एवोक्तो, न तु वेश इत्यर्थः । देववेशः देवस्य क्रीडाकर्तुर्वेशो गोचारणार्थं निर्गमनसामयिक इत्यर्थः । स द्वितीययुगले उक्तः । लीलावेशो नृत्यलीलासामयिको वेशः, सोऽत्र युगले निरूप्यत इत्यर्थः । महतीनामिति । सरन्तीति सरित इति यौगिकार्थेन गमनस्वभावत्वान्महत्त्वं सूचितमित्यर्थः । अनेनेति । नृत्यवेशविडम्बकथनेन नृत्यसामयिक एवायम्, न त्वन्यसामयिक इत्युक्तमित्यर्थः । तेनेति । नृत्यसमयकथनेनेत्यर्थः । नृत्ये तार एव नादो जायते, अतो अङ्गुलीरूपा क्रियाशक्तिरुद्गता गाढनिष्पीडनयुक्ता निरूपितेति भावः । यदोत्साह इति । नृत्ये यदोत्साहस्तदा बलसहितो भवतीति भावः । निरूपित इति । सम्बोधनं । एतदर्थमिति शेषः । प्रतिमुहूर्तं युगलानीति पक्षमाश्रित्याहुः प्रायेणेति । द्वितीययुगले निर्गमनमुक्तम् । इदं च तृतीयम् । अतो अधुना सर्वथा चित्तद्रवाभावात् किञ्चिज्ज्ञातत्वाच्च प्रायेणेत्युक्तम् । वनं याते द्रुतचेतस इत्युक्तत्वादग्रे सर्वथा चित्तद्रवे स्वत एव लीलाग्रहणं भविष्यतीति भावः । सरित्प्रसङ्गोक्त्या तीरस्थो भगवानुक्तः । अत उक्तं स्नानादीति । सामग्रीमिति । कर्हिचिदेवान्यसाहित्यकथनेन सर्वदा एकान्तस्थित्या रमणसामग्री सूचितेति भावः । जातो वेति । भोगानन्तरं वा गा आह्वयतीत्यर्थः । तादृश इति । कर्हिचिदेव गोपैः सहितोपि भवतीत्यर्थः । दिवसे इति । दिवसे अन्तरङ्गगोपैः सह गच्छतीति भावः । तदेति । भोगानन्तरं बहिरङ्गगोपसहितो गा आह्वयतीत्यर्थः । कर्हिचिदेव बलगोपसहितः, सर्वदा त्वेकान्ते भोक्तैव । एतादृशो वस्तुतो भगवान् । भोगानन्तरं वा पूर्वार्धोक्तप्रकारकः सन् गाः समाह्वयतीत्यन्वयः । व्रजान्निर्गत्य-तीरनिकुञ्जेषु रमणं यथेच्छं

वेणुनाह्वयतीत्यग्रे वक्ष्यति । वेणुतुल्यतया निरूपणार्थं वा वेणोरग्रहणम् । गवामाह्वाने हेतुः मुकुन्द इति । मोक्षो हि ताभ्यो देय इति स्वतस्तासां साधनाभावादाकार्य प्रयच्छति । स्वरसं वा तत्र स्थापयितुम् । उन्नता क्रियाशक्तिर्महदेव कर्म करोतीति गवामाकारणमुक्तम् । तत्र योगार्थं ज्ञात्वा नद्योऽपि नित्यं गच्छन्तीति ताः स्थगिता जाता इत्याह तर्हीति । तत्क्षणमेव भग्नगतयो जाताः । नहि भगवदाज्ञा केनाप्युल्लङ्घ्या भवति । सरित इति प्रवाहैकस्वभावत्वं निरूपितम् । तासां वैष्णवत्वकामना । तासां हि समुद्रोऽधिपतिः । यथा भगवान् पतिर्भूयात्, तदर्थं तत्पदाम्बुजरजः स्पृहयतीर्जाताः । स्पृहयन्त्यः । रजसः सम्बन्धार्थमुपायमाह अनिलनीतमिति । अनिलेन वायुना स्वार्थं नीतम् । तेन सह प्रत्यासत्तिः । जलार्थी सः । भगवदीया एव भगवत्सम्बन्धं प्राप्नुवन्तीति रजःकामना दूराभिप्राया । काम एवात्रोद्देश्यः देवतात्वान्नदीनाम् । अत एवाग्रे कालिन्दी तथा भविष्यति । इदानीं तथाभावे भाग्यं नास्तीत्याह अबहुपुण्या इति । न बहु पुण्यं यासाम् । यथा शीघ्रमेव गोरूपत्वम्, गोपालरूपत्वं दिवसे, रात्रौ स्त्रीरूपत्वमिति । पुण्यैर्विना समीहितार्थसिद्ध्यभावात् । कथं ज्ञायते तासामेवंभाव इति तत्राह वयमिवेति । यथा वयं अबहुपुण्याः । अन्यथा दिवसे गावो गोपा वा भवेम । अतः स्वदृष्टान्तेन ज्ञायते स्पृहामेव कुर्वन्ति, न तु तासां कार्यं सिध्यतीति । किञ्च । तासां सात्त्विक-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

विधाय तदा पूर्ववेशस्यान्यथाभावान्नृत्यादिवेशं विधाय गाः कृतार्थीकुर्वन् वनं गच्छति, सोत्रोक्तः । कालस्य भगवद्रूपत्वात्तदधीनत्वाच्च सर्वमुपपद्यते । तदा स्नानादिव्याजेन गता तादृशं दृष्टवती अन्तरङ्गत्वात्तत्पूर्वावस्थां च ज्ञातवती । अत्रागत्य वर्णयतीति भावः । उन्नता क्रियाशक्तिरिति । तारनादे इत्यर्थः । ननु नदीनामाह्वाने नद्यः स्थगिता भवन्ति । अत एव 'वेणुनिनदाह्वानसरले' इति वाक्यम् । गवामाह्वाने नद्यः कथं स्थगिता इत्यत आहुः योगार्थमिति । गच्छन्तीति गावः, सरन्तीति सरित इति यौगिकार्थस्यैकत्वात् स्वस्मिन् गोपदवाच्यत्वं ज्ञात्वा गवामाह्वानेपि स्थगिता जाता इत्यर्थः ।

तर्हीत्यत्र । स्पृहयतीर्जाता इति । स्थगिताः सत्यो भगवत्सम्बन्धो भगवदीयदेहं विना न भवति, तादृशो देहश्चरणरजसा भवतीति भगवत्सम्बन्धसिद्ध्यर्थं रजःस्पृहां कृतवत्य इत्यर्थः । भगवदीया एवेति चरणरजःसम्पादितदेहा इत्यर्थः । काम एवेति । गोप्यिव भक्ष्यलक्षणकामनिवारणायैवकारः । पूर्वगीते 'नद्य' इति श्लोके देवतात्वान्नदीभिः सह नान्या लीलेत्युक्तम् । अधुना त्विन्द्राभिषेकस्य जातत्वात् सम्भवत्येवेति भावः । अत एवेति । तथा कामवत्त्वादेवेत्यर्थः । आधिदैविकस्य भगवत्त्वेनानन्तरूपत्वादिदमपि राजलीलास्थमेकं रूपम् । मुख्यं तु यमुनाष्टकोक्तमिति ज्ञेयम् । वस्तुत ऐक्यात् 'कृष्णतुर्यप्रिया'मिति तत्राप्युक्तम् । 'सर्वाभेदादन्यत्रेमे' इति न्यायोनुसन्धातव्यः । पुण्यैरिति । तादृशकृपाविषयत्वहेतुभूतो भावविशेषः पुण्यपदेनोच्यते ।

भावादपि हृद्गतो भावो लक्ष्यत इत्याहुः प्रेमवेपितभुजा इति । प्रेम्णैव भुजानां वेपनम्, न तु वायुवशात् । अतो विरहसन्तापयुक्ता इव लक्ष्यन्ते । किञ्च । स्तम्भोऽपि जात इत्याहुः स्तिमिताप इति । स्तिमिताः स्तब्धा आपो यासाम् । एवं रजोभेदास्त्रिविधा निरूपिताः ॥ ७ ॥

सत्त्वभेदान् निरूपयितुं भगवन्तमपि तथा वर्णयन्ति अनुचरैरिति त्रिभिः । लताविहङ्गममेघाः सात्त्विकाः । एते वेणुनादेन भक्तिपूर्णा जाताः । तत्र प्रथमं वृन्दावनस्था लतास्तरवश्च वैष्णवाः वेणुनादेन उद्गतप्रेमरसा जाता इति तदर्थं प्रकारान्तरेण वेणुनादमाह । तदर्थं प्रकारान्तरेण भगवानपि वर्णनीयः । स च भक्त्यनुसारेण, लोकवेदानुसारेण च वर्णनीयः । तत्र भक्त्यनुसारेण प्रथममाह ।

**अनुचरैः समनुवर्णितवीर्य आदिपूरुष इवाचलभूतिः ।**
**वनचरो गिरितटेषु चरन्तीर्वेणुनाह्वयति गाः स यदा हि ॥ ८ ॥**
**वनलतास्तरव आत्मनि विष्णुं व्यञ्जयन्त्य इव पुष्पफलाढ्याः ।**
**प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्म ॥ ९ ॥**

अनुचरैः सेवकैर्गोपैः सम्यगनुवर्णितानि वीर्याणि यस्य । आदिपूरुष इव पुरुषोत्तम इव च अनुचरैर्वेदैः सम्यक् सर्वोत्तमत्वेन वर्णितानि जगत्कर्तृत्वादीनि वीर्याणि यस्य । लोकानुसारेण माहात्म्यमाह सर्वोत्कृष्टं आदिपूरुष इवाचलभूतिरिति । अचला विभूतिर्लक्ष्मीर्यस्य । अनुचरैः सर्वैरेव देवादिभिस्तथोक्तः । लौकिकाः स्वव्यवहार्यत्वात् पुरुषोत्तमतुल्यतामेवाहुः । अतो दृष्टान्तभावः । भिन्नतया वर्णनायां हेतुमाह वनचर

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

अनुचरैरित्यस्याभासे । सत्त्वभेदानिति । सत्त्वप्रधानो भेदो येषां तान् लताविहंगममेघानित्यर्थः । तथेति । तत्तदुपयोगिरूपनादवत्त्वेनेत्यर्थः । एतेन श्लोकत्रयाभास उक्तः । एतदाभासमाहुः तत्रेति । तथोक्त इति । अचलविभूतित्वेनोक्त इत्यर्थः । अनुचरैः समनुवर्णितवीर्य इति व्याख्याने भक्त्यनुसारः । आदिपूरुष इवानुचरैः समनुवर्णितवीर्य इति व्याख्याने वेदानुसारः । आदिपूरुष इवाचलभूतिरिति प्रकारेणानुचरैः समनुवर्णितवीर्य इति व्याख्याने लोकानुसार इति विभागो ज्ञेयः । चतुर्थयुगले वृन्दावनप्रवेशः क्रमप्राप्तः । अतो वनचर इत्युक्तम् । पूर्वयुगले वनचरस्योक्तत्वात्

८–९. पुरुषोत्तमनी माफक सेवको जेमना अलौकिक चरित्रोनां वर्णन करे छे, आदिपुरुषनी माफक वेद जेमना जगत्कर्तृत्व आदि वीर्योनुं वर्णन करे छे, पुरुषोत्तमनी माफक जेमने लक्ष्मी अचल छे एम जेमना अनुचरो वर्णन करे छे, एवा आप ज्यारे वृन्दावनमां फरतां गिरिराजना शिखरोपर चरती गायोने वेणुवडे आह्वान करे छे, त्यारे वनलताओ आत्माने विषे जाणे विष्णुने प्रकट करती होय तेम पुष्प अने फळथी भरपूर थाय छे, तेमनी शाखाओ भारथी पुष्कळ नमी जाय छे, प्रेमथी तेमने रोमांच थाय छे, अने मधुधारानी वृष्टि करे छे, अने तरुओने पण एमज थाय छे.

इति । वृन्दावनचरः सात्त्विकभावापन्नः सत्त्वभूमौ प्रतिष्ठित इति, गिरितटेषु गिरिप्रान्तेषु चरन्तीः विषमस्थानात् समदेशे पशुहिते स्वयं तत्रत्यो भूत्वा समाह्वयति, लौकिकत्वाभावाय वेणुनैवाह्वयति । वेणुद्वारा तत्र प्रविष्ट इति अग्रिमचरित्रेण ज्ञायते । अन्यथा वृक्षाणां तथात्वं न स्यात् । स इति येषु वनप्रदेशेषु रेमे, यदैवाह्वयत्, तदैव मधुधाराः ससृजुः स्मेति सम्बन्धः । युक्तश्चायमर्थः । अन्यथा वेणुनादाभिज्ञता तत्र च स्वनामसङ्केतो न स्यात् । अतस्तद्द्वारा भगवान् प्रविष्ट इत्यग्रेऽपि तथात्वं युक्तमेव ।

वनस्था लताः अस्मन्निकटे भगवांश्चरति स्वकीयांश्चाकारयतीति ज्ञात्वा तेषां भोगसिद्ध्यर्थं स्वस्मिन् विद्यमानमानन्दं प्रकटितवत्यः । तथा तरवश्च । यथा स्त्रियः पुरुषाश्च भगवदीयाः भगवति भगवदीयेषु च समागतेषु आनन्दयुक्ता भवन्ति, भोगार्थं स्वकीयं च प्रयच्छन्ति, तद्वदेतेऽपि । नन्वयं धर्मो जङ्गमानाम्, न स्थावराणामिति चेत्, तत्राह आत्मनि विष्णुं व्यञ्जयन्त्य इति । चेतनेष्वेव भगवतः क्रियाज्ञानशक्त्योराविर्भावः । सच्चिदानन्दरूपता च क्रमेणाविर्भवति । एतत् सर्वं भगवति निविष्टे भवति । सोऽपि निविष्टश्चेत् प्रकटीभवति तदैवं युज्यत इति । ते वृक्षादयः पञ्चधर्मयुक्ताः आत्मनि विष्णुं व्यञ्जयन्त्य इव जाताः । तत्र प्रथमं क्रियाशक्त्याविर्भावमाह पुष्पफलाढ्या इति । यत्र हि भगवान् निविशते, तत्रावान्तरफलं परमफलं च भवति । अतः कार्याद्व्यञ्जयन्त्य इव जाताः । पुष्पाण्यवान्तरफलरूपाणि । परमफलानि तु फलानि । तैः सर्वैराढ्या जाताः । भगवदर्थं सदाधिक्यमाह प्रणतभारविटपा इति । भारेणापि नमनं सम्भवतीति तन्निरा-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

सात्त्विकभावोपि जातस्तात्पर्यार्थस्तेनोक्तः । लौकिकत्वाभावायेति । अन्यकृताह्वानसादृश्याभावायेत्यर्थः । तत्र प्रविष्ट इति । तरुषु प्रविष्ट इत्यर्थः । 'विष्णुं व्यञ्जयन्त्य' इत्युक्तत्वादिति भावः । स इतीति । येषु देशेषु रेमे तत्र स्थित इति शेषः । समीपनिकुञ्जस्थाः कृतार्थीकृत्य वनं प्रविष्टः सन् यत्र देशेषु पूर्वदिवसेषु रेमे तत्र सङ्केतस्थले स्थित्वा वेणुना गा आह्वयति । तेन नादेन तदन्तःस्थितदेवता उद्बुद्धा भवन्ति । अन्येपि सर्वे भगवदुपयोगि स्वस्व रसंनिष्ठं प्रकटीकुर्वन्ति । ततो निबिडनिकुञ्जगतो रमत इति भावः । स्वनामेति । भगवानेकेनैव वेणुनादेन तेभ्यस्तेभ्यस्तत्तन्नाम गृहीत्वा स्वापेक्षितं ज्ञापयति । तथा चापेक्षितफलपुष्पाद्यप्रकटने प्रयोजनाभावात्तन्नाम न गृह्णीयादित्यर्थः । तद्द्वारेति । वेणुद्वारेत्यर्थः । अग्रेपीति । पूर्वं पुष्पफलरूपानन्दप्रकटनमुक्तम् । अग्रेपि मधुधारारूपानन्दप्रकटनं युक्तमेवेत्यर्थः ।

वनलता इत्यत्र । क्रियाशक्त्याविर्भावमिति । फलपुष्पाणां लीलोपयोगित्वादिति भावः । सदाधिक्यमिति । सन्तो हरिं दृष्ट्वा नमन्तीति भावः । भारेणेति । युक्ता इति

सायादौ प्रणतत्वमुक्तम् । प्रकर्षेण नताः भारेण विटपाः शाखा येषाम् । प्रेमहृष्टतनव इति चिदुत्कर्षो ज्ञानरूपो निरूपितः । भक्ता एव हि प्रेम्णा हृष्टरोमाञ्चा भवन्ति । ( पूर्वमहरितानामपि तदा हरितत्वं, पूर्वस्मात् स्थौल्यं प्रत्यवयवमुच्छूनत्वं प्रभाविशेषश्चात्र प्रेमहृष्टतनुत्वम् । अपरं च । वेणुनादनिष्ठसुधास्वादवत्यः स्वामिन्य इति तद्धर्मं परिचिन्वन्ति ता एवेति तदुक्तावन्यविचाराक्षमत्वं युक्ततरमिति नाधिकं लेखनीयमत्र ।) मधुधाराः स्वस्मिन् विद्यमानानन्दं भगवदर्थं बहिः प्रकटितवत्यः । एतत्सर्वपरिज्ञानमेव ज्ञानशक्तिः ॥ ९ ॥

पक्षिणामपि वेणुनादकार्यं जातमिति तत्रोपयोगिरूपं वेणुनादं च वर्णयन्ति दर्शनीयतिलक इति । यद्यपि पक्षिणो मुनयः, न तेषां गीतादिना भगवद्भावो भवति, किन्तु स्वभावत एव, तथापि लोकदृष्ट्या कदाचिदन्यथाबुद्धिर्भवेत्, अतो रूपनादाभ्यां तेषां भजनसिद्धिर्निरूप्यते । तत्र रूपं वर्णयति दर्शनीयतिलक इति ।

**दर्शनीयतिलको वनमालादिव्यगन्धतुलसीमधुमत्तैः ।**
**अलिकुलैरलघुगीतमभीष्टमाद्रियन् यर्हि कूजितवेणुः ॥ १० ॥**
**सरसि सारसहंसविहङ्गाश्चारुगीतहृतचेतस एत्य ।**
**हरिमुपासत ते यतचित्ता हन्त मीलितदृशो धृतमौनाः ॥ ११ ॥**

दर्शनीयानां मध्ये तिलकरूपोऽतिसुन्दरः । पक्षिणश्च रूपप्रधानाः, रूपभेदविदः । किञ्च । यो वेणुनादः स स्वहितकारी, स्वकीयानामपराधमपि न मन्यते । तदाह । वनमा-

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

शेषः । तथा च प्रणता भारयुक्तविटपा येषामिति विग्रहः । भक्ता एव हीति । ज्ञानोत्कर्षः पुरुषोत्तमज्ञानम् । तद्भक्त्यैव भवति 'भक्त्या त्वनन्यये'ति वाक्यादिति भावः ।

दर्शनीयेत्यत्र । लोकदृष्ट्येति । सर्वदा भगवद्भाववत्त्वेपि लोकस्य विषयान्तरस्य दृष्ट्या दर्शनेनांशतोपि अन्यचित्तता भवेत् । रूपदर्शने तु नादस्य वा श्रवणे तु नांशतोप्यन्यचित्ततेत्यर्थः । पक्षिणां रूपप्रधानत्वे हेतुमाहुः रूपभेदविद इति । तृतीयस्कन्धे 'ततः शब्दविदो वराः । रूपभेदविदस्तेभ्य' इत्यत्र रूपभेदवित्पदेन पक्षिण उक्ता इति भावः । एतेन विशेषणेन रूपेण भजनसिद्धिरुक्ता । अग्रिमविशेषणान्नादेनापि भजनसिद्धिरित्याहुः किञ्चेति । अल्पादरकथनेनैतेषामादरः कैमुत्यसिद्ध इति प्रघट्टकार्थः । स्वहितकारीति । स्वेषां स्वकीयानां हितकारीत्यर्थः । भ्रमराणां नादप्रधानत्वान्नादसम्बन्धित्वम् । पक्षिणो नानाविधकूजनैरुपकुर्वन्तीति नादप्रधानाः । अपराधमपि न मन्यत इति । तदनुरणनरूपो भवतीत्यर्थः । कर्मणः स्वातन्त्र्यं सौकर्यात् ।

---

१०-११. दर्शनीय पुरुषोमां तिलकरूप भगवान् वनमालाना दिव्यगन्धवाला तुलसीना मकरन्दथी मत्त थयेला अलिकुलोए करेलां तीव्र गीतने तेमने अभीष्ट रीते आदर आपीने ज्यारे वेणुनुं कूजन करे छे, त्यारे सरोवरने विषे रहेनारा सारस, हंस वगेरे पक्षीओ भगवान्ना चारु गीतथी भगवद्वश थयला चित्तवाळा आवीने, चित्त नियममां राखीने नेत्र निमीलन करी, मौन धारण करी, हरिनी सेवा करे छे, ए तेमनुं केवुं सुंदर भाग्य छे. १ (                ) विहान्तर्गतं प्रभूणाम् ।

लादिव्यगन्धतुलसीमधुमत्तैरलिकुलैः कृतमलघुगीतमपि आद्रियन्, आदरं कुर्वन्नेव कूजितवेणुर्यतः । यथैव भ्रमरा झङ्कारं कुर्वन्ति, तथैव तन्नादमनुकुर्वन्नेव अनुरणनवदेव वेणुनादं करोति । पक्षिणां मध्ये अलयो हीना निकृष्टाश्च । तेषामपि कुलानि समूहाः नानाविधजातिभेदाः । तैरप्यलघु यथा भवति तथा गीतम् । तस्याप्यादरं कुर्वन् । तत्राप्यलयो मत्ताः । मदोऽपि येनानुचितः । नहि तुलसी पुष्पान्तरवन्मादहेतुः । तत्रापि दिव्यगन्धा । तत्रापि भगवद्वनमालागता । तेषामप्यादरं चेत् कुर्यात्, तदा सरोवरादिषु ये सरसा रसिकाः क्षीरनीरविवेकिनश्च तेषामादरं कथं न कुर्यादिति । वनमालायाः या दिव्यगन्धतुलसी तस्या मकरन्देन मत्तैः । किञ्च । आदरोऽपि भ्रमराणां यथाभीष्टं भवति, तथा वनमालायां समागतान् भ्रमरान्न दूरीकरोति । किन्तु ते यथा नोपद्रुता भवन्ति, तथैवादरं करोति । अतो यथैव आदरं कुर्वन्नेव कूजितवेणुः, तदैव सरसि विद्यमानाः जलवासिनः सारसाः सरसानां भक्तानां सम्बन्धिनः, हंसाः क्षीरनीरविवेकिनः ते च विहङ्गा उत्कृष्टगतियुक्ताः, पुरुषापेक्षया ते पुनर्भगवद्भजनाधिकारिण इति तान् विशिनष्टि चारुगीतहृतचेतस इति । चारु यथा भवति निःकामार्थं भगवद्गीतेनैव हृतं वशीकृतं चित्तं येषाम् । तदपि भजनं भक्तिमार्गानुसारेण । न तु स्थानस्थितानामन्तर्यामिरूपे ज्ञानरूपे वा । तदाह । एत्य आगत्य हरिं उप समीपे सेवमाना जाताः । यतस्ते भगवद्भक्ता मुनयः । भजने भ्रमराद्विशेषमाह यतचित्ता इति । यतं नियतं चित्तं येषाम् । चित्तनैयत्येन भगवद्भजनं मुख्यम्, न तु विक्षिप्तचित्ततया । किञ्च । हन्त इति हर्षे । एतद्भाग्यमेतेषामेव भवतीति । बहिर्व्यापाररहिता भजने सर्वोत्तमाः । बहिर्व्यापारेषु च नेत्रे वाक् च नियम्याः । यस्यैतद्द्वयं नियतम्, वाक् नान्यं वदति, चक्षुश्च नान्यत् पश्यति, तदाह मीलितदृशो धृतमौना इति । मीलिता दृग् येषाम् । धृतं मौनं व्रतं यैः । साम्प्रतमेते नादपराः । अतो दृष्ट्या अन्यचित्तता भविष्यतीति नेत्रनिमीलनम् । एवमेतेषां भाग्यं सात्त्विकत्वान्निरूपितवत्यः ।

(*अथवा । दर्शनीयतिलक इति । इदमत्राकूतम् । अतिरसिका एते मुनयः,*

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

सरसीत्यत्र । भक्तानां सम्बन्धिन इति । तथैव सङ्केताद्भक्तागमनसूचका इत्यर्थः । क्षीरेति । आगतानां मध्ये तत्तद्भावं विविच्य भगवन्तं बोधयन्तीत्यर्थः । निःकामार्थमिति । निःकामत्वसाधकं अभिलाषपूरकमिति यावत् । अत्र भजनस्य नादप्रधानत्वान्नादेनैवाभिलाषपूरणमिति पुरुषापेक्षया विशेषः । पुरुषाणां तु प्रत्युताधिकोभिलाषो जायत इति भावः । अत्र पुरुषपदं स्त्रीपुंससाधारणमिति ज्ञेयम् । समीपे इति । आसत इति शेषः । उपासनपदार्थमाहुः सेवमाना इति । किञ्चेत्यस्य मीलितदृशेत्यनेनान्वयः । यतचित्तत्वं भ्रमराद्विशेषो मीलितदृक्त्वं धृतमौनत्वं च विशेष इत्यर्थः । यस्यैतदिति । यस्यैवं भवति स सर्वोत्तम इति शेषः । सात्त्विकत्वादिति । शुद्धसात्त्विकत्वादित्यर्थः । तथा च पूर्वोक्तानां तमोमिश्रसात्त्विकत्वमग्रिमाणां रजोमिश्रसात्त्विकत्वमिति विभागो

---

१ प्रभूणाम् ।

स्वस पुरुषत्वेन लीलायामनुपयोगं मत्वा, पक्षीभूय, विविधस्वकूजनैर्भगवतो भक्तानां च रसोद्दीपनं कुर्वन्तः, स्वकृतार्थतां मन्वानाः, शब्दमेवाधिकमभीष्टं मन्यन्ते । अतः शब्दप्रधानकीर्तिरूपवनमालाधर्माणामेवात्रोपयोग उच्यते । 'यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यकर्मणो दूराद्गन्धो वाती'ति श्रुत्या कीर्तेर्गन्धसाम्येन निरूपणं कृतम् । वनमालायाः कीर्तिरूपत्वात् तन्निरूपकाणि गीतान्यावश्यकानि । तानि च तद्रसास्वादं विना न सम्भवन्त्यतो गुणातीतभक्तिरूपवक्ष्यमाणरूपगन्धवती तुलसी, तन्मध्वत्यलौकिकभक्तिरसात्मकमितरविस्मारकम् । अतोऽतिमत्ताः स्वदेहाद्यनुसन्धानरहिता ईश्वरधर्माननुसन्धाना अपीति तन्निकट एवालघु गायन्ति । वस्तुतस्त्विदमेव महत्तमं समाराधनं प्रभोरलिभिः क्रियते । अत एव प्रभोरमित इष्टं तदेव गीतम् । अपरं च । चार्वादिपदानि विहाय तत्र भवनार्थकप्रत्ययवत्पदोक्त्या भगवद्वनमालास्थतुलसीगन्धस्य दिविभवत्वस्य बाधितत्वादग्रे स्वामिनीषु व्रजदेवीत्वस्य वक्ष्यमाणत्वाद् दिवुधातोः क्रीडावाचकत्वाच्च स्वामिनीभिः सह क्रीडाजनितोऽयं गन्ध इति समभिव्याहारादवगम्यते । एतेन यथा दिविभवोऽर्थो नेतरलोकस्थजनविषयः, तथायमन्तरङ्गतमलीलाप्रपञ्चस्थभक्तैकगम्य इति ध्वन्यते । अत एव प्रभोरपि भावोद्बोधस्तेनासीदिति ज्ञापनाय कूजनमुक्तम् । किञ्च, वनमालास्थपुष्पमध्वनुक्त्वा तुलस्या एव तद्यदुक्तं 'दयितगन्धतुलस्या' इति वाक्याद् 'बाहुं प्रियांस' इत्युपक्रम्य 'तुलसिकालिकुलैर्मदान्धैरन्वीयमान' इति वाक्याच्च तद्गन्धमध्वादिस्वरूपं प्रभुरेव वेत्तीति नान्यगम्यः स विशेषः । तद्भोक्तारोऽलयोऽपि न साधारणाः, किन्त्वितरेभ्यो विजातीया अत्युत्तमा इति ज्ञापनार्थमेव कुलपदमुक्तम् । अत एवालिपदमुक्तम् । अलंशब्दो हि पूर्णतावाची । तथा च तद्वानलिरित्यत्रोच्यते । रसो न लीयते, न नश्यति यत्र येन वा सोऽलिरित्युच्यते । यद्यप्यत्र दीर्घः सम्भवति, तथापि 'दशहूतो ह वै नामैषः । तं वा एतं दशहूतं सन्तं । दशहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवा' इति श्रुतिन्यायेन 'परोक्षं च मम प्रिय'मिति भगवद्वाक्याच्च स्वप्रियार्थस्य गोपनं प्रभोः प्रियमिति ज्ञायते । प्रकृते च स्वान्तरङ्गरसपोषकता एतेषु गोप्येति परोक्षेण ह्रस्वान्तं पदं प्रभुः प्रकटितवान् । एवं सत्येत एवालयोऽन्ये तु भ्रमरा एव । क्वचिदेतेष्वप्यन्यनामप्रयोगस्तात्पर्यविशेषेणेति ज्ञेयम् । तारत्वं बहुत्वं चानुक्त्वा लघुत्वाभाव एव य उक्तस्तेन तद्गीतरसभरं

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

ज्ञेयः । द्वितीयव्याख्याने । तद्रसास्वादमिति । कीर्तिनिष्ठरसस्य माधुर्यस्यास्वाद इत्यर्थः । गुणातीतेति । गुणातीतभक्तिनिरूपको 'मालया दयितगन्धतुलस्या' इत्यत्र भगवत्प्रियत्वेन वक्ष्यमाणरूपो यो गन्धस्तद्वतीत्यर्थः । अतोतिमत्ता इति । तादृशान्मधुनोतिमत्ता इत्यर्थः । गन्धेऽन्यमपि विशेषमाहुः अपरं चेति । प्रभ्वेकवेद्यत्वमन्यमपि विशेषमाहुः किञ्चेति । यदुक्तमिति । यस्मादुक्तमित्यर्थः । तदिति तस्मादित्यर्थः । यस्मात्तुलस्या एव मधूक्तम्,

१ अरमेति पाठः ।

वोढुं नान्यः शक्तः प्रभुं विनेति ज्ञाप्यते । महत्त्वे इयत्ता नास्त्येवेत्यपि ज्ञापनाय तथोक्तिः । एवं सति तदादरं कथं न कुर्यात् । यर्हीति पदात्तद्गीतरसपानपरवशश्चिरं तूष्णीमेव तिष्ठति, कदाचित्तद्रसभरेणैव कूजितवेणुर्भवतीति ज्ञाप्यते । अग्रे गीतोक्त्या पूर्वं तद्गीतोद्बुद्धभावेन स्वप्रियाणां भावोद्बोधनाय तथैवाकरोत् । ततो यदा पूर्णरसोऽभूत्, तदा जगाविति ज्ञाप्यते । अतिसुन्दरत्वनिरूपणे तिलकत्वोक्त्या तद्यथा भाग्यस्थाने भाले तिष्ठति, तथेदमपि स्वरूपं परमभाग्यवतीष्वेव तिष्ठतीति ध्वन्यते । अत्र कर्मधारयो ज्ञेयः । स्वामिनीनां हृदि प्रियातिरिक्ते दर्शनीयत्वास्फूर्तेः । अत्र यद्यप्युभयं मुख्यम्, तथापि नादे विशेषो निरूप्यते । अन्यथा मीलितदृक्त्वं नोच्येत । तत्र हेतुः । सरसि विद्यमानैरेव तैर्वेणुगीतं श्रुतम् । तच्च चारुत्वेन मनोहरणैकस्वभावम् । अतो नादाधीना एव निकटे समागताः । आदावेव नादहेतुभूतस्वरूपसौन्दर्यनिरूपणान्नादरस एव स्वरूपरसमप्यनुभवन्तीति ज्ञाप्यते । इदमप्यतिचित्रं यन्मत्तानां गीतानुरणनरूपेण गीतेन यतचित्तत्वं सर्वेन्द्रियवृत्तिनिरोधश्चेति । एतेषामियं गीतरसपानदशैलेवंरूपतैवोपपद्यतेपि । एतज्जन्यत्वेनैतदुत्तरकालीनत्वान्नादस्य । अलिकुलानामपि तुलसीगन्धमधुपानदशा पक्षितुल्यैव । पश्चात्तत्स्वभाववशादुक्तरूपत्वं परमिति ज्ञायते । मुनित्वात् पक्षिणामग्रेऽप्यन्तरेव निरन्तरगीतद्रसमग्नतैवेति न मत्ततोक्ता । अथवा । प्रभुरसस्वभावादनुक्तसिद्धैवाग्रिमा सेति नोक्ता । तदैतेषामप्यलिकुलवद्दशा भविष्यति । वस्तुतस्तु उक्तरूपरसमत्तालिकुलालघुगीतमभीष्टत्वेन अतिचित्तनैयत्येनैवानुभवन् प्रभुर्वेणुकूजनगाने करोतीति तच्छ्रवणे पक्षिणामपि तथात्वमेवोचिततरमावश्यकत्वादिति युक्तमुत्पश्यामः । तथाप्यादौ स्वरूपसौन्दर्यमेवोक्तमिति स्वस्य तद्दिदृक्षातिभरेण पक्षिणां तत्प्रासिदशायां तत्प्रतिबन्धस्मरणेन कश्चित् खेदोऽभूदिति हन्तेत्युक्तम् ) ॥

मेघः सर्वहितकारी, तस्यापि वेणुनादजनितभावमाह पूर्ववत् । सहबल इति द्वाभ्याम् ।

**सहबलः स्रगवतंसविलासः सानुषु क्षितिभृतो व्रजदेव्यः ।**
**हर्षयन् यर्हि वेणुरवेण जातहर्ष उपरम्भति विश्वम् ॥ १२ ॥**
**महदतिक्रमणशङ्कितचेता मन्दमन्दमनुगर्जति मेघः ।**
**सुहृदमभ्यवर्षत्सुमनोभिश्छायया च विदधत्प्रतपत्रम् ॥ १३ ॥**

हे व्रजदेव्यः, गोप्यः, व्रजदेवतारूपाः । अनेन विश्वासो भविष्यतीति निरूपितम् ।

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तस्मात् सः मधुनिष्ठो विशेषो नान्यगम्य इत्यन्वयः । एवं प्रकारत्रयेण गन्धस्य मादकत्वमुक्तम् ।

सहबल इत्यत्र । अनेनेति । दिवूधातोः क्रीडार्थत्वाल्लीलास्थत्वसूचकदेवीपदे-

---

१२–१३. हे व्रजदेवीओ, बलदेवजीसहित, पुष्पगुच्छरूप कर्णाभरणना विलासवाळा प्रभु, गिरिना शिखरोपर पोते हर्षथी भरपूर थई, सर्वने आनंद पमाडता वेणुरवथी ज्यारे विश्वने भरपूर करी मुके छे, त्यारे मेघ महोटाना अतिक्रमणथी शंकित थई उपर स्तम्भित थई, मन्दमन्द गर्जना करे छे, पोताना मित्र भगवान्‌पर बिन्दुरूपी पुष्पोनी वृष्टि करी पूजा करे छे, छत्र धरे छे, अने छायाथी आत्मनिवेदन करे छे.

यर्हि वेणुरवेण विश्वमुपरम्भति पूरयति, तर्हि महदतिक्रमेण शङ्कितचेताः सुहृदं भगवन्तमभ्यवर्षत्। स्वदेहछायया च आतपत्रं विदधत् जातः। तद्वा कुर्वन् अभ्यवर्षत्। अयं नादो महाबलयुक्तः। विश्वगतान् सर्वानेव धर्मान् दूरीकृत्य स्वयमेव पूर्णः। तदाभासरूपोऽपि मेघः धूमादिसमूहात्मा विश्वं भगवतैव कृतार्थीभूतमिति स्वयमुपचरितार्थोऽपि स्वजन्मसाफल्याय भगवन्तमेव ववर्ष। तत्र यादृशेन वेणुनादेनैतद्भवति, तादृशकर्तारं भगवन्तं वर्णयति विशेषणचतुष्टयेन। अन्यथा उपरम्भणमर्थवादरूपं स्यात्। तत्र क्रियाशक्तिः सम्पूर्णेति वक्तुं सहबलो बलभद्रसहित इति उक्तम्। सृष्टिकरणक्रियापेक्षयापीयं महती क्रियेति ज्ञापयितुम्। स्रग्रूपो योऽयमवतंसः कर्णाभरणं तत्र विलासो यस्येति लीला निरूपिता। माला कीर्तिमयी। दश दिशः श्रोत्रम्, कीर्तिर्दिक्षु पूरिता यया सा भवत्येव सर्वोत्तमा। भगवत्कीर्तिप्रतिपादकं वा भागवतादिशास्त्रं सर्ववेदेष्वाभरणरूपं तत्र विलासयुक्ता तत्प्रतिपादिका च। एवं क्रियायाः स्वरूपतो गुणतश्च माहात्म्यं निरूपितम्। तस्याः

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

नानुभवसंवादादुपरम्भणकथने विश्वासो निरूपित इत्यर्थः। महाबलेति। तार इत्यर्थः। उपरम्भणपदार्थमाहुः विश्वेति। अत्र विश्वशब्दो नादश्रोतृसर्वपरः। तत्समये तेषां विषयान्तरस्य न स्फूर्तिः। किन्तु नाद एवान्तर्बहिःपूर्ण इत्यर्थः। आभासेति। नीलत्वाद्भगवदाभास इत्यर्थः। वर्णसाम्येप्याभासत्वे हेतुमाहुः धूमादीति। विश्वमिति। मेघस्य प्रयोजनं वृष्ट्यादिना तापनिवारणम्। तापस्तु भगवतैव नादद्वारा स्वानन्दपूरणेन निवारितः। तथा चाभासत्वेन निकृष्टोपि सिद्धप्रयोजनोपि स्वजन्मसाफल्याय स्थितः सन् ववर्ष। न तु भगवतोपि तेन किञ्चित् प्रयोजनमिति भावः। अर्थवादरूपमिति। भगवतो बालत्वेन तत्कृतोपरम्भणे वाच्योर्थो विरुध्येतेति तेन चित्ताक्षेपरूपः कश्चिद्गुणविशेषो लक्ष्यते इति गुणवादरूपोर्थवादः स्यात्; विरोधे गुणवादः स्यादिति सिद्धान्तादिति भावः। सृष्टीति। 'अदीने'त्यत्रादीनत्वं सर्गः, लीला विसर्ग इति सर्गानन्तरं लीलाया निरूपितत्वान्महत्त्वम्। स्रग्रूप इति। पुष्पगुच्छरूप इत्यर्थः। महत्त्वं शास्त्रीत्यापि व्युत्पादयन्ति मालेति। दशेति। अवतंसः कर्णाभरणम्, तत्र कर्णौ दिश इत्यर्थः। आभरणे विलासस्तस्य स्वस्थाने स्थापनम्। तथा च कीर्तिरूपदिगाभरणे विलासकथनेन कीर्तिरूपाभरणस्य दिक्षु स्थापनमुक्तम्। अत्रैतद्विशेषणकथनेन समभिव्याहारादुपरम्भणेन तथा करोतीत्यर्थो लभ्यते इत्याशयेनाहुः ययेति। उपरम्भणक्रिययेत्यर्थः। भगवत्कीर्तीति। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्। नभआभरणं शब्दस्तद्गुणत्वादिति भावः। तथा चावतंसपदेन भागवतशास्त्रमित्यर्थः। अस्मिन् पक्षे स्रक्प्रतिपादकोऽवतंस इति विग्रहः। विलासयुक्तेति। भगवतो विलासकथने तन्निष्ठस्योपरम्भणस्यापि विलास उक्त एवेति भावः। तत्प्रतिपादिकेति। तत्प्रतिपादकं यस्या इत्यर्थः। स्वरूपतो गुणतश्चेति। स्वरूपं फलः। कीर्तिपूरणं गुणः। माहात्म्यं महत्त्वमित्यर्थः। अग्रे इच्छाया माहात्म्यमाहेति। 'सुख-

सहकारिण्या इच्छाया माहात्म्यमाह। स्वयं जातहर्षः सर्वमेव च हर्षयन्निति। एवं वेणुनादस्य कारणभूतक्रियोत्कर्षमुक्त्वा देशतोऽप्युत्कर्षमाह क्षितिभृतः सानुष्विति। सर्वाधारभूतां पृथिवीं ये बिभ्रति, तेषामप्युच्चस्थानेषु स नादो जायते, इति कथं न विश्वं पूरयेत्। रवः अनुरणनमतिगम्भीरं उपरम्भति नादेन पूरयतीति मेघादप्यधिका क्रिया निरूपिता। तदैव मेघः महतो वासुदेवस्य उपरि गच्छन् भगवदतिक्रमणे शङ्कितचित्तो भूत्वा उपर्येव तिष्ठन् अग्रे गमनार्थमुद्यतः नीलमेघश्यामं विश्वजीवनं भगवन्तं स्वमित्रं ज्ञात्वा सुहृदमभ्यवर्षत्सुमनोभिः पुष्परूपैः स्वबिन्दुभिः। अर्थात् पुष्पैः पूजितवान्। न केवलं पूजामेव कृतवान्, किन्तु राज्यमपि दत्तवानित्याह आतपत्रं दधदिति। न केवलं राज्यमेव दत्तवान्, किन्तु आत्मनिवेदनमपि कृतवानित्याह छाययेति। सूर्ये अधःस्थिते उपरिस्थितेन न छाया भवतीति पृथक् छायानिर्देशः॥ १२॥ १३॥

उत्तमांस्त्रिविधान् वक्तुं तेषामपि वेणुनादेन किञ्चिद् जातमिति वक्तुं वेणुनादं वर्णयति, भगवन्तं च, विविधगोपचरणेष्विति युग्मत्रयेण। सन्देहो मोहः सर्वपरित्यागश्च ज्ञानिनां श्रुतीनामरण्यवासिनां वेणुनादेन कृतः। तत्र ये विश्वगुरवो ब्रह्मादयस्तेषामपि सन्देहार्थं भगवतो वेणुनादं वर्णयति विविधेति।

**विविधगोपचरणेषु विदग्धो वेणुवाद्य उरुधा निजशिक्षाः।**
**तव सुतः सति यदाधरबिम्बे दत्तवेणुरनयत् स्वरजातीः॥ १४॥**
**सवनशस्तदुपधार्य सुरेशाः शक्रशर्वपरमेष्ठिपुरोगाः।**
**कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वाः॥ १५॥**

लोके जायमानः अलौकिकप्रकारः सन्देहमुत्पादयति। ननु न तद्रूपमीश्वरे यन्न वेदे श्रुतमस्तीति सर्वविद्यास्थानानां ब्रह्मा अभिज्ञ इति कथं तस्य सन्देह इत्याशङ्क्याह वेणुवाद्य उरुधा निजशिक्षा इति। सुशिरभेदो वेणुः। तस्यापि प्रकाराः शास्त्रे निरूपिताः। ते ब्रह्मणा ज्ञायन्ते। एते तु प्रकाराः उरुधानेकधा। निजशिक्षाः निजेनैव शिक्षा

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

धर्मस्तथेच्छा स्यात् किञ्चिदुद्गम एव स' इति वाक्यात् सुखधर्म इच्छा। अत्र हर्षकथनेन धर्मिणोप्युद्गम उक्त इति महत्त्वमुक्तम्। अनुरणनमिति। यथा नूतनगृहे प्रतिध्वनिर्जायते, तथेत्यर्थः।

विविधेत्यस्याभासे। उत्तमानिति। याथात्म्यज्ञानाभावात्तामसत्वम्। भक्ति-

१४-१५. हे सति, गोपोनी विविध रमतोमां निपुण आपना पुत्र ज्यारे सूर्यवत् प्रकाशक अधरपर वेणुधरीने शास्त्रमां नहि निरूपण करेला एवा, जेना अनेक रीते अभिव्यक्तिप्रकार पोतेज शीखवेला छे, एवा, षड्जादि स्वरोना नूतन जातिभेद उत्पन्न करे छे, त्यारे सुरेशो, जेओमां सात्त्विक इन्द्र, जे सर्वदा गानमां उत्सुक छे; तामस शिव, जे नादशास्त्रकर्ता छे, राजस ब्रह्मा जे ए बधानेना गुरु छे, एओ मुख्य छे, तेओ त्रणे कालमां आवीने बाह्य अभिनय दर्शावता पोतानी डोक नीची नमावे छे, अने चित्त लगाडी श्रवण करे छे, अने नादमां निपुण छतां, अलौकिक नाद नहि समजवाथी चिन्ताथी मूर्छित थई जाय छे.

शिक्षणं अभिव्यक्तिप्रकारा यासु। अनेन नादब्रह्म नित्यमिति निरूपितम्। तत्र क्रियाशक्तिः साधनमिति तस्य लौकिकत्वे कथं नादः अलौकिको भविष्यतीत्याशङ्क्य तस्याप्यलौकिकत्वायाह। विविधेषु गोपचरणेषु गोपानां सञ्चारविशेषेषु विदग्ध इति। गोपसञ्चारा न वेदोक्ताः, किन्तु लौकिकाः। ब्रह्माण्डान्तरस्थिता अपि भवन्ति। ते न लोकेऽन्यत्र प्रसिद्धाः, नापि वेदे। भगवांस्तु सर्वत्रैव विदग्धः। अतोऽयं ब्रह्मा यं प्रकारं न जानाति, तमेव प्रकारं कृतवान्। ननु ब्रह्मसृष्टावाविर्भूतः कथं ब्रह्मणोऽप्यज्ञातं करोतीति चेत्, तत्राह तव सुत इति। यशोदां प्रति वदन्ति, स्त्रीमण्डले समागताम्। अत एवात्र न कामादिवार्ता, किन्तु अनिषिद्ध एवोत्कर्षो निरूपितः। यथा तव पुत्रोऽपि सन् तव मनसाप्याकलयितुमशक्यं करोति, तथा ब्रह्मणोऽपि ब्रह्माण्डे जातः। सतीति सम्बोधनं विश्वासार्थम्। अज्ञाने हेतुमाहुः अधरविम्बे दत्तवेणुरिति। लोभात्मकोऽधर इति पूर्वमुक्तम्, अतो न लोके प्रसिद्धः। तस्य रसो भगवता न दत्त इति। तत्रापि विम्बरूपः सूर्यवत् प्रकाशकः। न हि प्रकाश्याः प्रकाशकस्वरूपं विदुः। तत्र च स वेणुः स्थापितः, ततोऽप्युत्तमत्वख्यापनाय। स्वरजातीः षड्जादिस्वरजातिभेदान्। अनयत् नूतनत्वेनोत्पादितवान् यर्हि, तदा तत्परिज्ञानार्थं त्रिगुणप्रधाना अपि देवाः कालत्रयेऽपि समागत्य। सोऽपि कालः आधिदैविक इति ख्यापयितुं सवनपदम्। तं वेणुनादं सवनश उपधार्य। शक्रः सात्त्विकः, शर्वस्तामसः, परमेष्ठी राजस इति ते पुरोगमा येषां देवानाम्। सर्व एव देवास्त्रिगुणात्मका भवन्ति। कवयो निपुणा अपि नादे। इन्द्रो हि त्रैलोक्याधिपतिः सर्वदा नादपरः। शर्वस्तु नादशास्त्रकर्ता। परमेष्ठी तयोरपि गुरुः। अत एव परमेष्ठिपदम्। तेषामन्यचित्ततामावायाह आनतकन्धरचित्ता इति। आसमन्तान्नता कन्धरा बाह्याभिनयार्थं चित्तं च येषाम्। ग्राहकं चित्तम्। नमनमत्र सर्वतः। तेऽप्यनिश्चिततत्त्वा जाताः। नाप्यौदासीन्येन कियत्कालं विचार्य अज्ञाने तूष्णीम्भूता इति मन्तव्यम्। यतः कश्मलं ययुः, चिन्तया मूर्च्छिताश्च जाताः। वेणुनादेन वा मोहिताः। अत एव आभासत्वप-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

मार्गे तु सगुण एवेत्युत्तमत्वम्। व्याख्याने। अनेनेति। ब्रह्मणोऽज्ञानकथनेनेत्यर्थः। ततोपि पूर्वसिद्धत्वात्तस्याज्ञानमिति भावः। नूतनं त्वन्यज्ञानमपेक्ष्येति टिप्पण्यामुक्तमेव। क्रियाशक्तिरिति। अङ्गुलिचालनादिरूपेत्यर्थः। तस्येति। साधनस्येत्यर्थः। ते इति। द्वितीयब्रह्माण्डस्थिता अत्र लोके न प्रसिद्धाः। अयं ब्रह्मा त्वेतद्ब्रह्माण्डमात्रज्ञः। अतोऽत्र लोके प्रसिद्ध्यभावाद्वैदिकत्वाभावाच्च ब्रह्मणोऽज्ञानमित्यर्थः। अनिषिद्ध इति। मात्रादिनिषेधाविषय इत्यर्थः। न लोके प्रसिद्ध इति। अधर इति शेषः। तत्र हेतुं विवृण्वन्ति तस्येति। अधरस्य रसो भगवता कस्मैचिदपि न दत्त इत्यर्थः। उत्तमत्वेति। अधर एव ज्ञातुमशक्यश्चेत्, तत्र स्थापितः सुतरां तथा। तथा चाप्रमेयत्वख्यापनायेत्यर्थः। अयं सप्तमो युगलः। अतो मध्याह्नाभिप्रायेण सवनपदम्। आभासत्वेति। अयं नादाभासः। ग्राम्यो

क्षोऽपि निराकृतः । अलौकिकरसोत्पादकत्वात् ॥ १४ ॥ १५ ॥

अस्त्वन्येषां वार्ता । वेणुनादोऽस्माकमेवान्यथात्वं सम्पादयतीत्याहुर्द्वयेन पूर्ववत् निजपदाब्जदलैरिति ।

निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः ।
व्रजभुवः शमयन् खुरतोदं वर्ष्मधुर्यगतिरीरितवेणुः ॥ १६ ॥
व्रजति तेन वयं सविलासवीक्षणार्पितमनोभववेगाः ।
कुजगतिं गमिता न विदामः कश्मलेन कबरं वसनं वा ॥ १७ ॥

यर्हि ईरितवेणुः सन् व्रजति, तदा तेन नादेन कुजगतिं स्थावरत्वं गमिता वयं गोप्यः सर्वा एव कश्मलेन मूर्च्छया वसनं परिहितं केशपाशं वा न विदाम इति सम्बन्धः। अयं वेणुनादोऽस्मदर्थमेव जायत इति तस्य चेष्टया अनुभवाच्च ज्ञायते । तत्र चेष्टायां गोकुलनिवासिनामेवार्थे जायते, तया व्यासः कथमन्यकार्यं कुर्यात् । अतः प्रथमं भगवतो गोकुलहितकर्तृत्वमाहुः । निजस्य स्वस्यैव यत्पदाब्जद्वयं तस्य दलैः दशाङ्गुलीभिः तलभागैर्वा । व्रजभुवः निरन्तरं पश्वाक्रमणेन जातव्यथायाः व्रजभूमेः खुरैर्जातं तोदं शमयन्निति शनैः शनैर्लीलया भगवद्गतिर्निरूपिता । क्षतांशः गतिविलासेन पादस्पर्शेन निराकृतः । आध्यात्मिकाद्यंशस्तु ध्वजादिना । तामसः भौतिकः ध्वजेन निराक्रियते ।

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नादः । अतो महतामप्रवृत्तिरिति पक्षो नादस्य मोहरूपकार्यकर्तृत्वान्निराकृतः । एवं सत्यज्ञाने हेतुमाहुः अलौकिकेति । अतोऽज्ञानम्, न तु नादे न्यूनतेति भावः । अस्माकमेवेति अधररसाभिज्ञानामिति शेषः ।

निजेत्यत्र । भगवत्कृतस्य तद्विचारितमेव प्रयोजनं सिध्यतीत्यस्मदर्थं तथा करणाभावेस्माकं नादरसानुभवो न स्यादित्याशयेनाहुः अनुभवाच्चेति । गोकुलवासिनामिति। भूमेस्तोदप्रशमनं तत्र तद्वासिभिः सह क्रीडार्थमेवेति भावः । प्रथममिति । गोगोपिकाहितात् प्रथममित्यर्थः । गोकुलेति । गवां कुलानि यत्र तादृशस्थलस्येत्यर्थः । तलभागैरिति । तलस्थितैर्भागैरंशैश्चरणाङ्गुलीभेदभिन्नैरित्यर्थः । शनैःशनैरिति । व्यथाशमनं तादृशगत्यैव भवतीति भावः । क्षतांश इति । समुदितस्य समुदितेन निराकरणम् । तदंशानां तदंशैर्ध्वजादिभिरित्यर्थः । तामस इत्यादि । ध्वजस्य निर्भयतासूचनार्थकत्वादे-

---

१६-१७. ध्वज, वज्र, कमल, अंकुशना विविध चिह्नोवाळा पोताना चरणरूप कमलपत्रोथी व्रजनी भूमिनी, निरंतर पशुनी गतिथी थती व्यथाने शमावता, धीरे गोपबाळो तथा गायो साथे लीलाथी गति करता ( गायोनी व्यथा टाळता ), वेणु वगाडता, ( गोपीओनी व्यथा टाळता ), ज्यारे भगवान् पधारे छे, त्यारे विलासवाळा दृष्टिपातथी कामदेवनो वेग समावतां भरे छे, तेथी अमे वृक्षनी जेवी स्तब्ध थई बेठां छीए, अने मूर्छाने लीधे वस्त्रनुं के केशनुं भान रहेतुं नथी.

१. भीरवाङ्कुशैरिति पाठः । २. गोगोपिकान्वः इति पाठः ।

राजस आध्यात्मिको वज्रेण । सात्त्विक आधिदैविकः नीरजाकृतिचिह्नेन । तान्येव विचित्राणि ललामानि पदेषु । तेन लौकिकालौकिकप्रकारेण व्रजभुवः खुरतोदप्रशमनम् । व्रजे तिस्रः प्रधानभूताः । भूमिः गावो गोप्य इति । तत्र भूमेर्दुःखनिवृत्तिं गत्या निरूप्य, गत्या कृत्या च गवां दुःखं निवारयतीत्याह वर्ष्मधुर्यगतिरिति । वर्ष्मधुर्यो महावृषभः ककुद्मी, स यथा लीलया मन्थरगतिः, तथा गच्छन् गवामपि दुःखहारीव निरूपितः । ईरितवेणुर्व्रजतीति । गोपिकानां तदास्माकं वेणुनादेन जाते कामे स्थावरत्वमधिकं जातमित्याहुः तेनेति । स्वभावत एव वेणुनादेन जातः कामः । तत्रापि सविलासवीक्षणेन अर्पितो मनोभववेगो यासु । अतो वेगेन स्तम्भे जाते कुजगतिं वृक्षगतिं गमिता जाताः । तेषामन्तर्ज्ञानमस्तीति तदर्थमाहुः न विदाम इति । सुषुप्तावपि न जानन्तीति तद्व्यावृत्त्यर्थमाह कश्मलेनेति । कश्मलेन मूर्च्छया । स्त्रीणामत्यावश्यकं वसनज्ञानं कबरज्ञानं च । वेणुनादप्रस्तावे एवैतज्जातमिति गतिदृष्ट्यादिभिरपि कृतमत्र निरूप्यते ॥ १६ ॥ १७ ॥

हरिणीनां वेणुनादेन यथा जातं तद्वक्तुं पूर्ववद्वेणुनादं वर्णयन्ति **मणिधर** इति द्वाभ्याम् ।

**मणिधरः क्वचिदागणयन् गा मालया दयितगन्धतुलस्याः ।**
**प्रणयिनोऽनुचरस्य कदांसे प्रक्षिपन् भुजमगायत यत्र ॥ १८ ॥**
**क्वणितवेणुरववञ्चितचित्ताः कृष्णमन्वासत कृष्णगृहिण्यः ।**
**गुणगणार्णमनुगत्य हरिण्यो गोपिका इव विमुक्तगृहाशाः ॥ १९ ॥**

गवामाधिदैविकानि रूपाणि मणयः । तान् स्वस्मिन् बिभर्तीति मणिधरः । अभिज्ञानार्थं वा । स्वप्रियाणामभिज्ञापका मणयः । अतस्तैः कदाचिद् गाः आसमन्ताद् गणयन् जातः । अनेन ताः तद्गतधर्माश्च भगवत्येव प्रतिष्ठिता इति तासां संसाराभावः

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्यानीककृतपीडासंभावनया जनितो दुःखांशस्तेन निराक्रियते । वज्रस्य पापपर्वतनिराकरणार्थकत्वात् पापसंभावनाजनितो दुःखांशस्तेन निराक्रियते । नीरजस्य सुखसेव्यतासूचनार्थकत्वात् सेवायां दुःखसंभावनया जनितो दुःखांशस्तेन निराक्रियत इत्यर्थः । लौकिकालौकिकेति । दृष्टादृष्टप्रकारेणेत्यर्थः ।

मणीत्यत्र । गवामिति । यद्विधानि गवां रूपाणि, तत्तद्विधा मणयो वैजयन्त्यां स्थापिताः । अतो मणय आधिदैविकानि देवसम्बन्धीनि गवां स्वरूपाणीत्यर्थः । अत इति । गवाधिदैविकत्वादित्यर्थः । ता इति । आधिदैविक्यस्ता नीलत्वादितद्धर्माश्चेत्यर्थः ।

१८–१९. मणिधर भगवान् क्वचित् मणिओथी पोतानी प्रिय गायोनी गणत्री करे छे, अने पोताने प्रिय तुलसीनी गंधवाली माला धारण करे छे, अने कदाचित् अति प्रेमवाला अनुचरना असपर हस्त मुकीने गान करे छे, त्यारे आकस्मिक मनोहारि वेणुरवथी जेमनुं चित्त वंचित थई जाय छे, एवी कृष्णसार मृगनी गृहिणीओ कृष्णनी गृहिणीओ थई जाय छे, कृष्णपासे आवीने बेसे छे, गुणसागररूप भगवान्‌नी पाछल जाय छे, गोपीओनी माफक घेर जवानी आशाने छोडीने भगवत्पर थई जाय छे.

सूचितः । अत एव गोपिकानामपि । अत एव हरिणीनामपि । पशुत्वाविशेषाद् ग्राम्याणां चेदुद्धारकः, विशेषत आरण्यानां भविष्यतीति युक्ता कृष्णपरता । मालया दयितगन्धतुलस्या उपलक्षितः । यथा भगवतो नीलं रूपं प्रियम्, स्पर्शः स्त्रीणाम्, शब्दो वेणोः, रसो नवनीतस्य, तथा गन्धस्तुलस्याः । तद्गतोत्तमता सात्त्विकानां केषाञ्चिदनुभवसिद्धा । तादृशी तुलसी । अतस्तस्या मालां बिभर्ति । अतो यदा वयमपि प्रिया भविष्यामः, तदा अस्मानपि अस्मद्धर्मान् वा धारयिष्यतीति कृष्णसारस्त्रीणां प्रवृत्तिः । कृष्णसारस्तु वेदे नियुक्त इति भक्तौ तासां विनियोगार्थं प्रवृत्तिः । किञ्च । प्रणयिनोऽतिप्रेमवतः, अनुचरस्य गोपस्यांसे भुजं प्रक्षिपन्निति । कदा कदाचित् । 'आशंसायां भूतवच्चे'ति वा कदा अगायतेति मध्ये गानाशंसा । यथा गोपालस्य तथा स्नेहसेवाधर्मयोः सद्भावे एवं भविष्यतीति गोपिकानामिव हरिणीनामपि तथात्वाय स्नेहभजनम् । देहास्फुरणात् न विजातीयत्वेन कामाभावः । तदैव क्वणितो यो वेणुः । आकस्मिकः शब्दविशेषो मनोहारी क्वणनात्मकः । स चेद्वेणोर्निर्गतः, तत्सम्बन्धादन्येऽपि शब्दाश्चित्तवञ्चका इति रवपदम् । शब्देन मृगाणां वशीकरणं सिद्धमेव । इदानीमेवोपयोगो भविष्यतीति प्रतीतिजननाद्वञ्चकत्वम् । अतो रवेण वञ्चितचित्ताः कृष्णमन्वासत । कृष्णसमीपे आसत उपविष्टा जाताः । यथा प्रायमुपविशति, एवं कृष्णमनूपविष्टाः । ननु स्त्रियोऽन्यस्य कथमन्यस्य गृहेऽन्यस्य समीपे उपविष्टा इति, तत्राह कृष्णस्य कृष्णसारस्य गृहिण्य इति । कृष्ण इति तास्तस्य गृहिण्यो जाताः । वञ्चितचित्तत्वाद्वा रूपं विस्मृत्य शब्दमात्राभिनिविष्टा जाताः । वेणुनादेन वा सानुभावेन कृष्णसारेऽपि कृष्णमत्या कृष्णमेवान्वासत । ननु कृष्णसारेऽपि कृष्णभ्रमात् शब्दोऽपि वर्तेत इति तं परित्यज्य कथमागता इत्यत आह गुणगणार्णवमिति । कृष्णसारे एको द्वौ वा गुणौ । अतो यत्रैव भगवान् गच्छति, तत्रैव तमनुगत्य सर्वा एव हरिण्यो

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

एवमेव द्वितीयपक्षेपीत्याशयेनाहुः गोपिकानामिति । अत एव हरिणीनामिति । गवाधिदैविकधारणादित्यर्थः । नीलं रूपमित्यादि । आनन्दस्य नीलरूपत्वात् स्त्रीवेण्वोश्च सुधाधारत्वान्नवनीतस्य पीयूषपातृगोदुग्धसारत्वात्तुलसीगन्धस्य च दिव्यत्वव्युत्पादनादिति भावः । अतो यदेति । प्रियत्वेन हेतुना तुलसीमालाधारणादित्यर्थः । अत्रैव हेत्वन्तरं समुच्चिन्वन्ति किञ्चेति । प्रणय्यंसे भुजप्रक्षेपादप्यस्माकं प्रणयित्वेऽस्मद्धारणमित्यर्थः । एवं भविष्यतीति । अस्मानस्मद्धर्मान्वा धारयिष्यतीत्यर्थः ।

क्वणितेत्यत्र । स चेदिति । रवस्यानुरणनरूपत्वात् पूर्वस्य चित्तवञ्चकत्वे उत्तरस्यापि तथात्वाय रवपदमित्यर्थः । कृष्णमत्येति । 'सा सा सा से'ति प्रकारिकयेति भावः । तथापि भगवान् पूर्णगुणः, 'आनन्दादयः प्रधानस्ये'ति न्यायादिति भावेनाहुः नन्वित्यादि । गुणगणार्णमित्यत्र गुणानामर्णः आसमन्तादर्णं जलं यत्र समुद्र इत्यर्थः ।

१. रसानुभवेनेति पाठः ।

विमुक्तगृहाशा जाताः । गृहं गमिष्याम इत्याशामपि त्यक्तवत्यः । ( सान्निध्येन भगवद्रसः पीत इति लब्धस्वादुभावाः गोपिका इव तदेकपरा जाताः । एतन्नयनेषु स्वप्रियानयनसादृश्यदर्शनेन यादृशेन भावेन ताः पश्यति, तादृशेनैवैता अपि पश्यन्तीति, एतासामपि तत्सजातीयभावोत्पत्तिः, तथैव वेणुक्वणनं च । अत एवाश्विबीजामृतबीजात्मकं स्वपदमुक्तम् । यतस्तच्छ्रवणेऽत्यार्तिस्तत्तापशमनं च सम्पद्यते । अतः स्वदृष्टान्तोक्तिर्युक्ता ॥१८॥१९॥)

एवं नवप्रकारेण वेणुनादं निरूप्य, गुणातीतप्रकारेण त्रिधा निरूपयन् वेणुनादेन भगवान् जगदेव वशीकृतवानित्याह कुन्ददामेति द्वाभ्याम् ।

**कुन्ददामकृतकौतुकवेशो गोपगोधनवृतो यमुनायाम् ।**
**नन्दसूनुरनघे तव वत्सो नर्मदः प्रणयिनां विजहार ॥ २० ॥**
**मन्दवायुरुपवात्यनकूलं मानयन् मलयजस्पर्शेन ।**
**वन्दिनस्तमुपदेवगणा ये वाद्यगीतबलिभिः परिवव्रुः ॥ २१ ॥**

यर्हि भगवान् यमुनायां विजहार, तत्रापि पूर्वोत्तरदशायामपेक्षितो वेणुनादः परिगृह्यते, प्रकरणित्वात्, प्रकारविशेषाभावाच्च न पृथगुक्तः, तदा उपदेवगणाः परिवव्रुरिति सम्बन्धः । यमुनायामिति सामीप्यसप्तमी । अधिकरणसप्तमी वा । घर्मे गवां गोपालानां च जले स्थितिः सम्भवति । तत्र विहारो गोपैः सह जलक्रीडा । गवां प्रक्षालनादिः । सर्वत्रोद्वेगशान्त्यर्थं वेणुनादः सहकारी । तदानीमनलङ्कृतत्वमाशङ्क्य अलङ्कारमाह कुन्ददामेति । वस्त्राभरणाद्यलङ्कारा भविष्यन्त्येव, पुष्पालङ्कारा न भविष्यन्तीत्याशङ्क्य तदेव निरूप्यते । कुन्ददाम्ना कृतः कौतुकवेशो यस्य । दामान्यनेकप्रकाराणि । तैस्तथा वेशो निर्मीयते । यथा अत्यद्भुतो भवति । अत्र तु यथैव हास्यरस उत्पद्यते, तथैव निर्मीयत इति । नन्वेतादृशीं प्राकृतलीलां भगवान् कथं कृतवानित्याशङ्कायामाहुः नन्दसूनुस्तव

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कुन्देत्यत्राभासे । जगदेवेति । 'वायुर्वाव गोतम तत्सूत्र' मित्यादिना वायोः सर्वमूलत्वकथनात् तस्य वश्यतया जगदेव वशीकृतं जातमिति भावः । व्याख्याने । पूर्वोत्तरेति । कौतुकवेशकरणे विहारे चेत्यर्थः । पुष्पालङ्कारा न भविष्यन्तीति । प्रातः शृंगारसमये धृता म्लानतयोत्तारिता भविष्यन्त्यतो न भविष्यन्तीत्यर्थः । दाम्ना कृत इति । कृतपदेन पुष्पालङ्कारा अन्ये पुनर्धृता इत्युक्तम् । दामान्यनेकेति । अङ्गदादिप्रकाराणीत्यर्थः । तथावेश इति । शृंगाररसोपयोगिवेश इत्यर्थः । अत्र त्विति । कौतुकपदाद्धास्यरसोपयोगी वेशोऽत्रोच्यते इत्यर्थः । प्राकृतलीलामिति । प्राकृतानां ग्राम्याणां

२०–२१. हे निष्पाप यशोदा ! डोलरनी मालाथी जेमणे कौतुक वेश धारण कर्यो छे, गोप अने गोधनथी विंटायला छे, एवा नंदकुमार, तमारा वत्स, स्नेहीओने आनंद आपनार, यमुनाजीना तटपर वेणुवादनक्रीडा, नृत्यक्रीडा, अने जलक्रीडा करे छे, त्यारे मंद वायु मलयाचळना स्पर्शसहित अनुकूलरीते अने पोताना मंदता, शैत्य अने सौरभ, त्रणे गुणवडे सन्मान करतो थाय छे, तथा गन्धर्व वगेरेना समूहो कीर्तिनिरूपक बंदीजनोनी माफक वाद्य, गीत अने पूजाना साधनोसहित फरी वळे छे. १. प्रभूणा स्वतंत्रः ? ।

वत्स इति । यया लीलया नन्दपुत्रो भवति, तथैव लीलया प्राकृतलीलामपि सम्पादयति । अनघ इति सम्बोधनं क्रोधाभावाय विश्वासार्थं च । तत्र च वत्सो जातः । अनेन त्वं गोरूपेति सर्वगुणरसानभिज्ञत्वं सूचितम् । अन्यथा उलूखलबन्धनलीलां न कुर्यात् । मध्ये निर्दोषत्वेन सम्बोधनादुभयोर्निर्दोषत्वं ज्ञाप्यते । तादृश्या वत्सत्वेन भगवत्यपि तथा । पूर्णगुणत्वलक्षणमाधिक्यं चोच्यतेऽग्रिमविशेषणेन । किञ्च, प्रणयिनां नर्मदः । ये केचन स्नेहयुक्ताः, यथैव ते स्निग्धा भवन्ति, तथैव लीलां करोतीति । अनेन सर्वत्रैव हेतुरुक्तः । यत्रैव लीलासक्त्या क्रीडा, स विहारः । सोऽत्र जलक्रीडा नृत्यक्रीडा वेणुवादनक्रीडा च ज्ञेया । अन्यथा वाद्यादीनामुपयोगो न स्यात् । विद्यावन्तो हि वशीकर्तव्याः । तत्र विद्योत्पादको वायुः । देवाश्च तदाधारभूताः । तत्राप्युपदेवगणा वन्दिनश्च बहिर्विद्याप्रकटनपराः । अतोऽन्यापेक्षया तेषु विशेष उक्तः । प्रथमतः कारणभूतं वायुं निरूपयन्ति । मन्दो वायुः अनुकूलं यथा भवति, तथा उपवातीति । अनुकूलं कुलसमीपे हितं च । अनेन शैत्यं निरूपितम् । मलयजस्पर्शेन सहित इति सौरभ्यम् । अनेन दाक्षिणात्योऽयं वायुरिति निरूपितम् । भगवत्स्वरूपे दत्तेन वा मलयजेन सहभावादधिकशैत्यनिरूपकत्वेन अनुकूल-

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

लीलमित्यर्थः । यया लीलयेति । द्वादशाध्याये 'एवं निगूढात्मगति'रिति श्लोके विडम्बनार्थं गोपात्मजत्वं ग्राम्यलीला चेति निरूपितम् । तथाच यया विडम्बनलीलया हेतुभूतयेत्यर्थः । क्रोधाभावायेति । व्रजराजकुमारस्य गोप्रक्षालनादिकार्यकथने क्रोधोऽविश्वासश्च संभवति, अत इदं संबोधनमनघायास्तया न भवतीति भावः । तत्र चेति । यया लीलयेति पूर्वोक्तमनुवर्तते । अन्यथेति । गुणरसज्ञाने भगवन्माहात्म्यं ज्ञात्वा तथा न कुर्यादित्यर्थः । उभयोरिति । नन्दयशोदयोरित्यर्थः । पूर्वविशेषणेन नन्द उक्तोऽग्रिमविशेषणे तवेत्यनेन यशोदोक्तेति ज्ञेयम् । पूर्णगुणत्वेति । प्रणयिसुखदानं पुरुषोत्तमधर्मत्वात् पूर्णो गुण इति भावः । अयं तात्पर्यार्थ उक्तः । वाच्यार्थमाहुः किञ्चेति । नन्दसूनुत्वं प्राकृतलीलायां हेतुरुक्तः । प्रणयिसुखदातृत्वं च हेतुरिति समुच्चयः । सर्वत्रैवेति । नन्दसूनुत्वेपीत्यर्थः । अन्यथेति । जलक्रीडामात्रकथने इत्यर्थः । तत्रेति । विद्यासाध्यत्वात् ज्ञानस्यापि विद्यात्वम् । तथाच विद्यावत्सु विद्योत्पादको गानोत्पादक इत्यर्थः । मैत्र्युपनिषदि-'मनः कायाग्निमाहन्ति स प्रेरयति मारुत'मित्यादि प्रकारेण शब्दोत्पत्तिनिरूपणात्, सङ्गीतशास्त्रे च तथा निरूपणादिति भावः । तदाधारभूता इति । गानाधारभूता गायका इत्यर्थः । बहिर्विद्येति । देवेष्वपि मध्ये एते बहिर्गत्वा सर्वत्र जीविकार्थं विद्यां प्रकटयन्तीत्यर्थः ।

मन्देत्यत्र । प्रथमपक्षमाहुः अनेनेत्यारभ्येति निरूपितमित्यन्तेन । द्वितीयपक्षे मलयजेत्यनेन शैत्यं सौरभ्यं च निरूपितमित्याहुः भगवदिति । अतोनुकूलत्वं हितत्वमि-

त्वम् । मलयजस्पर्शः मलयजस्येव वा स्पर्शः । तथा सति तत्रत्यानां सर्वेषामेव भगवद्भावं सम्पादयिष्यतीति । मानयन्निति । स्वकीयैस्त्रिभिर्गुणैः यथैव सन्माननं भवति, तथैव वातीत्यतिवश्यता। उपदेवगणाश्च गन्धर्वादयश्च वन्दिनः कीर्तिनिरूपका जाताः। गायकाश्च सन्तः । य इति भगवदीयाः । वाद्यगीतपूजासाधनैः तामसराजससात्त्विकैः सहिताः परिवव्रुः । सर्वत्रैवापेक्षितं कृतवन्तः ॥ २० ॥ २१ ॥

एवं गुणातीते प्रकीर्णतां निरूप्य युगलद्वयेन केवलं भगवत एव चरित्रमाहुः वत्सल इति ।

**वत्सलो व्रजगवां यदगध्रो वन्द्यमानचरणः पथि वृद्धैः ।**
**कृत्स्नगोधनमुपोह्य दिनान्ते गीतवेणुरनुगेडितकीर्तिः ॥ २२ ॥**
**उत्सवं श्रमरुचापि दृशीनामुन्नयन् खुररजश्छुरितस्रक् ।**
**दित्सयैति सुहृदाशिष एष देवकीजठरभूरुडुराजः ॥ २३ ॥**

भगवान् यद् गोकुलं गोष्ठे समानयति, तत् कृपया। अन्यथा एकस्यामपि लीलायां व्यापृता गावो मुच्येरन् । तथा गोपिकाः। परं कृपयैव भजनानन्दानुभवार्थं तथा करोति। अत्र हेतुः यदगध्र इति । यद् यस्मात् कारणात् अगं पर्वतं धारयतीति । यदि भजना-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

त्यर्थः । आद्यपक्षे मलयजसम्बन्धी स्पर्शः । अतः सुरभिरित्यर्थः । द्वितीये तत्सदृशः स्पर्शः । अतः शीतः सुरभिश्च वायुरित्यर्थः । तथासतीति । आद्यपक्षे भगवतोपि भावोद्बोधकः । द्वितीये तत्रत्यानामन्येषामेवेत्यर्थः । गायकाश्चेति । चकाराद्वादकाः पूजकाश्च । वाद्यादिसाहित्यकथनेन तादृशाः सन्तः परिवव्रुरित्यर्थः संपन्न इत्यर्थः । एतदेव स्फुटयन्ति वाद्येति । गुणातीते इति । निरूप्ये गुणातीतप्रकारत्रये तद्विशेषं प्रकीर्णताप्रकारं निरूप्येत्यर्थः । अत्र भावभेदात्प्रकीर्णानां भेदः । स्वरूपतो भेदस्तु प्रायिक इति पूर्वमपि निरूपितमतो निरूप्य आहुरिति समानकर्तृकत्वमिति ज्ञेयम् ।

वत्सल इत्यत्र । वात्सल्यं विवृण्वन्ति भगवानिति । व्रजगवामित्यत्र विषयता षष्ठ्यर्थः । तथाच तद्विषयकवात्सल्ययुक्तः । व्रजस्य गवां चोपरि वत्सलः प्रीत इत्यर्थः । अन्यथेति । तादृशकृपाऽभावे इत्यर्थः । व्रजपदस्य गोपिकावाचकत्वाशयेनाहुः तथा

२२–२३. जेम भजनानंदनुं दान करवाने गिरिराज धारण कर्यो, तेम व्रजनी गायोपर कृपा करीने गोष्ठमां आणे छे, रस्तामां निपुण ज्ञानीओ भगवान्ना चरणने वंदन करे छे, समग्र गोधनने पासे आणीने दिनने अंते वनमां रहेवुं योग्य न होवाथी, पोते बीजी लीला करवानी इच्छा होवाथी, वेणु वगाडे छे, सेवको तेमना यशनुं गुणगान करे छे, श्रमनी कांतिथी व्रजवासीओनी दृष्टिने उत्सव करता, सर्व सुहृदने सर्व आशीर्वाद आपवानी इच्छाथी पधारे छे, गायोनी खरीओनी रजथी माला व्याप्त थई जाय छे, पोते अदिति–आकाश–ना अवताररूप देवकीजीना उदरमां प्रकट थयला चन्द्र छे, पण चन्द्र जेम पति नक्षत्रोनो छे, तेम पतिरूपे आनंद तो अमनेज आपे छे.

नन्दं न दद्यात्, तदा गोवर्धनोद्धरणं न कुर्यात्। एतद्भगवन्माहात्म्यं सर्वजनीनमिति ज्ञापयितुमाह पथि वृद्धैर्वन्द्यमानचरण इति। वृद्धाः सर्वतो निपुणाः। वृद्धैरेव भगवान् सेव्यो भवति। अतः कृत्स्नमेव गोधनमुपोह्य, ततः पृथक्कृत्य, उप समीपे समाहृत्य वा। दिनान्त इति। अग्रे वनस्थितेरयुक्तत्वात्। लीलान्तरस्य च चिकीर्षितत्वात्। गीतवेणुर्जातः। श्रमापनोदनार्थं व्रजस्थानां ज्ञापनार्थं च। अस्य नादस्याग्रे कार्यं वक्तव्यम्। गोपिका एव कृतार्थाः करोतीति न, किन्तु गोपानपीति ज्ञापयितुं तत्कृतस्तोत्रमाह अनुगेडितकीर्तिरिति। अनुगैः सेवकैरीडिता कीर्तिर्यस्य। अनेन रात्रौ तेषामपि गानमुक्तं भवति। यथा दिवसे गोपिकानाम्। अन्यथा सर्वेषां निरोधो न भवेत्। एतादृशस्य कार्यं स्वयमेव जानातीति स्वयमेव करोतीत्याहुः उत्सवमिति। श्रमरुचा व्रजस्थदशां उत्सवमुन्नयन् आशिषो दित्सया एतीति सम्बन्धः। श्रमयुक्ता रुक् कान्तिः। भगवतः श्रमाभावपक्षे प्रदर्शनमात्रपरत्वम्। अस्ति श्रम इति सिद्धान्तः। 'भर्तो सन् भ्रियमाणो बिभर्ति' 'एको देवो बहुधा निविष्टः' 'यदा भारं तन्द्रयते स भर्तु निधाय भारं पुनरस्तमेतीति' श्रुतेः। सर्वधर्माश्रयत्वाच्च। विरुद्धसर्वधर्माश्रयत्वादश्रान्तोऽपि। न तु केवलमश्रान्त एव। श्रमः सुखकारक इत्यपरे। तत्सम्बन्धिनी रुक् श्रमरुक्। सा नायकगता स्त्रीणां न हितकारिणी। तथाप्यस्माकं हितकारिण्येव जातेत्याहुः दृशीनामुत्सवमुन्नयन्निति। दृशिर्दर्शनम्। यदि भगवान् श्रान्तो न भवेत्, तदा शीघ्रं गच्छेत्। तदा दृष्टीनां परमानन्दसन्ततिर्न स्यात्। ऊर्ध्वं नयन्निति संघाते दृष्टीनां य आनन्दः स्थितः यावान्, तदपेक्षयाधिकं कृतवानित्यर्थः। भगवत्कीर्तेः सर्वपुरुषार्थदातृत्वाय प्रकारं वदन् श्रममुपपादयति खुररजश्छुरितस्रगिति। गोखुररजोभिश्छुरिता व्याप्ताः स्रजो माला यस्य। वायुवशादुद्धतो रेणुः न स्थिरो, नापि नियतः। खुरजातस्तु तथा। खुराणामेव गोत्वात् प्रकृतत्वाच्च न

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

गोपिका इति। एतदिति। गोवर्धनधरणरूपं माहात्म्यमित्यर्थः। तत इति। वनलीलातः पृथक्कृत्येत्यर्थः। लीलान्तरस्येति। निशि वने स्वामिनीभिः सह लीलायाश्चिकीर्षितत्वादित्यर्थः। अस्य नादस्येति। अग्रिमयुगले दिनतापमोचनं कार्यमित्यर्थः।

उत्सवमित्यस्याभासे। स्वयमेवेति। नतु नादेनेत्यर्थः। व्याख्याने श्रमः। अश्रांतत्वात् रुक्च। अत उक्तं श्रमयुक्ता रुगिति। सुखात्मकत्वपक्षमाहुः तत्संबन्धिनी रुगिति। दृष्टीनामिति। दर्शनानां संबन्धिनी दर्शनजनिता परमानन्दसंततिः, नेत्राणामिति शेषः। तथाच मूले दृशीनां संबन्धिनं नेत्राणामुत्सवमित्यर्थः। भगवत्कीर्तेरिति। कीर्तिरूपायां स्रजि पुरुषार्थानां वक्ष्यमाणत्वात् स्रजि पुरुषार्थस्थापनप्रकारेण तद्दानमित्यर्थः। मालायां पुरुषार्थस्थापनं पुरुषार्थलीलानुभवार्थम्। तादृशलीलानुभवस्तु श्रमाभावे शीघ्रगमनान्न भवेदतः श्रमोस्तीत्युपपन्नमिति भावेन श्रमोपपादनमुक्तम्। स्रजो माला इति। कुन्ददामेत्यत्रानेकप्रकाराणामुक्तत्वाद्बहुवचनम्। खुराणामेवेति व्यावर्तक-

गोग्रहणम् । 'पशवो वा एकशफा' इत्यत्र तथा निर्णयात् । अनेन धर्मोऽयमिति निरूपितम् । रजोऽर्थः । व्याप्तिः काम इति । आगमनस्य तु यत् कार्यं तदाहुः । सुहृदां सर्वेषामेव सम्बन्धिनामाशिषः सर्वा एव देया इति । उक्तं गोपिकाद्वारा सर्वेष्वानन्दप्रवेश इति । एष इति प्रदर्श्याहुः । यतः स्वस्मिन् लीला ज्ञापिता भवति । साधारण्येन सर्वेषां तापनाशकत्वाय भगवद्गतमसाधारणं धर्ममाहुः देवकीजठरभूरुडुराज इति । 'अदितिर्देवकी अदितिर्द्यौरदीतिरन्तरिक्ष' मिति श्रुतेः अदित्यवतारत्वात् द्युरूपा सा । तस्यामवश्यं चन्द्रोदयोऽपेक्षित एव । सा पुनर्विशेषरूपं गृहीतवतीति चन्द्रोऽपि विशिष्टकार्यं करोति । लौकिकस्तापस्त्रिविधो भगवद्विरहजश्च । अयं त्रिविधमपि नाशयतीति पूर्वोक्तमानन्ददातृत्वमुपपादितम् । देवकीजठरे भवतीति देवकीजठरभूः । स एव उडुराजः । जायते, यथा उदयाद्रौ । पतिस्तु नक्षत्राणामेव भवति । तथा देवक्यां जातः, परं सुखदोऽस्माकमेव ॥

( अथवा, एतास्तु भगवद्विरहेणार्ता इति स्वाभिलषितप्रकारेण तदङ्गसङ्गव्यतिरेकेण नैतासामुत्सवो भवतीत्यार्ता एव स्थिताः । परं दृशीनां दर्शनं मुख्यमिति तेनैवोत्सवोन्नयनमुच्यते । तथा च आर्तानामस्माकं दृशीनामिति समासो ज्ञेयः । आर्तशब्दस्य ह्रस्वोऽपि छान्दसः । नहि दृशीनामेवार्तत्वमत्र विवक्षितम् । प्रकारान्तरेणापि तत्स्वरूपरसास्वादवत्यः स्वामिन्य इति सर्वेन्द्रियाणामेवार्तत्वसम्भवात् । तदैव सर्वत्रोत्सवे पुनराशिषोऽनमीप्सितत्वेनाग्रे तद्दित्सोक्तिरप्यनुपपन्ना स्यात् । दृशीनामुत्सवो बहिरेव । अन्तरुत्सवस्य त्वधिकरणं मनः, तस्यातृप्तत्वान्न स इदानीम्, परमग्रे सम्भोगसामयिकदर्शने भविष्यतीति ज्ञापनायोर्ध्वमित्युक्तम् । यथा गोप्यो 'दिदृक्षितदृशोऽभ्यगमन् समेता' इत्यत्र दर्शनानन्तरमपि दृशां दिदृक्षितत्वम्, एवमत्रापि ज्ञेयम् । अत एव दृशीनामिति । सम्बन्धषष्ठ्याप्युत्सवस्य तत्सम्बन्धित्वमेव प्राप्यते । तत्रापि भगवत्कर्तृकनयनोक्त्या तासां बहिरुत्सवोऽपि प्रियप्रापित इति तद्दर्शनस्वभावान्न स्वत इति बोध्यते । अत एवोत्सवकरणत्वं श्रमरुचोऽपि युज्यते । अन्यथा चिरादुत्कण्ठितानामासां प्रियतमागतश्रमनि-

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

धर्मस्यैव शक्यत्वमत्वादिति भावः । पशवो वेति । तत्र शफानामेवासाधारणधर्मत्वं निर्णीतमित्यर्थः । अनेनेति । गोत्वकथनेनेत्यर्थः । अयं खुर इत्यर्थः । आगमनस्य त्विति । पुरुषार्थत्रयं कीर्त्यङ्गत्वेन निरूपितमिति तद्व्युदासाय तुशब्दः । यत्कार्यं आशीर्दानं मोक्षरूपमित्यर्थः । स्वस्मिन् लीलेति । पुल्लिङ्गात् स्वस्मिन् भगवतीत्यर्थः । एतादृशः एष इति प्रदर्श्यते । लौकिकस्ताप इति । धर्मजनित इत्यर्थः । त्रिविध इत्याग्रिमेणान्वयः । आधिभौतिकादिभेदभिन्नो देहेन्द्रियात्मनिष्ठो भगवद्विरहजस्त्रिविध इत्यर्थः । त्रिविधमपीति । लौकिकश्चन्द्रो लौकिकमेव तापम् । अयं तु त्रिविधमपीत्यपि-

१. प्रभूणां स्वतन्त्रः ।

रीक्षणेनाग्रिमरसप्रतिबन्धशङ्कया न उत्सवः स्यात् । प्रत्युत पूर्वापेक्षयाधिकतरः खेद एव स्यात् । किञ्च, विनास्माभिरन्येन प्रियः श्रमापनोदनं न कारयति, वयमतः परं करिष्याम इति श्रमरुचस्तथात्वं युक्तमेव । श्रमस्य कान्तित्वनिरूपणेनापि स्वमनोरथाप्रतिबन्धकत्वात्तथेति ध्वन्यते । श्रमोऽप्यन्यनायिकाविषयकश्चेत्, कथं दृशामुत्सव इति चेत्, तथा नेत्याहुः खुररजश्छुरितस्रगिति । यद्यप्यन्यनायिकाविषयकः स्यात्, तदा स्रजि तदङ्गराग एव स्यात्, न तु खुररजः । रजोऽप्यागमनसामयिकं चेत्, सम्भवेदपि तथा, परं चिरकालीनमिति ज्ञापनाय छुरितत्वमुक्तम् । अल्पकालेन तथात्वस्यासम्भवात् । किञ्च, तथा चेत्, स्रगपि न स्यात्, क्रीडान्तरायत्वात् । अतो ज्ञायते सुहृदामस्माकमाशिषो दित्सया एतीति । एतीत्यागमनक्रियायां कर्मानुक्त्यापि तथेति ज्ञाप्यते । अयं भावः । 'कर्तुरभीप्सिततमं कर्म' भवति । तेनात्र भगवत्कर्तृत्वात्तदभीप्सिततमत्वमस्माकमेव, नान्यस्य । अन्यथा व्रजमेतीत्युक्तं भवेत् । यद्यपि सर्वेषामेव निरोधश्चिकीर्षितो भगवत इति व्रजस्याप्यभीप्सिततत्वम्, तथाप्यभीप्सिततमत्वलक्षणोतिशयोऽस्मास्वेवेति तथोक्तम् । तन्निदर्शनमेवाहुः एष इति । अन्यथा कथमात्मानं प्रदर्शयेत् । दक्षिणनायकत्वेनान्तर्भाववैषम्याभावायाहुः - देवकीजठरभूरिति । सर्वथा निर्दुष्टा हि देवकी । तदुदरे प्रकटस्तथेत्यर्थः । तादृशस्य भवतीषु को विशेष इत्यत आहुः उडुराज इति । यथा चन्द्रः सर्वेषां तापहारको दूरादेव, परं पतित्वेन नातिनिकटे नक्षत्राणामेव, तथायमपि सर्वेषां तथा दूरादेव, परं पतित्वेनास्माकमेव तथेति भूयान् विशेषः सम्पद्यते । स यथा नक्षत्रमण्डले तिष्ठंस्तैरेव राजमानः सर्वतापनिवर्तकः, तथायमप्यस्मन्मण्डले तिष्ठन्नस्माभिरेव राजमानस्तथेत्युडुराजपदेन द्योत्यते । ) इदं सर्वं कार्यं वेणुनादसाध्यमिति प्रकरणितत्वात् ज्ञेयम् ॥ २२ ॥ २३ ॥

साधारणीं लीलामुक्त्वा गोपिकास्वेव वेणुकृतां भगवतैव जनितां लीलामाहु मदेति ।

**मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली ।**
**बदरपाण्डुवदनो मृदुगण्डं मण्डयन् कनककुण्डललक्ष्म्या ॥ २४ ॥**
**यदुपतिर्द्विरदराजविहारो यामिनीपतिरिवैष दिनान्ते ।**
**मुदितवक्त्र उपयाति दुरन्तं मोचयन् व्रजगवां दिनतापम् ॥ २५ ॥**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

शब्दः । तस्य गौणत्वसूचनायैवमुक्तम् । प्रकरणितत्वादिति । प्रकरणं संजातं यस्य तादृशत्वात् । वेणुनादस्येति शेषः ।

---

२४–२५. मदथी आपना लोचन विघूर्णित छे, ते छतां आपणुं कांइक सन्मान करे छे, केमके आपणे एमना सुहृद् छीये, कीर्तिमयी वनमाळाने पोते प्रकट करे छे, मुखारविंद बोरजेवुं कांइक रक्त छे, बोर जेम वनवासीओए उपभोग्य छे, तेम वनमां जई बोरनी माफक ए मुखारविंद उपभोग्य छे, कनककुण्डलनी कांतिथी एमना मृदु गण्डस्थल शोभी रह्या छे, बहु स्त्रियोवाळा यादवोना ए पति छे, मद्दा

यदुपतिः मुदितवक्त्र उपयातीति। पूर्वोक्ता एव वेणुनादा अत्र ग्राह्याः। दश लीलाः पूर्वं निरूपिताः, ताः सर्वा अस्मदर्थमेवेति दशधा भगवन्तं विशेषयन्ति। एक एव भगवानुभयत्रेति युगलत्वेऽपि नात्यन्तं विभागः। सर्वत्रैव वेणुनादे रजोगुणो मुख्य इति सोऽस्मदर्थं फलित इत्याहुः। मदेन विघूर्णिते लोचने यस्येति। मदोऽत्र स्वानन्दस्थित्या पूर्णावबोधः। स ज्ञानमार्ग एवेति प्रकटयितुं सर्वविषयान् व्यावर्तयितुं विघूर्णितलोचनत्वमुक्तम्। अयं धर्मो भगवन्निष्ठो निरूपितः। स्वरूपस्थित्यर्थं तादृशोऽपीषन्मानदः, मानं प्रयच्छति। सन्माननां करोति। तेनास्माकं गम्यो भवतीति ज्ञायते। मानमभिमानं वा रजोगुणप्राकट्यात्, प्रयच्छति, खण्डयति वा, ज्ञानप्राकट्यात्, प्रयच्छति मानं द्यति खण्डयति त्रिष्वपीषदेव तत्तत् कार्यम्। ननु पूर्णस्य भवतीष्वेवंकरणे को हेतुस्तत्राहुः स्वसुहृदामिति। स्वपदादसाधारण्यम्। तेन स्वस्यैव सुहृदस्ताः। महतोऽपि सुहृत्कार्यं कर्तव्यमिति। साधारणं कार्यमाह वनमालीति। कीर्तिमयीं वनमालां प्रकटयतीति। बदरवत् पाण्डुवदन इति। बदरोऽत्र फलवाचकः। स हि धर्मेण प्रतिक्षणं

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः।

मदेत्यत्र। पूर्वोक्ता एवेति। वेणुनादेनान्यत्र कृतं कार्यं पूर्वमुक्तम्। गोपिकास्वेव कृतमत्रोच्यत इति विशेषः। युगलत्वेऽपीति। भिन्नयुगलत्वेपीत्यर्थः। नात्यन्तेति। 'जानाति भगवानेव जानात्येव च हरि'रित्येतावानेव विभाग इत्यर्थः। सर्वासां लीलानां गोपिकार्थत्वं व्युत्पादयन्ति सर्वत्रैवेति। मुख्य इति। हेतुरिति शेषः। तथा च तद्धेतोरस्मदर्थं फलितत्वात्तत्कार्यमप्यस्मदर्थमेव। अन्येषां तु प्रासङ्गिकत्वमिति भावः। अस्मदर्थं फलित इति। अस्मद्विषयक एवोद्दीप्तो रसभावो जात इत्यर्थः। स्वानन्देति। पूर्वानुभूतस्यानन्दस्य स्वस्मिन् स्थित्येत्यर्थः। अत्र रजोगुणः पूर्णावबोधश्च एक एवेति ज्ञेयम्। ज्ञानमार्ग एवेति। लोचनयोरेवेत्यर्थः। तेनास्माकमिति। गम्यत्वे सन्माननाहेतुः। अधुनैव तदकरणे तस्या ईषत्त्वं हेतुरिति विभेदः। रजोगुणेति। उद्दीप्तरसभावस्य प्राकट्यादित्यर्थः। मूले ईषत्पदात् प्रयच्छतीत्यस्य ईषत् प्रयच्छति ईषत्करोतीति टिप्पण्यनुसारेणार्थः। अभिमानेषत्करणखण्डनयोर्हेतुमाहुः ज्ञानेति। रजोगुणस्य ज्ञाने लोचनयोरेव प्राकट्यात् तेन तन्मात्रविषयकत्वं रजोगुणस्य बोधितमिति भावः। स्वरूपस्थित्यर्थमित्यत्र टिप्पण्यां पक्षत्रयं सुबोधिनीस्थमेव विवृतम्। अन्ते यद्वेत्यनेन पूर्णावबोधपदस्यार्थान्तरमुक्तम्। ईषन्मानद इत्यस्यार्थस्य प्रथमपक्षे यद्यपीत्युक्त्वा योजितम्। सुबोधिन्यां तादृशोपीत्यपिशब्देनोक्तम्। अग्रे पक्षद्वये विशेषणयोर्हेतुहेतुमद्भाव इति विशेषः। साधारणं कार्यमिति। मानदानजनितं कार्यमाश्वासादिकमसाधारणं स्वसुहृत्स्वेव प्रकटम्। तस्येषद्भावजनितं कार्यं

---

गुरलमां गजेन्द्र जेवा महान् छे, संपूर्ण रात्रिना पति छे, सर्वेना अलंकाररूप पोते उभा छे, दिवसने अंते चन्दनी माफक हाल तो दरथी तापनी शांति करे छे, मुखारविंद प्रसन्न छे, मजना तथा गायोना सर्व ताप दूर करता पाछे पधारे छे.

विसदृशीं कान्तिं करोति । तत्राप्यर्धपक्षः पाण्डुवर्णो भवति । अग्रे त्वारक्तः । तथेदानीमर्धरतः, अग्रे त्वत्यन्तं रतो भविष्यतीति ईषन्मानदत्वाद्विशेषः । साधनं कीर्तिरिति मध्ये विशेषणान्तरम् । अथवा । अत्र पाण्डुशब्देन आरक्त एव गुण उच्यते । तदा वदनं वक्त्रं अधरामृतपानं लक्षितं भवति । वनवासिनां वा एतदुपभोग्यमिति वने गत्वा एतदुपभोग्यमिति सर्वाः ज्ञापयन्ति । ततोऽपि विशेषमाहुः कनककुण्डललक्ष्म्या मृदुगण्डं मण्डयन्निति । श्मश्रूद्गमाभावादानन्दनिधानत्वाच्च मृदुत्वं भोगार्थमुपपाद्यते । गण्ड एव रससमाप्तिरिति । कनकपदं वर्णान्तरज्ञापनार्थम् । उत्कृष्टेनापि परमानन्देनापि अस्मदर्थं कामरस एवोद्बोध्यत इति सर्वथास्मदर्थमेव भगवदागमनमिति निश्चीयते । अन्यथा शिरोभेदानस्मत्समक्षं न कुर्यादिति । ननु यद्यपि महान्, तथापि बाल इति, नन्दसूनुरिति, कथमसाधारणीं लीलां करिष्यतीत्याशङ्कां वारयन्ति यदुपतिरिति । अयं यादवानां पतिः । ते हि बहुस्त्रीका भवन्ति । अमर्यादार्थं विशेषणान्तरमाहुः द्विरदराजविहार इति । महासुरते गजेन्द्र इव महान् । तेन विना न पूर्तिरिति । तदपेक्षयाप्यादौ पूर्वतापं दूरीकरिष्यतीत्याहुः यामिनीपतिरिवेति । सम्पूर्णाया यामिन्या अयं पतिः । अतस्तद्गतानां विशेषेण सुखदः । नन्वहर्पतिरपि, कथमुच्यते यामिनीपतिरिवेति, तत्राहुः एष इति । सर्वालङ्कारभूतस्तत्र तिष्ठति । अधुना तु श्रान्त इव । दिनान्ते एष यामिनीपतिरिव चन्द्र इव दूरादेव तापनाशकः साम्प्रतम् । अग्रे तु यामिनीपतिरिव । इममर्थं ज्ञापयतीति

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

कीर्तिप्रकटनं साधारणं सर्वलोकेषु प्रकटमित्यर्थः । ईषन्मानदत्वादिति । अग्रेऽत्यन्तरतत्वं पूर्वस्मादीषन्मानदानादभिमानेषत्करणादभिमानेषत्खण्डनाच्च विशेष इत्यर्थः । साधनमिति । अधुना तादृशविशेषासम्पादने हेतुरित्यर्थः । वक्रमिति । मुखमध्यमधरमित्यर्थः । तदेति । अधरस्यारक्तत्वादनुरागे सत्येव तत्स्थस्य अमृतस्य पानमिति लक्षितं ज्ञापितं भवतीत्यर्थः । वनवासिनां वेति । वदनस्य वदरसादृश्याद्वदरस्य च वनीयत्वादिति भावः । ततोपि विशेषमिति । स्वार्थं भगवदागमननिश्चयः स्वविषयकरजोगुणोद्दीपनेनोक्तः । शिरोभेदकथनेन ततोपि विशेषो निश्चये उक्त इत्यर्थः । वर्णान्तरेति । गण्डस्य श्यामो वर्णः, कनकस्य पीत इत्यर्थः । उत्कृष्टेनापीति । भक्तिरूपगण्डे कनकश्रीयोजनादिति भावः । कनकस्य सर्वाभिलषितत्वात् कामरूपत्वम् । शिरोभेदानिति । गण्डयोः कुण्डलश्रीयोजनं शिरश्चालनेनैव भवतीति भावः । यदुपतिरित्यत्र । तदपेक्षयेति । द्विरदराजेनायं धर्म इत्यर्थः । विशेषेण सुखद इति । तापं निवर्त्य सुखदातेत्यर्थः । दिनान्ते इत्यस्य साम्प्रतमित्यनेनान्वयः । तथाच मूले यामिनीपतिरिवेत्यस्य पूर्वापरयोरन्वयः । एष इत्यस्यावृत्तिः । दिने एषः अप्रकटः सन् सुखदातेत्यर्थः । दिनान्ते यामिनीपतिरिव एषः । दूरादेव तापनाशक इत्यर्थः । अग्रे

लक्ष्यते, यतो मुदितवक्त्रः प्रसन्नवदनो भूत्वा उपयाति, समीपमागच्छति । अयं भावस्तासामेव हितकारीति पूर्वं साधारण्यमुक्तम्, उपसंहारे पुनराह मोचयन् व्रजगवामिति । व्रजस्य गवां च सम्पूर्णे दिवसे यावांस्तापः, तं सर्वमेव मोचयतीति ॥ २४ ॥ २५ ॥

एवं निरोधं निरूप्य स्त्रीणामुपसंहरन् प्रकरणस्थानामेव तद्द्वारोपसंहरति एवमिति ।

श्रीशुक उवाच—**एवं व्रजस्त्रियो राजन् कृष्णलीलानुगायतीः ।**
**रेमिरेऽहःसु तच्चित्तास्तन्मनस्का महोदयाः ॥ २६ ॥**

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्वात्रिंशोऽध्यायः ॥

राजन्निति सम्बोधनं विश्वासार्थम् । व्रजगता अपि स्त्रियः एवं प्रकारेण अहःसु भगवत्सम्बन्धरहितदशायामपि कृष्णलीला एव आनुपूर्व्येण बहुकालानुवृत्त्यर्थमनुगायतीः अनुक्रमेण गायतीः रेमिरे । स्वत आनन्दरूपा कीर्तिस्ताः प्रति जातेति तासां क्रियाशक्तिर्ज्ञानशक्तिश्च भगवन्निष्ठैव जातेत्याह तन्मनस्काः तच्चित्ता इति । चित्तं ज्ञानप्रधानम्, मनः कर्मप्रधानमिति । एवं सर्वप्रकारेण प्रपञ्चविस्मृतिर्भगवदासक्तिश्च निरूपिता । नन्वेवं कथं तासां निरोधः फलित इति, तत्रोपपत्तिमाह महोदया इति । महानेवाभ्युदयो भाग्यराशिर्यासामिति सर्वं सुस्थम् ॥ २६ ॥

**इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे द्वात्रिंशाध्यायविवरणम् ॥**

इति दशमपूर्वार्धतामसफलप्रकरणम् ॥

---

श्रीविठ्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तु यामिनीपतिसदृशः सन् द्विरदराजवद्विहारो यस्य तादृश इत्यर्थः । पूर्वयुगले चन्द्रदृष्टान्तस्योक्तत्वात् पुनरुक्तिमाशङ्क्याहुः अयं भाव इति । श्रमरुक्सहितः साधारण्येन सर्वेषां तापनाशक उक्तः । मुदितवक्त्रो विशेषत एतासामेवेति विभेदः । प्रकरणस्थानामिति । एतासां मुख्यत्वादेतन्निरोधोपसंहारे सर्वेषामेव तामसानां निरोध उपसंहृतो जात इति भावः ।

एवमित्यत्र । स्वत आनन्दरूपेति । न तु फलदानद्वारेत्यर्थः ।

द्वात्रिंशाध्यायव्याख्या समाप्ता ।

श्रीकृष्णार्पणमस्तु ।

---

२६. हे राजन्, व्रजनी स्त्रियो, ए प्रकारे दिवसे, भगवान्‌ना विरहनी दशामां पण कृष्णलीला गाती आनंद करती हती, एमनुं ज्ञानप्रधान चित्त तथा कर्मप्रधान मन कृष्णमय थई गयुं हतुं, एमनो महान् भाग्योदय थयो हतो.

श्रीकृष्णाय नमः ।

# दशमपूर्वार्धतामसफलप्रकरणनिबन्धः ।

अतःपरं सप्तभिर्वै फलं कृष्णो निरूप्यते ।
षड्गुणैः सहितः पूर्वमैश्वर्यं त्रिविधं मतम् ॥ १ ॥
ध्वनिनाहूय वाक्येन प्रेषयत्येव निश्चितम् ।
फले वाक्यं न कर्तव्यं दोषश्चेद्वारयिष्यति ॥ २ ॥
इति तासामगमनं गर्वेऽन्तर्भाव ईर्यते ।
द्रुतमेव हरेर्मार्गः सर्वोत्कृष्टो हि बुध्यताम् ॥ ३ ॥
सम्बन्धमात्रे संजाते बहिर्वान्तरथापि वा ।
कायेन मनसा वापि वचसा वापि सर्वथा ॥ ४ ॥
रमयत्येव हि निजान् सर्वथा नैव मुञ्चति ।
अन्तर्धानकथा प्रोक्ता वाक्यं चापि निरूपितम् ॥ ५ ॥
अध्यायद्वितयेनैव सकृद्रोगं निवारयन् ।
आविर्भावं करोत्येव तथा वाक्यानि तुष्टये ॥ ६ ॥

## श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता निबन्धयोजना ।

अतःपरं सार्धसप्तदशभिः फलप्रकरणं विचारयन्ति अतःपरमित्यादि । प्रकरणसमाख्याबीजमाहुः फलमित्यादि । तथा च पूर्वोक्तसाधनपञ्चककरणरूपासक्त्युद्रेकानन्तरप्राप्यषड्गुणयुतपूर्णभगवद्रूपफलनिरूपणादस्य फलप्रकरणेत्याख्येत्यर्थः । अत्रैश्वर्यादीनां पूर्वोक्तः क्रमो नेति प्रकारोपि विलक्षण इति बोधयितुं प्रथमतः प्रथमाध्यायार्थमाहुः पूर्वमित्यादि ॥ १ ॥

त्रैविध्यं स्पष्टयन्ति ध्वनिनेत्यादि । ऐश्वर्यं हि स्वातन्त्र्यम् । तत्र कर्तुमकर्तुं च सामर्थ्यमर्धेनोक्तम् । ततः पादोनेनान्यथा कर्तुं सामर्थ्यम् । तुरीयपादेन द्रुतमेवेत्यग्रिमसहितेन समुदितं तत्त्रयम् । क्रमेणैव त्रयं वा ।

द्वितीयतृतीययोरर्थमाहुः हरेरित्यादि बुध्यतामित्यन्तोऽध्यायद्वयार्थः ।

तत्र हेतुमाहुः सम्बन्धेत्यादिसार्धेन । तथा च इति बोधयितुमध्यायद्वयमेव निरूपितमित्यर्थः ।

चतुर्थार्धमाहुः सकृदित्यादि । तुष्टय इति । वदतीतिशेषः ।

१ त्वयमेवेति पाठः श्रर्पानपुस्तके दृष्ट, स एव साधुः, तथापि मूले श्रीपुरुषोत्तमानां पाठो रक्षितः ।

रमते च रमातोऽपि विशेषेण रतिप्रदः ।
परोक्षेऽपि रतिं चक्रे तेन वीर्यमुदीरितम् ॥ ७ ॥
यशस्तु वचनैः स्पष्टं श्रीश्चाविर्भावतः स्फुटा ।
चतुष्टयं निरूप्याग्रे धर्मी कृष्णो निरूपितः ॥ ८ ॥
भोगे मध्ये महत्सौख्यं तस्मादेवं निरूपितम् ।
स्वरूपेण रतिः प्रोक्ता न धर्मे रसरूपतः ॥ ९ ॥
ततो वैराग्यभावेन फलदाता निरूप्यते ।
कौतुकेनापि पूर्वेषां करणं न सुखाय हि ॥ १० ॥
अतः कौतुकरीत्यापि गताः सर्वे हरान्तिके ।
कालेनाग्रस्तमूर्धानः कृष्णेनैव विमोचिताः ॥ ११ ॥
अतस्तत्कर्म हरिसात्कृत्वा व्रजमुपाययुः ।
तमसि त्रितयं प्रोक्तं हरस्तत्राधिदैविकः ॥ १२ ॥
स तु तूष्णीं भवत्यत्र कालस्त्वाध्यात्मिको मतः ।
हरभृत्यास्तु भूतानि स्त्रीणां हर्ता ततो निशि ॥ १३ ॥
शङ्खचूड इति प्रोक्तस्तं च हत्वा विमोचिताः ।
सुदर्शनो यथा जीवस्तथा सत्त्ववरो मणिः ॥ १४ ॥
कर्म स्वस्मिन् प्रतिष्ठाप्य रामे रत्नं न्यरूपयत् ।
एवं कालादिसम्बन्धात् तामसात् स्वान् न्यवारयत् ॥ १५ ॥
पूर्वसिद्धपरित्यागो वैराग्यं कालदोषतः ।
ज्ञानं तु गुणगानं हि परोक्षे तत् प्रतिष्ठितम् ॥ १६ ॥

---

योजना ।

पञ्चमार्थमाहुः रमत इत्यर्धेन । प्रयोजकविभागं स्पष्टयन्ति परोक्ष इत्यादि ।

क्रमं भिन्दन्तः पञ्चमार्थमाहुः चतुष्टयमित्यादि सार्धेन । एवमिति ।

क्रमं भित्त्वा षष्ठार्थमाहुः सार्धैः षड्भिः तत इत्यादिभिः । वैराग्येण फलदातृत्वं व्युत्पादयन्ति कौतुकेनेत्यादिसार्धेन । पूर्वेषामित्यवैष्णवकर्मणाम् । मूर्धपदं मुख्यबोधकम् । विमोचनेन सिद्धं फलान्तरमाहुः अतस्तत्कर्मेत्यर्धेन । एतेन कदाचित् दैवगत्या मौर्ख्यादिना कृतमन्यदैवतं कर्म 'यत्करोषि यदश्नासी'त्याज्ञां ह्यनुसंधाय भगवदर्पणं कर्तव्यमित्युक्तम् ।

द्वितीयफलदानस्यापि वैराग्यहेतुकत्वं व्युत्पादयन्ति तमसीत्यादिद्वाभ्याम् । काल इति । शिवरात्रिरूपः । सत्त्ववर इति । सत्त्ववृत्तिषु श्रेष्ठः । वैराग्यस्वरूपं सहेतुकमाहुः पूर्वेत्यादि । पूर्वसिद्धपरित्याग इति । भगवत्परत्वपरित्यागः । एतस्य 'यावदन्याश्रयस्याव'दितिन्यायेन भगवदुपेक्षाद्युत्वोद्वैराग्यत्वमित्यर्थः ।

प्रत्यक्षे भजनं श्रेष्ठमेवं चेद्रोधनं स्थिरम् ।
पुरुषाणां तथा स्त्रीणां रात्रौ च दिवसे तथा ॥ १७
ज्ञानं भक्तिश्च सततं चक्रवत् परिवर्तते ॥ १७३ ॥
इति दशम-पूर्वार्ध-तामस-फलनिबन्धः समाप्तः ।

---

योजना ।

सप्तमार्थमाहुः ज्ञानमिति पादेन ।

प्रकरणे यत् सिद्धं तदाहुः परोक्ष इत्यादि । तामसप्रकरणीयमुद्धारप्रकारमाहुः ज्ञानं भक्तिश्चेत्यादि ।

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता तामसफलनिबन्धयोजना ।

---

पुरुषोत्तमनामसहस्रस्थैतत्प्रकरणनामानि ।
वेणुवादरसक्षोभमत्तगोपीविमुक्तिदः ।
सर्वभावप्राप्तगोपीसुखसंवर्धनक्षमः ॥ १ ॥
गोपीगर्वप्रणाशार्थतिरोधानसुखप्रदः ।
कृष्णभावव्याप्तविश्वगोपीभावितवेशधृक् ॥ २ ॥
राधाविशेषसंभोगप्राप्तदोषनिवारकः ।
परमप्रीतिसंगीतसर्वाद्भुतमहागुणः ॥ ३ ॥
मानापनोदनाक्रान्तगोपीदृष्टिमहोत्सवः ।
गोपिकाव्याप्तसर्वाङ्गः स्त्रीसंभाषाविशारदः ॥ ४ ॥
रासोत्सवमहासौख्यगोपीसंभोगसागरः ।
जलस्थलरतिव्याप्तगोपीदृष्ट्यभिपूजितः ॥ ५ ॥
शास्त्रानपेक्षकामैकमुक्तिद्वारविवर्धनः ।
सुदर्शनमहासर्पग्रस्तनन्दविमोचकः ॥ ६ ॥
गीतमोहितगोपीधृग्यक्षहृच्चूडविनाशकः ।
गुणसंगीतसंतुष्टिर्गोपीसंसारविस्मृतिः ॥ ७ ॥

---

त्रिविधनामावलीस्थैतत्प्रकरणनामानि ।

कन्दर्पकोटिलावण्याय नमः ॥ १ ॥ गर्वोत्थनिपतालयगोपराय नमः ॥ २ ॥ गोपिकारमणाय नमः ॥ ३ ॥ सङ्कल्पयोगाधिपतये नमः ॥ ४ ॥ अलौकिकपूर्णकामजनकाय नमः ॥ ५ ॥ भावापूरकमहात्मकामदीपकाय नमः ॥ ६ ॥ शृङ्गारविभावादिसुखाय नमः ॥ ७ ॥ सत्यगाये नमः ॥ ८ ॥ कामोन्मत्तगोपाङ्गनामुक्तिदाय नमः ॥ ९ ॥

मुक्त्यधिकफलगोपीमनोमोहकाय नमः ॥ १० ॥ लोकवेदसर्वधर्मपरित्यक्तगोपीसेवितचरणारविन्दाय नमः ॥ ११ ॥ भक्तप्रतिबन्धनिवारकाय नमः ॥ १२ ॥ अलब्धरासगोपीसद्योमुक्तिप्रदायकाय नमः ॥ १३ ॥ परीक्षितगोपवधूसेवितचरणाय नमः ॥ १४ ॥ निजजनस्मयध्वंसनस्मिताय नमः ॥ १५ ॥ कायिकतिरोभावितगोपीपुञ्जाय नमः ॥ १६ ॥ राधासहचराय नमः ॥ १७ ॥ विरहव्याकुलगोपाङ्गनान्वेषितमार्गाय नमः ॥ १८ ॥ ज्ञानतुल्यभक्तभ्रान्तिजनकाय नमः ॥ १९ ॥ निकटस्थितिबोधकाय नमः ॥ २० ॥ गोपीवर्णितनिखिलगुणाय नमः ॥ २१ ॥ भक्तशुद्धिविलम्बनाय नमः ॥ २२ ॥ दीनकृपाप्रकटितरूपाय नमः ॥ २३ ॥ सर्वमनोनयनाह्लादकाय नमः ॥ २४ ॥ गोपीवाक्यविचारकाय नमः ॥ २५ ॥ सर्वधर्मनिर्धारकाय नमः ॥ २६ ॥ सर्वरसाभिज्ञाय नमः ॥ २७ ॥ रासमण्डलानेकरूपाय नमः ॥ २८ ॥ उद्दीप्तकामरसपूरकाय नमः ॥ २९ ॥ अतिक्रान्तमर्यादाय नमः ॥ ३० ॥ भक्तदैन्यनिवारकाय नमः ॥ ३१ ॥ यमुनाकीर्तिजनकाय नमः ॥ ३२ ॥ सुदर्शनमोचकाय नमः ॥ ३३ ॥ बलदेवाभीष्टदात्रे नमः ॥ ३४ ॥ शङ्खचूडघातकाय नमः ॥ ३५ ॥ गोपीक्लेशनाशकगुणार्णवाय नमः ॥ ३६ ॥ स्वसमानगुणाय नमः ॥ ३७ ॥ सर्ववशीकरणद्वादशविधचरित्राय नमः ॥ ३८ ॥

---

## श्रीमद्भागवतदशमस्कन्धार्थानुक्रमणिका ।

पञ्चाध्याय्यां निशि क्रीडा सर्पान्नन्दस्य मोक्षणम् ।
शङ्खचूडवधः पश्चाद् गोपीगीतं..........॥ १ ॥

## गोष्ठीशालरामचन्द्रभट्टात्मजघनश्यामभट्टकृता सूचिका ।

अतः परं साधने कृते भक्त्युद्रेकानन्तरं प्राप्यषड्गुणयुतपूर्णभगवद्रूपफलनिरूपणादस्य फलप्रकरणत्वम् । अत्रापि सप्तभिरध्यायैर्निरूपणम् । क्रमस्तु ऐश्वर्यादीनां न विवक्षितः । पुष्टिफलत्वात् क्रमातिक्रमो न दोषाय । किन्तु मध्ये भोगे सुखविशेषोऽपि । अत्र रमणरूपं फलं देयमिति । रमणस्य रूपनामविभेदेन द्विरूपत्वात् । रूपेण रमणे पञ्चाध्यायाः । आत्ममनइन्द्रियप्राणशरीरात्मकत्वात् रूपस्य । नाम्ना रमणेऽध्यायद्वयम् । शब्दस्य प्रकृतिविकृतिभेदेन द्विरूपत्वात् । तत्र प्रथमेऽध्याये ऐश्वर्यनिरूपणम् । ऐश्वर्यं नाम स्वातन्त्र्यम्, कर्तुमकर्तुमन्यथा कर्तुं सामर्थ्यमिति यावत् । तत्र नादद्वारा आह्वानं कृत्वा वाक्यद्वारा गृहगमनाय प्रेरणं कर्तुं सामर्थ्यरूपमैश्वर्यम् । भगवद्वाक्येन गृहगमनं न कृतमित्यपि भगवतोऽकर्तुं सामर्थ्यरूपमैश्वर्यम् । तदनन्तरं गर्वेऽन्तर्धानमिति अन्यथा कर्तुं सामर्थ्यरूपमैश्वर्यम् । एवं प्रथमे त्रिविधमैश्वर्यं स्फुटम् । द्वितीये 'परोक्षोऽपि रतिं चक्रे' इति वीर्यम् । तृतीये स्तुतिवचनैर्यशः स्फुटमेव । चतुर्थे प्रादुर्भावनिरूपणेन श्रीः स्पष्टैव । तदनन्तरं धर्मनिरूपणं पञ्चमे । अत्र प्रादुर्भावरूपश्रीनिरूपणानन्तरं रमणस्या-

वश्यकत्वात् वैराग्यज्ञानयोस्तु रमणप्रतिबन्धकत्वात् पूर्वमनिरूपणम् । पुष्टिमार्गीयवैराग्यस्य भगवदितरत्यागरूपत्वात् भगवत्स्वरूपफलप्राप्त्यनन्तरमेव भगवदुत्तमत्वज्ञानेन भगवदितरत्यागसंभवात् । पुष्टिमार्गीयज्ञानस्यापि गुणगानरूपत्वात् प्रादुर्भावदशायां तस्यासंभवात् विरहदशायामेव संभवात् पूर्वमनिरूपणम् । षष्ठे वैराग्यादिनिरूपणं स्पष्टमेवान्याश्रयनिवृत्तिरूपम् । ततो ज्ञाननिरूपणं सप्तमे स्पष्टमेव विरहदशायाम् । एवं सप्तभिरध्यायैः फलप्रकरणनिरूपणम् ।

इति दशमपूर्वार्धतामसफलप्रकरणविभागसूचिका ।

---

## श्रीगोकुलरायकृतदशमपूर्वार्धतामसफलप्रकरणाध्यायार्थः ।

तामसप्रकरणान्तर्गतफलप्रकरणे ध्वनिना आह्वानं कर्तुं समर्थत्वात्, गमनबोधकवाक्यैर्गमनं अकर्तुं समर्थत्वात् प्रभुवाक्योल्लङ्घनदोषं गुणं कर्तुं समर्थत्वात् गर्वेऽन्तर्धानेनापि अन्यथा कर्तुं समर्थत्वादैश्वर्यनिरूपणं षड्विंशेऽध्याये ॥ २६ ॥

तामसप्रकरणान्तर्गतफलप्रकरणे बाह्याभ्यन्तरभेदेन भगवत्सम्बद्धानां भक्तानां दोषेऽपि भगवता परित्यागाभावस्य सर्वोत्कृष्टस्य भगवन्मार्गस्य ज्ञापनार्थं कायेन रमणाभावे मनसा वाचा वापि रमयेदिति ज्ञापनार्थं परोक्षेणापि रतिकरणात् वीर्यनिरूपणं सप्तविंशेऽध्याये २७॥

तामसप्रकरणान्तर्गतफलप्रकरणे वचसा रमणज्ञापकगोपिकावचनैर्यशोनिरूपणमष्टाविंशेऽध्याये ॥ २८ ॥

तामसप्रकरणान्तर्गतफलप्रकरणे सकृद्भोगनिवारणार्थमाविर्भावकरणाद्भक्तान्तःकरणसंतोषार्थं वाक्यकथनाच्च तत एव मरणरूपापत्तिनिवारणात् श्रीनिरूपणमूनत्रिंशेऽध्याये २९

तामसप्रकरणान्तर्गतफलप्रकरणे षड्गुणरूपाभिः स्वामिनीभी रसरूपेण स्वरूपेण रमणात् धर्मिनिरूपण त्रिंशेऽध्याये ॥ ३० ॥

तामसप्रकरणान्तर्गतफलप्रकरणे कौतुकेनापि कृतानामैश्वर्यकर्मणां दुःखहेतुत्वेन, तत्र भगवत औदासीन्यभावबोधनात्, तत्रापि भक्तवत्सलेन भगवता तन्मोचने भक्तैस्तत्कर्मपरित्यागात्, मर्यादारमणेऽपि शङ्खचूडसम्बन्धकथनेन भगवत औदासीन्यभावबोधनाद्वैराग्यनिरूपणमेकत्रिंशेऽध्याये ॥ ३१ ॥

तामसप्रकरणान्तर्गतफलप्रकरणे विरहे गुणगानस्य ज्ञानरूपत्वात् ज्ञाननिरूपणं द्वात्रिंशेऽध्याये ॥ ३२ ॥

---

॥ श्रीकृष्णाय नमः ॥

# भजतोनुभजन्तीत्यत्र प्रकीर्णदीपिका ।

सु. फलतः स्वरूपतश्चेति । त्रयाणां मध्ये उभयोः किं फलं पूर्वस्य कीदृशं स्वरूपं चेत्यर्थः । भजनाभजनाभ्यामित्यस्यार्थः सु. श्लोकस्य व्याख्यानान्ते भजतः पुरुषानित्यारभ्य एव इत्यन्तेनोक्तो ज्ञेयः । तेषां त्रयाणामिति । त्रयाणां मध्ये इत्यर्थः । उभयोरपि प्रतियोगिनोरित्यस्यार्थः टिप्पण्यां द्वितीयोयमित्यादिनोक्तस्तदनुसारेण श्रीपुरुषोत्तमानां प्रकाशे भजदित्यादिनोक्त एव ज्ञेयः, नान्यत्प्रकारेण विचारणीयः। प्रथमप्रश्नस्य फलविषयकः सन्देहो नोक्तः, तदभिप्रायः वल्ल० यो भजनकर्तेत्यादिनोक्तो द्रष्टव्यः । सु. तेनापि तदेव कर्तव्यमिति करणे इति । यथाहमस्य पादप्रक्षालनं करोमि, तथा तेनापि मम पादप्रक्षालनं कर्तव्यमिति भावेन करणे इत्यर्थः । तदेव कर्तव्यमिति । तस्यापि पादप्रक्षालनमेव किं कर्तव्यमित्यर्थः । पु. तथाकरणे इति । निरपेक्षभजनकरणे इत्यर्थः । द्वितीयप्रतियोगीति टिप्पण्याम् । द्वितीयो यमभजन्तं भजते स एकः प्रतियोगीति द्वितीयोऽभजद्भजनकर्ता प्रथमप्रतियोगीति ज्ञेयः । आनुषङ्गिक इति । सु. फलतः स्वरूपतश्चेत्यत्रोक्तः स्वरूपसन्देहो बोध्यः । सु. यो वा न भजति पूर्वं इति । द्वावत्र अभजनकर्तारौ, तन्मध्ये पूर्वः यो भजतः करुणान्न भजति तस्य वा किं फलमित्यर्थः । पु. अर्जुन उर्वशीशापस्य इत्यारभ्य बोध्य इत्यन्तेन भजदभजनकर्तुः फलसन्देहे उदाहरणान्युक्त्वा पुनरपि अत्रापीत्यारभ्य बोध्य इत्यन्तेन तस्यैव स्वरूपसन्देहे तान्येवोदाहरणान्युक्तानि । तत्र, कृतनिन्दनेति । उर्वश्या अर्जुनस्य निन्दनं कृतं तेन कृत्वाऽर्जुनस्य कृतघ्नत्वं लक्ष्यते । तथैव जरयापि पुनर्भजनापेक्षा कृता, परं नारदेन तस्याः भजनं न कृतं, तेन कृत्वा नारदस्य धूर्तत्वं लक्ष्यते । तदेवोक्तं नारदेन 'मयोपदिष्टमासाद्य वव्रे नाम्नाभयं पति'मिति । तथा । वरूथिन्या तु मार्कण्डेयं जितेन्द्रियं ज्ञात्वा तदनपेक्षणं कृतं, तेन मार्कण्डेयस्य समीचीनत्वं लक्ष्यते। तृतीय इति । तृतीयप्रश्ने इत्यर्थः । उदासीनानामिति । आत्मारामपूर्णकामानामित्यर्थः । अत्राप्युदासीनादीनां फलकथने उदाहरणान्याहुः अत्रापीत्यादिना । तत्र सूर्यस्येति । सूर्यस्य उदासीनस्य यत् फलं भवति तत् आत्मारामाणां पूर्णकामानां फलं भवति किम् । अथवा । कृतघ्नादीनां यद्भवति तद्भवति किम् । एवं आत्मारामपूर्णकामानां फलसन्देहे उदाहरणान्युक्त्वा तद्भजनकर्तृणामभजनकर्तृणां चाहुः तथेत्यादिना । उत्तरस्येति । आत्मारामपूर्णकामानां भजनकर्तृणामभजनकर्तृणां च । तदेवोक्तं सु. उभयविधानां वा किं फलमिति । तत्र । भजनकर्तृणां धर्मात्मनां यत् तदुक्तं तद् ज्ञेयम् । अभजनकर्तृणां मूर्खाणां यत् उक्तं तज्ज्ञेयम् । मूर्खत्वं तु आत्मारामादीनामभजनकरणाद् ज्ञेयम् । एवं तृतीयस्येति । तृतीयप्रश्न-

विषयस्य अकृतज्ञस्य गुरुद्रोहिणश्चेत्यर्थः । साधनविषयकमिति । अभजतां भजनकर्तुः साधनविषयकमित्यर्थः ।

मिथ इत्यत्र । क्रियमाणे इति । पूर्वस्य उत्तरेण भजने क्रियमाणे इत्यर्थः । अनुमीयते इति । पूर्वेण अनुमीयते इत्यर्थः । अनुमीयते इति । उत्तरेण अनुमीयते इत्यर्थः । अन्याभ्यामिति । स्नेहधर्माभ्यामित्यर्थः । उक्तवाक्ये इति । 'संभोजनी नाम पिशाचभिक्षा' इति उक्तवाक्ये इत्यर्थः । व्यासीति । प्रासीत्यर्थः । असदनुमानत्वादिति । पिशाचभिक्षावदित्यसदनुमानत्वादित्यर्थः । नास्य बाधकतेति । अस्यान्योन्यभजनस्य गुरुसेवायां धर्मत्वे न बाधकतेत्यर्थः । वृत्तिप्रतिष्ठाद्यर्थता इति । गुरुशिष्ययोश्चोभयोरित्यर्थः । अत्र गुरुसेवादिरूपा पूर्वोक्ता या व्याप्तिः सा वाणिज्यवदिति प्रत्यनुमानेन खण्डयन्ति तथा चेत्यादिना । अत्र मिथो भजनमित्यारभ्य इत्यर्थः इत्यन्तस्य अयमन्वयः कर्तव्यः । तत्रापि गुरुसेवावदिति । गुरुसेवावान् मिथो भजनत्वात् गुरुशिष्ययोर्मिथो धर्मत्वान्मिथो भजनं धर्म इति । अत्र । ननु यत्र यत्र इत्यादिपूर्वोक्ता । तादृशी तव या व्याप्तिः । दृष्टार्थत्वान्न धर्मः । कुतो नेत्याशङ्क्याह वाणिज्यवदित्यादिना । सेति । अन्योन्यभजनतेत्यर्थः । सापीति । गुरुसेवापीत्यर्थः । पूर्वोक्तहेतोरिति । वाणिज्यवदिति हेतोरित्यर्थः । तस्येति । गुरुसेवारूपानुमानस्येत्यर्थः । न हेतोरिति । पूर्वोक्तहेतोर्न साधारणत्वमित्यर्थः । व्याप्तेरिति । गुरुसेवारूपाव्याप्तेरित्यर्थः । न बाधकत्वहानिरिति । यत्रान्योन्यभजनत्वं न तत्र धर्मत्वमिति व्याप्तेः गुरुसेवायां पूर्वं यद्बाधकत्वमुक्तम्, तस्य बाधकत्वस्य न हानिरित्यर्थः । सु. यद्यपीत्यारभ्य सिध्यतीन्तस्यार्थः पु. प्र. प्रकारद्वयेनाशङ्कामुद्भाव्योक्तः । तत्र प्रथमः प्रकारः ननु धर्मादय इत्यारभ्य मिथोभजननिन्दा न युक्ता इत्यन्तेनोक्तः । कथं निन्दा न युक्ता इति चेत् तत्रैवोक्तं पुरुषार्थताविषया इति । धर्मस्य ह्यापवर्गस्येत्याद्युक्तप्रकारेण धर्मादीनां मोक्षपर्यवसायित्वान्न निन्दा युक्ता इत्यर्थः । द्वितीयः प्रकारश्च तथेत्यारभ्य अयुक्त इत्यन्तोक्तः । इत्यत आहुरिति । एवमुभयोर्धर्मयोः यथार्थत्वेप्येतयोर्मध्ये मिथो भजने कस्य निन्देत्यत आहुरित्यर्थः । सु. यद्यपीति । उभयविधा अपि धर्मादयो यद्यपि स्वार्था एव, तथापि अन्योन्यभजने ते मोक्षपर्यवसायिनो धर्मादयः न सिध्यन्तीत्यर्थः । यद्वा । अन्योन्यभजनेनेति तृतीयान्तपक्षे ते लौकिकाः सिध्यन्तीति ते निन्द्या इति योज्यम् । तदेवोक्तं पु. प्र. अत्र हीत्यादिना । धर्मादीनामिति । मोक्षपर्यवसायिधर्मादीनां स्वार्थत्वे सत्यपि न निन्दा युक्तेत्यर्थः । तेषामिति । मोक्षपर्यवसायिधर्मादीनामित्यर्थः । तेन तेषामिति । फलदानेन देवानामित्यर्थः । दोषबोधनेन चेति । 'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः । तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव स' इति दोषबोधने चेत्यर्थः । तथा निश्चयादिति । स्वार्थसाधनत्वेन फलतीति निश्चयादित्यर्थः । तेनेति । लौकिकान्योन्यभजनेन ते धर्मादयः लौकिकाः सिध्यन्ति । न तु तद्रूपा इति । अलौकिकाः

मोक्षविषयाः धर्मादयः न सिध्यन्तीत्यर्थः। अनुपपत्तेरुक्तत्वादिति फलं ददतां देवानां धर्मानुपपत्तेरुक्तत्वादित्यर्थः। तत्र अकरणे इति। द्वितीयेन प्रतिभजनाकरणे सतीत्यर्थः। सु. तथा सौहार्दमपि यद्यन्यमपेक्षेतेति। यथा धर्मादयो न सिध्यन्ति, तथा सौहार्दमपि यद्यन्यत् यत्किञ्चित् फलमपेक्षेत, तदा क्रोधाभावेपि सौहार्दमपि न सिध्यतीत्यर्थः। सेवादिदानेप्यपीति। सेवां कारयित्वा धनादिदाने सेवाकर्तुः दुःखनिवृत्तिः फलं, न तु धर्मफलं कस्यापीत्यर्थः। अन्यस्येति यस्योपकारं करोति तस्येत्यर्थः।

भजन्त्यभजत इत्यत्र। सु. अवसरे इति। पुत्रादीनां सामर्थ्ये प्राप्ते सतीत्यर्थः। टि०। पातकादिसम्भवे इति। निरपवादधर्मे न पातकादिसंभावना, सापवादधर्मे संभावना। तदेवोक्तं पु. प्र. लौकिकानिष्टमिति। तदेव विचारितं कामसूत्रेण तथा चेत्यादिना। तत्र लिङ्गिन इति। अन्येपि भक्तिमार्गीयादिलिङ्गिन इत्यर्थः। मित्रवाक्यादिति। यस्यामासक्तः सा एव मित्रं, तस्या वाक्यादित्यर्थः। आनृशंस्यादिति। लज्जां त्यक्त्वा इत्यर्थः। संशयपरिहारस्तु व्याख्यानान्ते। तथा च ब्राह्मणस्येत्यादिनोक्तो द्रष्टव्यः। तदर्थमिति। सापवादभजनं कृतं, येन तदर्थमित्यर्थः। वेश्याभूतया इति। पञ्चपुरुषाणां सङ्गं या करोति, सा वेश्याप्राया भवति, तथाभूतया इत्यर्थः। अदृष्टबुद्ध्या इति। मद्दोषमयं नाशयिष्यतीति बुद्ध्या इत्यर्थः। तथेति। अस्य भजनीयस्य नोपयोग इत्यर्थः। अपतितं इत्यादिविशेषणात्तथेति। यदि स्वयमपतितः, तदा भजनकर्तुः पापं निवर्तयितुं समर्थो भवतीत्यर्थः। तदेवोक्तं टि० अन्यथा तेजस्वन्तमिति न वदेदिति। पु. प्र. तथेति। भजनीयकर्तृकं भजनं पूर्वभजनकर्तृषु गच्छतीत्यर्थः। टि० अस्येति। भजनीयस्येत्यर्थः। भक्तेष्विति। भजनकर्तृषु इत्यर्थः। तद्भजनस्येति। धर्मार्थं यो भजते तस्येत्यर्थः। तेनेति। भजनकर्तुः भजनेनेत्यर्थः। तादृक्फलसाधकत्वेनेति। पापनिवृत्तिरूपफलसाधकत्वेनेत्यर्थः। तद्भजनविधाने इति। भजनकर्तुः भजनकरणे इत्यर्थः। तादृग्धर्मवत्त्वस्यैवेति। प्रायश्चित्तरूपधर्मवत्त्वस्यैवेत्यर्थः। पु. प्र. कर्मदेवतागवादिष्विति। सुबोधिन्युक्तं कर्मादिष्विति योज्यम्। प्रतियोगिनीति। सुबोधिन्युक्तगवादिप्रतियोगिनि भजनशंकाभावादत्र धर्मेऽविवक्षितत्वमित्यर्थः। तत्रापीति। गवादिष्वपीत्यर्थः। न तेन तथेति गवादिषु अज्ञत्वादिना धर्माभावान्न अविवक्षितत्वमित्यर्थः। उक्तशङ्काभावादेव तथेति। प्रतियोगिनि भजनशङ्काभावादविवक्षितत्वमित्यर्थः। सु. यत्र पुनरित्यादिना निरपवादो धर्मः वक्तव्यः। तत्र प्रथमं मूलश्लोकस्य एवमन्वयः कर्तव्यः।

भजन्त्यभजतो ये वै इति। ये करुणाः पितरौ अभजतः वै निश्चयेन भजन्ति तदा धर्मो निरपवादो भवतीति योज्यम्। निश्चयेन भजनं तु प्रत्युपकाररहितमिति ज्ञेयम्। तदेवोक्तं आधारे प्रत्युपकारः संभवतीति। भजनीये प्रत्युपकारसामर्थ्ये सत्यपीत्यर्थः। तत्र प्रवृत्ताविति। तस्य भजनकरणे इत्यर्थः। पूर्वस्येति। भजनकर्तुरभजने

इत्यर्थः । उत्तरभजने इति । अभजनकर्तुः केवलभजनकरणे इत्यर्थः । तादृशं निरपवाद-भजनमोघवत्या ऋषिपत्या कृतं, तदुदाहरणं पु. प्र. अत्रेत्यादिना उक्तं द्रष्टव्यम् । नन्वेवं भजने मर्यादाभङ्गो भविष्यतीत्याशङ्क्य सुबोधिन्यामाहुः अधिकारिविशेषणमित्यादिना । एवं भजने कोधिकारीत्यधिकारिविशेषणमित्यर्थः । पु. प्र. धर्मजनके इति । अतितेजस्विनि करुणा कर्तव्या, यथोघवत्या कृता, न तु सर्वत्र, अतो न मर्यादाभङ्ग इति भावः । सौहृदजनके इति । पुत्रादिषु सौहृदं कर्तव्यमित्यर्थः । एवं निरपवादधर्मं निरूप्य सापवादधर्मं निरूपयन्ति सु. अन्यत्रापीत्यादिना । तद्धर्मातिदेशमाहेति । स्वाभाविककरुणारहितानां धर्मान् दृष्टान्तार्थमाहेत्यर्थः । यथेति । यथान्ये संसारिणोपि करुणां पितरौ अभजन्तं भजन्तीति दृष्टान्तार्थं तथेति योज्यम् । तदेवोक्तं ये संसारिण इत्यादिना । ननु दृष्टान्तदार्ष्टान्तिकयोरेकविधनियमात् सापवादनिरपवादभजनकर्तारः कथमेकविधा भवन्ति, अतः कथं वा दृष्टान्तदार्ष्टान्तिकयोरेकविधत्वमित्याशङ्कापरिहारायाहुः संबन्धस्त्वित्यादिना । तदर्थः पु. प्र. ननु राजधर्मे इत्यादिनोक्तः । तत्र संबन्धादेव तथाभाव इति । भजनीयानां कर्मप्राबल्याद्भजनकर्तॄणां निरुपाधिकभावो भवतीत्यर्थः । भावभेदेपीति । उभयेषां भावभेदेपीत्यर्थः । एकविधा एवेति । एकविधा एव प्रतीयन्ते, नत्वेकविधा इत्यर्थः । तदेवोक्तं एतेनेत्यादिना । तेन पूर्वोक्ता शङ्का परिहृता ज्ञेया । सुबोधिन्यामुपमानोपमेययोरभेदादेकविधत्वं यदुक्तं तदपि दृष्टान्तदार्ष्टान्तिकयोरेकविधत्वज्ञापनाय, न त्वेकविधत्वाभिप्रायेणेति भावः । पु. प्र. तस्यैवेति । ब्राह्मणस्यैवेत्यर्थः । श्येनवदिति । श्येनपक्षिवच्छलेन धर्षणकर्तुः गमनमधर्म एवेति भावः । सु. उक्तविश्वासायेति । मध्यमाधिकारिणामप्युक्तधर्मे विश्वासो भवति, न तु हीनाधिकारिणामतो भवतीनां त्वधुना मम प्रतिभजनापेक्षया मध्यमाधिकारित्वं जातम्, पुनरपि मदुक्तविश्वासादग्रे उत्तमाधिकारित्वं भविष्यतीति भावः ।

भजतोपि न वै केचिदित्यस्याभासे । सु. भजनार्थं भजत इति मिथो भजन्तीत्यत्रोक्ता ज्ञेयाः । सौहृदेन वेति । 'भजन्त्यभजतो ये वै' इत्यत्रोक्ता ज्ञेयाः । धर्मार्थे तु न शङ्केति । तत्रैवोक्ता ये करुणास्ते आत्मारामस्य पूर्णकामस्य धर्मार्थं भजनं कुर्वन्ति तेषां भजनमात्रेण धर्मः सिध्यति । अतो न प्रायश्चित्तार्थं शङ्केति भावः । तदेवोक्तं पु. प्र. धर्मार्थे त्वित्यादिना । तत्र । तस्मिन्निति । अवसरे इत्यर्थः । तदर्थमिति । कृतघ्नतापरिहारार्थमित्यर्थः । प्रायश्चित्तक्रियामात्रेण चारितार्थ्याच्चेति । आत्मारामाप्तकामानां प्रायश्चित्तं नाम पापनिवृत्तिरूपा या स्वाभाविकी क्रिया तन्मात्रेण चारितार्थ्यादिति भजनकर्तॄणां फलसिद्धेः, अतस्तदर्थं पृथक् प्रायश्चित्तकरणेन तेषु शङ्केत्यर्थः । सु. अभजत इति । अभजतः कुत इत्यत्रोक्तानभजनकर्तॄन् दीनान् धर्माधिकारिणश्चेत्यर्थः । तदेवोक्तं व. टे. प्रतिभजनेऽसमर्थान् समर्थांश्चेत्यर्थः । सु. पूर्वोक्तन्यायेनेति । नोभयांश्च भजन्त्यन्य इत्यत्रोक्तभजदभजनन्यायेनेत्यर्थः । व. टे. तद्धर्माणामिति । आत्मारामादिचतुर्णां धर्माणां

पृथक्करणार्थमित्यर्थः । सु. प्राप्तः कामो यैरिति । 'काममयोऽयं पुरुषः', 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति'रिति श्रुत्युक्तः । प्राप्तः कामो यैस्तेपि भक्ता नान्येषां भजनं कर्तुं शक्नुवन्ति इति भावः । पु. प्र. प्रतियोगीति । पूर्णकाम इत्यर्थः । स्वरूपं ज्ञातं भवतीति । आप्तकामस्य पूर्णत्वं स्वस्य[1] चाज्ञत्वं ज्ञातं भवतीत्यर्थः । व. ले. दयां धर्मं चेति । येषां भजने दया धर्मश्च भवति तान् पूर्वोक्तान् दीनान् धर्माधिकारिणश्च उभयविधान् न भजन्ति ते अकृतज्ञा ज्ञेयाः । दयाधर्मेति । स एव दयाधर्मसंपादकः, तान्न भजन्ति ते गुरुद्रुह इत्यर्थः । तदेवोक्तं पु. प्र. अकरणेऽज्ञानसंभवादिति । दयाधर्मसंपादकानां भजनाकरणे अज्ञानमेव हेतुरित्यर्थः । पु. प्र. अत्रेदं सिद्धमित्यादिना मिथो भजन्तीत्यादिश्लोकत्रयाणां समुदायार्थकथने । तत्र । अभिसंहिते इति । मिलने इत्यर्थः । क्रोधादिति । यथेन्द्रद्युम्नं प्रति अगस्त्यक्रोधादित्यर्थः । इतीत्यन्तग्रन्थे प्रथमश्लोकस्य व्याख्यानम् । स्नेहप्रयुक्तमिति । स्नेहेन प्रेरितं सौहृदार्थं पुत्रादीनां भजनं तल्लौकिकमित्यर्थः । धर्मफलमिति । पुत्रादीनां भजनकाले सुखजननात् धर्मफलमित्यर्थः । अल्प इति । सौहार्दस्य मुख्यत्वादित्यर्थः । प्रयोजक इति । सौहार्दकरणे प्रयोजक इत्यर्थः । ऐहिक इति । अस्मिन्नेव जन्मनि प्रथमतः सम्बन्ध इत्यर्थः । दुर्ज्ञेयत्वादिति । ऐहिकः पारलौकिको वा सम्बन्धो न ज्ञायत इत्यर्थः । अतोऽयं सापवादो धर्मो वा निरपवाद इत्यपि न ज्ञायते । तर्हि कदा ज्ञायेत इत्याशङ्कायां ज्ञानप्रकारमाहुः संभावितापवादस्थले इति । यदा भजनीयः सौहार्दलक्षणं प्रत्युपकारं करोति, तदा तत्स्थले भजनकर्तुरपवादोपि भवतीत्यर्थः । प्रतियोगिनस्त्विति । अभजतो भजनकर्ता तस्येत्यर्थः । वैदिकमिति । भजनमित्यर्थः । प्रतियोगिकेति । देवताभजनकर्ता इत्यर्थः । असमानेति । गोः पङ्कोद्धारकर्ता । समानेति । प्रत्युपकारं कर्तुं समर्थ इत्यर्थः । नृणामनित्यचित्तत्वादिति । भजनकाले निरपवादभावः कालान्तरप्रत्युपकारं गृह्णातीति अनित्यचित्तत्वमित्यर्थः । प्रायश्चित्तमिति । यथा वासुदेवविप्रेण कृतमित्यर्थः । धर्म इति । तीर्थाटनादिर्धर्म इत्यर्थः । स्यादितीत्यन्तो द्वितीयः । संभावितेत्यारभ्य भजत इत्यन्तग्रन्थः पूर्वं गोपिकानां प्रश्ने, सुबोधिन्यामभजतो भजने कश्चिद्दोषः स्यात् । यथा निष्कामे कामिनी इत्यत्रोक्ताभिप्रायेणात्राप्यभजतो भजनप्रस्तावे उक्तो ज्ञेयः । यथाऽभजतो वासुदेवविप्रस्य भजने दोषे सती जाता । तथात्राप्यात्मारामस्य भजने दोषो भवतीति भावः । नैतादृशा इति । अभजनकर्तारो नात्मारामादिसदृशाः । केवलदीना धर्माधिकारिणश्चेत्यर्थः । द्रोहिण इतीत्यन्तः तृतीयः ।

नाहमित्यस्याभासे । सु. गोपिकानां हृदये इति । समाजयित्वा इत्यत्र अनङ्गदीपनपदस्यार्थविचारे पूर्वमपि विचार उत्पन्नः । अस्मद्दोषेण स्वदोषेण वा त्यक्ता इति

1 मात्र प्रामाणिकः पाठः, कामम्गुदितमेवपुस्तकं द्रष्टव्यमत्र ।

तदुत्तरजातं निर्धारयन्ति। तदनुवादः श्रीमदाचार्यैः कृतः अभजनेत्यादिना। तत्र। भजनसामर्थ्यस्यापि विद्यमानत्वात् अभजनकर्तृत्वात् मिथोभजनपक्षः अभजद्भजनपक्षश्च व्यावर्तित इत्यन्वयः। तेन भगवति दोषो निर्धारितः सोपि परिहृतः नन्वित्यादिना। पु. प्र. भजनसामर्थ्यसत्तया इति। अभजनकर्तृत्वात् असामर्थ्ययुक्तमिति ज्ञेयम्, न तु सामर्थ्याभाव इतिभावः। शिष्टानामिति। नाहं त्वित्यादीनामित्यर्थः। तमपीति। स्नेहभजनपक्षमित्यर्थः। सु. अत इति। यतो गोपिकानां भजनसिद्ध्यर्थं प्रथमतः स्वयं भजनं करोति, अतो न लौकिकात्मारामादिसदृशो भगवानित्यर्थः। पु. प्र. चात्रा इति। पितरो यथेत्यत्रोक्ता ज्ञेयाः। पञ्चमोयमिति। आत्मारामाद्यतिरिक्तः नाहं त्वित्यत्रोक्तभजदभजनकर्ता इत्यर्थः। तथेति। अविचार्य इत्यर्थः। उभयोरिति। उभयोर्मध्ये भगवानविचार्य इत्यर्थः। द्वितीयेति। आत्मारामाः सकामरूपा इति प्रथमा कोटिः। अकृतज्ञादिरूपा इति द्वितीया ज्ञेया। पूर्वोक्तकोटिपञ्चकमिति। व्याख्याने भजतोनुभजन्त्येके इत्यत्र मिथो भजनकर्त्रोः कीदृक् स्वरूपमिति प्रश्नरूपा एका कोटिः। एक एतद्विपर्ययमित्यत्र अभजद्भजनकर्तुः तस्य अभजतश्च किं फलम्। नोभयांश्च भजन्त्यन्ये इत्यत्र भजदभजनकर्तृणामात्मारामादीनाम्। तेषां च भजनकर्तृणां किं फलमिति पञ्चकोट्यः। शुकादिभिरित्यादेरयमर्थः। शुकादीनामात्मनि स्थित्वा भगवान् रमते, अतो भगवानात्माराम इत्युच्यते इत्यर्थः। न तु व्यावर्त्यव्यावृत्तय इति। भगवति तु अयमात्मा भिन्नोस्ति तस्मिन्नहं रम इति न भेदोस्ति। अतः शुकादिभिर्न व्यावर्त्यव्यावृत्तये आत्माराम इत्युच्यत इत्यर्थः। तदुक्तं सु. ममेत्यादिना। पु. प्र. न स पक्ष इति। आत्मारामेति पक्षो नेत्यर्थः। एवमिति। वेदे 'सोकामयते'ति। अभिध्यैवोपदिश्यते इति। कथनमात्रेणोपदिश्यत इत्यर्थः। तत्र दृष्टान्तमाह नहीत्यादि। सोपि पक्ष इति। आत्मकामपक्ष इत्यर्थः। नाहमित्यत्र। सु. जीवानामिति। अमीषां प्रजीयजीवानामनुवृत्तिवृत्तये परोक्षभजनं करोमि इति योज्यम्। एतदर्थो न पारयेहमित्यस्य टिप्पण्यामाभासे मकृते इत्यादिनोक्तो द्रष्टव्यः। सु. प्राणिमात्रमिति। प्राणिमात्रशब्देन साधनमार्गीयजीवान् भजतोपि नाहं भजामि, तेषां तु फलं दत्वा निश्चिन्तो भवामि इति योज्यम्। एतदर्थोपि तत्रैव टिप्पण्यां साधनेत्यादिना, अग्रे निरुध्य इत्यादिनोक्तो द्रष्टव्यः।

एवं मदर्थे इत्यत्र। सु. त्रयः पदार्थाः त्यक्तव्या इत्युक्तम्। तत्र स्वपदस्यार्थः पतिपुत्रादयो दुस्त्याज्या इत्युक्तः, तदर्थेऽरुचिं मत्वा वस्तुतस्त्वित्यादिनोक्तः स्वपदस्यार्थो ज्ञेयः। एकं फलमिति। वः युष्माकमनुवृत्तये इत्येकं षष्ठ्यन्तं फलम्। वः युष्मान् परोक्षं भजता तिरोहितमित्येकं द्वितीयं तं फलमिति योज्यम्। न सतामिवेति। सतां यथा मम प्रत्यक्षमात्रेण फलसिद्धिर्भवति, न तथा भवतीनाम्, किन्तु विप्रयोगेणैवानुवृत्तिरूपं फलं भवति। तत्करणे भवतीनामसामर्थ्यादबला इत्युक्तम्। अतो मया तिरोहितमिति

१ भजनसामर्थ्यसत्तयेति शुद्धः पाठः।

भावः। कृतज्ञत्वादयो हीति। आदिपदेन अकृतज्ञत्वधर्मा अपि। न प्रीतिविषये इति। यत्र प्रीतिपदार्थः तत्र न भवन्ति। तदेवोक्तं वृत्रस्य चतुःश्लोक्यां 'प्रियं प्रियेवे'ति पदस्य व्याख्याने श्रीमत्प्रभुचरणैः प्रियपदान्निरुपाधिकः स्नेहो निरूपित इति। स्नेहस्य तथात्वं तदभिज्ञेनोक्तम्, 'आविर्भावदिने न येन गणितो हेतुस्तनीयानपि, क्षीयेतापि न वापराधविधिना नत्या न वै वर्धते। पीयूषप्रतिवादिनस्त्रिजगतां दुःखद्रुहः साम्प्रतं, प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्मिष्ठता गौरव' मिति। अत्र। येनेति। स्नेहेनेत्यर्थः। अत उभयोर्मध्ये सोपाधिकः स्नेहो न केनापि कार्य इति सारम्।

न पारयेहमित्यस्य टिप्पण्याम्। मर्यादामिति। एतासां भजनानुरूपभजनं दासभावेनैव कार्यम्। तत्र ऐश्वर्यादिरूपा मर्यादा न कापि स्थापनीया इत्यर्थः। एतेनेति। विप्रयोगाभावे स रसोऽसम्पूर्ण एव स्यादित्यादिनोक्तेनेत्यर्थः। एवं सतीति। प्रकृते दास्यमित्यादिपूर्वोक्तप्रकारेण ईश्वरत्वमेवाशक्तौ हेतुरित्याशयेन। प्रभुराहेति। न पारयेहमिति प्रभुराहेत्यर्थः। *इत्याहुरिति श्रीमदाचार्यचरणा भक्तिमार्गे विरोधं परिहर्तुं ताः स्तौतीत्याहुरित्यर्थः।* पूर्वकक्षापन्नत्वादिति। पूर्वं भावे विद्यमाने पश्चादन्यानि साधनानि भवन्ति, न तु पूर्वस्थितानि साधनानि भावं संपादयन्तीति भावस्य पूर्वकक्षापन्नत्वम्। सदैकरूपत्वेन। नित्यत्वेनेति। स च भावः स्वामिनीषु सदैकरूपो नित्यश्चेति कथं सम्पादनं संभवतीत्यर्थः। अत एवेति। यतो भगवतैव भावदानं कृतं तदैतस्यैव भावदानस्यैव प्रत्युपकृतिरूपत्वं जातमित्यर्थः। तर्हीति। तर्हि भावदानस्यैव प्रत्युपकृतिरूपत्वे भगवतोक्तं 'न पारये' इत्यनुपपन्नं स्यादिति योज्यम्। वैपरीत्यमिति। प्रत्युत एतासां प्रत्युपकृतित्वेऽशक्यत्वमापद्यत इत्यर्थः। नहीति। यथा नहीति योज्यम्। अग्रे। तथा प्रकृते इति वक्ष्यमाणत्वादित्यर्थः। असमर्थे दृष्टान्तमाह अत एवेत्यादिना। न शक्यन्ते त्विति। 'जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः। न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि' इति मुचुकुन्दं प्रति भगवतोक्तम्। यथा मम जन्मकर्मादीनि अनन्तत्वात् परिसङ्ख्यातुं मया न शक्यन्ते, तथा सर्वसामर्थ्यवत्त्वेपि द्वितीयमीश्वरं कर्तुमसमर्थोहमित्यर्थः। केवलेत्यारभ्य मन्तव्यमित्यन्तस्यायमाशयः। यद्यपि स्वामिन्यः संयोगे विप्रयोगे भावात्मकरसात्मकस्यानुभवं कारयन्ति, तथैतासामपि भगवान् कारयतीति तदनुरूपभजने नाशक्तिः, तथाप्येतासा'मेवं मदर्थोज्झिते'त्यत्र स्वत्यागोप्युक्तः, अतः स्वप्रत्युपकृतिः स्वात्मगामिन्येव भवतीत्यशक्तिरेव निःप्रत्यूहेति मन्तव्यमित्यर्थः। अन्यथेति। तदनुरूपवस्तुसत्त्वे इत्यर्थः। नन्वेवमपीति। स्वार्थत्वेपीत्यर्थः। नोपपन्नमिति। भगवता स्वरूपात्मकानन्दः स्वभोगार्थं स्वामिनीषु स्थापयित्वा स्वयं भुज्यते चेत् स्वामिनीकृतोपकाराभावा'न्न पारय' इति कथनं नोपपन्नमित्यर्थः। एताभ्य इति। एतत्स्वामिनीद्वारेत्यर्थः। एतादृशत्वेनेति। एताभ्य एव तदनुभावत्वेनेत्यर्थः। एवं कथनस्येति। न पारयेहमिति कथनस्येत्यर्थः। स्वरूपनिरूपणमेवाह यथेत्यादिना। 'यन्मर्त्यलीलौपयिक-

स्वयोगमायाबलं दर्शयता गृहीतम् । विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषण-भूषणाङ्ग'मित्यत्र वस्तुस्वरूपनिरूपणमिति । यथा तृतीयस्कन्धे उद्धवैर्वस्तुस्वरूपनिरूपणं कृतम्, तत्र भगवत्सौन्दर्यस्य सर्वदा विस्मापकत्वेपि विस्मापकं स्वस्येति यदुक्तम्, तत् भगवतः दर्पणादिदर्शनेन विस्मयो भवतीति वस्तुस्वरूपनिरूपणमित्यर्थः । तथात्रापीति । भगवतः रसात्मकस्वरूपं श्रुतिसिद्धं सर्वदा अस्त्येव, तथापि यदा स्वामिनीसम्बन्धेन रसानुभवं करोति, तदा रसात्मकस्वरूपानुभावात् स्वस्य विस्मयो भवतीत्यर्थः । सर्वमनवद्यमिति । एवं सर्वाशङ्कापरिहारोक्त्या 'न पारयेह'मित्यादिनोक्तं सर्वमनवद्यमित्यर्थः । सु. तत्रापि विशेषमाहेति । निःकपटभजनादपि सर्वत्यागपूर्वकभजने विशेषमाहेत्यर्थः । जीर्यतोपीति । देहादि जीर्यतोपीत्यर्थः । यैरित्यारभ्य समर्पितवस्य इत्यन्तेन भजनरूपमाह तत्र यैरिति । प्रतिबन्धाद्यैरित्यर्थः । बहिःशृङ्खला इति । लोहकाष्ठादिरूपा इत्यर्थः । टिप्पण्यां तथा(च)भजने इति । प्रत्युपकारापेक्षया भजने इत्यर्थः । तत्संभवादिति । सोपधिभजनसंभवादित्यर्थः । सु. नो चेदिति । यदि भवतीनामधुना प्रत्युपकारापेक्षा जाता, तदा यथासुखं तथा भजनं विधेयम्, तथाहमपि प्रत्युपकारार्थभजनं करिष्यामि, तथापि मे प्रत्युपकारो न भविष्यत्येवेति, अत एवोक्तं नह्यशक्यमित्यादि । टि० अयं भगवन्निष्ठोपि हेतुरिति । सोपधिभजनासंभावनारूपो हेतुर्भगवन्निष्ठोपि ज्ञेयः । भगवति स्वामिनीविषयकं सोपधिभजनं न संभवति । अतः प्रत्युपकृतिरशक्येत्यर्थः ।

इति श्रीश्रीमत्कल्याणरायचरणसन्निधौ वृषभानुपुरे गोस्वामिश्रीप्रद्युम्नात्मज-गोस्वामिश्रीसात्त्वतेशसहायेन श्रीमत्पञ्चाध्यायीयचतुर्थाध्यायीय'भज-तोनुभजन्त्येक' इत्यत्रोक्तसुबोधिन्यादेः प्रकीर्णदीपिका पाहाड श्रीविश्रामात्मजहरिकृष्णेन कृता समाप्तिमगमत् ।

---

१. प्रत्युपकारापेक्षयेति पाठः ।

श्रीगोपीजनवल्लभाय नमः

# भगवानपि ता रात्रीरित्यत्र श्रीमत्प्रभुचरणानां स्वतन्त्रलेखः ।



प्रसीदन्तु सदा रासलीलारसपयोधिषु ।
निष्कलङ्ककलानाथीभवद्वाचोऽस्मदीश्वराः ॥ १ ॥
ब्रह्मानन्दात्समुद्धृत्य भजनानन्दयोजने ।

## श्रीगोपेश्वराणां कारिकाविवरणम् ।

अथ श्रीमत्प्रभुचरणाः फलप्रकरणीयं स्वहार्दमर्थविशेषमुत्कटभगवद्भाववशात्प्रकटयितुकामाः श्रीमदाचार्यचरणातिशयितवात्सल्यविलासायितस्य तदीयस्यैव रहस्यतमस्यैतदर्थस्य स्फुटीकरणं कदाचित्तदनभिमतं चेदनुचितमिदमिति भावस्वभावादेव सम्भावयन्तस्तेषां प्रसादं पूर्वं प्रार्थयन्तः प्रकरणाध्यायार्थं कियतीभिः कारिकाभिः विशदयन्ति प्रसीदन्त्विति । अस्मदीश्वराः अस्मत्प्रभवः श्रीमदाचार्यचरणाः प्रसीदन्तु प्रसन्ना भवन्तु । तेनैवास्माकं निःप्रत्यूहमखिलाभीष्टसिद्धिरिति भावः । अस्मदीश्वरत्वेनोक्त्या यैरस्माकमैश्वर्यं स्वतः कृपया साधनराहित्येपि स्वीकृतं, विविधफलसम्पादनेनास्मासु प्रकटीकृतं वा, ते स्वत एव निरस्तसमस्तप्रतिबन्धमस्मदभिमतं साधयिष्यन्तीति सूच्यते । कीदृशाः पुनरस्मदीश्वराः ? सदा निरन्तरं रासलीलासम्बन्धी यो रसो भगवत्स्वरूपात्मकः शुद्धपुष्टिमार्गीयभक्तेषु प्रकटितः सर्वेन्द्रियास्वाद्यो मोक्षाधिकभजनानन्दात्मा, तस्याधारभूताः पयोधयः समुद्राः फलप्रकरणीयाः पञ्च सप्त वाध्यायास्तेषु निःकलङ्को यः कलानाथः पूर्णचन्द्रस्तद्रूपा भवन्ति वाग्विवृतिरूपा येषां तादृशाः । तथा च यथा पूर्णः पीयूषभानुः पयोधिषु प्रतिक्षणमधिकाधिकविलक्षणवीचिनिचयमुदञ्चयति, तथा श्रीमदाचार्यवर्यवागपि विवृतिरूपैतेष्वध्यायेषु निरवधिविविधभावनिवहमिति भावः सूचितः । एतेन श्रीमदाचार्यचरणानामलौकिकः शुद्धपुष्टिमार्गीयान्तरङ्गतमलीलासम्बन्धिबहुविधानन्तभावानुक्षणाविर्भावकत्वरूपः परमोत्कर्षः सूचितः । किञ्च, श्रीमदाचार्यचरणवाचो रासलीलापयोधिषु निःकलङ्ककलानाथीभवनत्वोक्त्या लोके यथा समुद्रोल्लासादिकार्यं चन्द्रेतरेण कदापि न सम्पद्यते, तथैतत्समुद्रभावोल्लासादिकमपि श्रीमदाचार्यचरणप्रकटितैतद्विवरणरूपवाग्व्यतिरिक्तेन कदापि न भवतीति ध्वन्यते । यद्वा । रासलीला एवागाधत्वाद्रसात्मकत्वाद्रसपयोधयस्तेषु तादृशा अस्मदीश्वराः प्रसीदन्त्वित्यर्थः । एतेन स्वप्रकाशनीयानां भावानां श्रीमदाचार्यवर्यविरचितविवरणविचारणोचितोदञ्चितचारुतरानिर्वचनीयानुभवैकगोचरफलप्रकरणीयभावनिकराणां निर्विचिकित्ससिद्धिस्तत्प्रसादमात्रपरतन्त्रेति तत्प्रेप्सुभिः कृतसुकृतनिकायैः श्रीमदाचार्यप्रकटितशुद्धपुष्टिसम्प्रदायैकप्रविष्टैस्तदर्थमेव सर्वत्यागेन प्रयतनीयमित्युपदेशोपि स्वान्तरङ्गसेवकेषु ज्ञापितः । प्रकरणार्थमाहुः ब्रह्मानन्दादिति । भजनानन्दतारतम्यज्ञापनेन रसवि-

लीला या युज्यते सम्यक् सा तुर्ये विनिरूप्यते ॥ २ ॥
सर्वसामर्थ्यवत्त्वेन यदीमं पूर्ववद्धरिः ।
दद्यात्तदोद्धृतिर्व्यर्था भवेदेतददानतः ॥ ३ ॥
यस्मादेतादृगेवास्य रूपं नह्यन्यथाकृतिः ।
देयस्य सम्भवत्येवमपेयात्तत्र देयता ॥ ४ ॥
अतोयमेव युक्तोत्र प्रकारो नापरो मतः ।
स्त्रिय एव हि तं पातुं शक्ता यस्मात् पुमान् हरिः ॥ ५ ॥
*अतो हि भजनानन्दः स्त्रीषु सम्यग्विधार्यते ।*
अहर्निशं चात एव रेमेन्तर्बाह्यभेदतः ॥ ६ ॥
रसिकानुभवाद्धेयमान्तरं तु महाफलम् ।
अतः शब्दात्मिका लीला सर्वोत्कृष्टा निरूप्यते ॥ ७ ॥
आदौ रूपेण रमणं पञ्चभिः प्रोच्यते बहिः ।

---

शेषास्वादज्ञापनाय व्रजस्थभक्तानां पूर्वमनुभावितो यो ब्रह्मानन्दस्तस्मादत्यधिकभजनानन्ददित्सया *सम्यगुद्धृत्य स्वस्वरूपात्मकं भजनानन्दं तत्र योजयितुं या लीला रासादिरूपा* युज्यते युक्ता भवति । एतद्व्यतिरेकेण ब्रह्मानन्दवत्तद्दाने तत उद्धृतेर्व्यर्थता स्यात् । स्वानन्ददानार्थमेव तत्करणात् । रासलीलातिरिक्तप्रकारेण चैतद्दानैतत्स्वरूपलाभस्यैवासम्भवेनेतद्दत्तमेव न भवेत्, अत एतद्दानानुरूपैव सा लीला तामसप्रकरणस्य तुर्येन्तिमे फलप्रकरणे विशेषेण निरूप्यत इत्यर्थः । सर्वेत्यारभ्य मत इत्यन्तस्यार्थ उक्तप्राय इति नोच्यते । ननु व्रजस्त्रीष्वेव भजनानन्ददानं प्रभोः किंनिदानमित्यत आहुः स्त्रिय एव हीति । यस्मात् हरिः सर्वदुःखहर्ता पुमान् पुरुषरूपश्चिकीर्षितलीलायोग्यस्त्रीभोग्यत्वेन मूर्तो रसात्मक एव गोकुलवृन्दावनादिषु प्रकट इति तत्रत्याः स्त्रियः सीमन्तिन्य एव पूर्णं तं तथाविधं रसात्मकं पातुं सर्वेन्द्रियैरास्वादयितुं शक्ताः समर्थाः रसशास्त्रोक्तवयोगुणविशेषादिसम्पन्नाः, अतस्तास्वेव भजनानन्दः सम्यक् सर्वप्रकारो विधार्यत इत्यर्थः । अहर्निशमिति । यतो रसात्मकस्य भगवतः स्वरूपानुभवे विविधरसभावपोषकत्वादिना घोषभूषणभक्ता एवानुरूपाः, नान्य इति तत्रैव रात्रिदिवं रमणं कृतवान् बाह्याभ्यन्तरभेदेन, न तु मनागपि व्यवधानेन तथेत्यर्थः । तत्रापि बाह्यरमणापेक्षयान्तरं रमणं प्रियविप्रयोगसामयिकानुभूतचरानिर्वचनीयानेकभावनिचयात्मकगुणगानरूपं महाफलम्, तस्य तथात्वं रसिकानां भगवत्स्वरूपात्मकरसानुभवविशेषाभिनिवेशभाजां भक्तानामनुभवात् धेयं ज्ञेयम्, न तु तदतिरिक्तमपि तत्र किञ्चिन्मानं वक्तुं शक्यमित्यर्थः । तदेतन्नामात्मकभगवत्स्वरूपमायात्मकरमणं दोषरहितं सप्तमाध्यायार्थ इत्यत आहुः अत इति । प्रथमं बाह्यरमणं रूपेण पद्यात्मकेन कृतमिति पञ्चभिरध्यायैस्तदुच्यत इत्याहुः

आत्मना प्रथमा लीला मनसा च ततः परा ॥ ८ ॥
वाक्प्राणैस्तु तृतीया स्यादिन्द्रियैस्तु ततः परा ।
शारीरी पञ्चमी वाच्या ततो रूपं प्रतिष्ठितम् ॥ ९ ॥
यथेन्द्रियादिरूपत्वं शुद्धस्य ब्रह्मणस्तथा ।
आत्मादित्वमपि ज्ञेयं भक्तानुभवतस्तथा ॥ १० ॥
स्वानन्ददानं पड्विंशे उच्यते साधनान्वितम् ।
वस्तुतस्तु तदप्येतद्रूपमित्येव वक्ष्यते ॥ ११ ॥
नादेन हि रसोत्पत्तिरुच्यते तत्र वीक्षणम् ।

---

आदाविति । पञ्चात्मकरूपतत्तदंशकृता लीला क्रमेण प्रत्येकसमुदायाभ्यां पञ्चभिरध्यायै-र्निरूप्यत इत्याहुः आत्मनेत्यादिना । एतदर्थस्तु निरोधविवृतिप्रकाशे श्रीमदस्मत्प्रभुचरणैरुक्त एवेति नेह निरूप्यते । ननु शुद्धब्रह्मरूपस्य भगवतः केवलानन्दत्वेन तत्र पृथगात्माद्यभावादात्मनेत्यादिनोक्ता विचित्रा लीला कथं तत्रावधारणीयेति चेत्, तत्राहुः यथेति । यथा 'स यथा सैन्धवघनः,' 'आनन्दाद्ध्येव,' 'नित्यं विज्ञानमानन्दं ब्रह्म,' 'आनन्दमयोऽभ्यासात्,' 'आह च तन्मात्रम्,' 'केवलानुभवानन्दस्वरूप' इत्यादिश्रुतिन्यायपुराणवाक्येभ्यो धर्मिग्राहकमानेभ्यः शुद्धमानन्दरूपमपि ब्रह्म, 'चक्षुषश्चक्षुः, श्रोत्रस्य श्रोत्रं, मनसो मनः' 'मनोमयः प्राणशरीरः,' 'यः सर्वज्ञः सर्वशक्तिः,' 'परास्य शक्तिर्विविधैव,' 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मित्यादिश्रुतिस्मृतिवाक्येभ्यश्चक्षुरादिरूपमपीति तथात्वं ज्ञायते । भक्तानां तत्सम्बन्धिविविधभावानुभावाच्च तथा । 'यस्य सर्वाणि भूतानि शरीरम्, यस्य प्राणः शरीरम्, यस्य वाक् शरीरम्, यस्य चक्षुः शरीरम्, यस्य श्रोत्रं शरीरम्, यस्य मनः शरीरम्, यस्य त्वक् शरीर'मित्याद्यनन्तरं 'यस्यात्मा शरीर'मिति वाजसनेयिशाखीयान्तर्यामिब्राह्मणश्रुतेर्लीलामध्यपातिभक्तादृशानुभवाच्चात्मादिरूपमप्यस्तीति तथात्वं ज्ञेयमित्यर्थः । तथाच 'तस्मादेकाकी न रमते, स द्वितीयमैच्छत्,' 'एष ह्येवानन्दयाति,' 'फलमत उपपत्तेः,' 'ब्रजस्त्रीवाह वै हर्षम्,' 'आत्मारामोऽप्यरीरम'दित्यादिवाक्यार्थपर्यालोचनया रमणेच्छाप्रयुक्ततदनुरूपस्वरूपाभिन्नात्मेन्द्रियादिभावात्मकत्वं शुद्धब्रह्मण्येव निर्बाधमिति न पूर्वोक्तानेकविचित्रलीलावधारणानुपपत्तिः । प्रथमाध्यायार्थमाहुः स्वानन्ददानमिति । स्वानन्ददानं स्वरूपानन्ददानं साधनान्वितं सर्वात्मभावसहितं पड्विंशेऽध्याय उच्यत इत्यर्थः । वस्तुतस्तु तदपि सर्वात्मभावरूपं साधनमपि भजनानन्दानुभवात्मकफलरूपमेवैतन्मध्यपातित्वादित्येवाग्रे वक्ष्यत इत्यर्थः । ननु सर्वात्मभावनिरूपणस्य 'दृष्ट्वा कुमुद्वन्त'मितिश्लोकोक्तवेणुकलगानानन्तरमेव सम्भवादितः पूर्वं श्लोकद्वयं किमर्थमुक्तमित्यत आहुः नादेनेति । नादेन भगवत्कृतेन वेणुनादेन रसोत्पत्तिः स्वामिनीना-

---

१ 'साधनमपीत्यर्थः ।

रात्रीन्द्वोर्हेतुरित्युक्तं तेन श्लोकद्वयं तथा ॥ १२ ॥
नायकोद्भटभावेन्दू नायिकारसपोषकौ ।
इतोपि तौ तथाग्रे तु स्पष्टमन्यत्कथावधि ॥ १३ ॥
तथातथा रसोत्कर्षः स्नेहोत्कर्षो यथायथा ।
तस्य व्यञ्जत्वतोत्रैतद्व्यञ्जिका सा कथा मता ॥ १४ ॥
कामोपाधिभवः स्नेहः सहजान्न्यून एव हि ।
तद्वतीषु तथानन्दप्रदानं यत्र तत्र किम् ॥ १५ ॥
वाच्यं सहजतद्भाववतीष्वित्येतयावदत् ।

---

मुत्कटकामरसोदयः, तेन सर्वात्मभावाभिव्यक्तिरभूत् । परन्तु तत्र नाद एव हेत्वन्वेषणे स्वामिनीसम्बन्धिनीनां रात्रीणां नक्षत्रेशस्य च वीक्षणमेव हेतुरिति तन्निरूपकश्लोकद्वयं पूर्वमुक्तमित्यर्थः । पूर्वश्लोकद्वयोक्तौ हेत्वन्तरमप्याहुः नायकेति । अत्र स्वरूपात्मको रसः स्वामिनीभ्यः प्रभुणा देय इति तद्रसपोषकसंपादनं स्वस्यावश्यकं यावन्नायकस्योद्भटभाव इन्दूदयो वा न भवति, तावन्नायिकानां न तथा रसपोष इति इतोपि हेतोस्तौ श्लोकौ पूर्वमुक्तावित्यर्थः । एतच्छ्लोकद्वयस्याग्रे तु अन्यत् कथावधि अन्तर्गृहगतकथापर्यन्तं सर्वात्मभावबोधकं स्पष्टमसन्दिग्धं सर्वमिति न तत्र किंचिद्वक्तव्यमित्यर्थः । ननु सर्वात्मभाववस्तु दित्सितत्वात् स्वरूपानन्दस्य तदर्थमेवाग्रिमलीलाकरणादन्तर्गृहगतानां सर्वात्मभावाभावेन तत्कथा किमर्थमिहोक्तेत्यत आहुः तथातथेति । यथायथा येनयेन प्रकारेण भक्तानां स्नेहोत्कर्षो भावोद्रेकोभिव्यक्तो भवति, तथातथा तेनतेन प्रकारेण भगवतो भक्तानां रसोत्कर्षः रसस्यास्वाद्यस्योत्कर्षः उत्तरोत्तरभावाधिक्यं भवति, स्नेहोत्कर्षाभिव्यक्तिश्च तस्य व्यञ्जत्वाद्व्यञ्जकसापेक्षेत्यत्रैतस्य स्नेहोत्कर्षस्य व्यञ्जिका सा कथा, अन्तर्गृहकथा मता निश्चितेत्यर्थः । कथमस्यास्तद्व्यञ्जकतेत्यत आहुः कामोपाधिभव इति । अन्तर्गृहगतानां स्नेहो 'जारबुद्ध्यापि सङ्गता' इत्युक्तत्वात्कामोपाधिभवस्तत्प्रयुक्त इति लोकप्रसिद्धात्तादृशादत्यधिकोपि सहजादनुपाधिकात् सर्वात्मभावान्न्यूनः स्वल्प एव । हि यतः अतस्तद्वतीषु कामोपाधिकसर्वाधिकस्नेहवतीषु तथानन्दप्रदानं प्रतिबन्धनिराकरणपूर्वकमन्तःप्रवेशनाक्षेपादिना स्वानन्दप्रदानं प्रभोरित्युभयत्र तत्र निरुपधिसर्वात्मभाववतीषु तदधिकसर्वेन्द्रियभोग्यभजनानन्ददानं किं वाच्यमिति कैमुतिकन्यायेन स्नेहोत्कर्षः स्वामिनीनामेतया कथया व्यज्यत इत्यवददित्यर्थः । ननु सर्वात्मभावपूर्वकत्वात् अग्रिमरमणस्य स्वामिनीषु च तस्य सत्त्वादेतासां समागमनाव्यवहितनैरन्तर्येणैव रमणं कथं न कृतवान् । स्वकर्तृकनिषेधवाक्यप्रियाकर्तृकप्रतिवाक्यप्रयुक्तवि-

---

१ रसोत्पादनं पोषणं च संस्थापनाय धर्मस्येत्येतदपि स्फुटमित्यर्थः । २ व्यलत्तयक्तार्भदे-स्वन्देत्यर्थः । ३ अन्तर्गृहगतकथेत्यर्थः । ४ प्रभोरित्युभयत्रेति पाठः ।

एतदागतिमात्रेण यद्यङ्गीकारमाचरेत् ॥ १६ ॥
रसस्तदा न पुष्टः स्यादतस्तानि वचांसि हि ।
उभयोर्वचसामत्र स्पष्टा हि रसरूपता ॥ १७ ॥
मानापनोदरूपत्वात् प्रियस्यापि प्रियावचः ।
श्रोतुमिच्छा ततस्तादृग्वाक्यं पूर्वं हरिर्जगौ ॥ १८ ॥
तदा रसाब्धिरुद्वेलः प्रतिवाक्यैः प्रियेऽभवत् ।
अग्रे स्पष्टं तदग्रे तु रसाधिक्यवशात् तथा ॥ १९ ॥
रसाधिक्येन पुंभावो भवतीति यतो मतम् ।
*यावन्तः प्रियभावास्ते सर्वेप्यत्र समागताः ॥ २० ॥*

---

लम्बेन यत्तदङ्गीकृतवान्, तत्कुत इत्यतस्तत्तात्पर्यमाहुः एतदागतिमात्रेणेति । यदि भगवानेतासामागतिमात्रेणागमनेनैव अङ्गीकारमग्रिमरमणरूपमाचरेत् कुर्यात्, तदा भगवतस्तत्प्रेयसीनां च रसः पुष्टो यादृशो रसशास्त्रे निरूपितस्तादृशो न स्यात्, आभासतां प्राप्नुयादतो हेतोस्तानि वचांसि प्रभोः स्वामिनीनां च 'स्वागत'मित्यादीनि, 'मैव'मित्यादीनि च । हि युक्तोयमर्थः । प्रिययोः परस्परं तथाविधवचनादिभिरेव विविधरसभावोदयस्य रसिकसिद्धान्तसिद्धत्वात् । किञ्च । उभयोः प्रिययोर्वचसां रसरूपता अत्र रमणे रसमध्यपातितया तदात्मकता निरोधविवृतौ स्पष्टा, भगवद्वाक्यानामापाततो निषेधप्रत्यायकत्वेपि फलतः स्थितिनिरूपकतया स्वामिनीवाक्यानां च सम्यक्कृतपूर्वपक्षीकरणपूर्वकस्वसिद्धान्तबोधकतया । ननु प्रभो रसात्मकस्य सर्वदुःखहर्तुः तादृशभक्तेषु रसविरोधितत्क्षोभकवाक्यकथनमयुक्तमित्याशङ्क्य रसविशेषोद्गमार्थमेव स्वेप्सितपूरकतद्वाक्यकथनमिति न रसविरोधक्षोभाद्यनौचित्यावसर इत्याहुः मानापनोदरूपत्वादिति । प्रियस्य सर्वरसास्वादकस्य 'मैवं विभो' इत्यादिरूपविविधभावानुभावकं स्वामिनीतन्मानविशेषापनोदकं प्रियावचः श्रोतुमिच्छा ततो हेतोस्तत्पूर्त्यर्थं तत्क्षोभकवाक्यव्यतिरेकेण तन्न सिध्यतीति तादृग्वाक्यं पूर्वं हरिर्जगाविलर्थः । तेन यदासीत्तदाहुः तदेति । यदा प्रभुस्तादृशवाक्यान्युक्तवांस्तदा प्रिये स्थित एव रसाब्धिः रससमुद्रः स्वामिनीविरचितः प्रतिवाक्यैस्तदुत्तररिन्दुकरनिकरैरिवोद्वेलोऽतिक्रान्तमर्यादोऽभवत्तेन *रमणमाचरत्तदाहुः अग्रे स्पष्टमिति । ननु रमणानन्तरमग्रे स्वामिनीनां* मदमानादि यदगादि, तत्सर्वात्मभावे सति कथं सम्भवतीत्यत आहुः तदग्रे त्विति । प्रियेणात्मप्राधान्येन लीलयात्यन्तरसपूरणात्तदाधिक्यवशादेव तथा मदमानादिकमभूत्, तत् सर्वात्मभाववत एव रसाधिक्येन पुंभावे प्रोद्भूते भवतीत्याहुः रसाधिक्येनेति । स्पष्टार्थमेतत् । यावन्त इति । यतो रसाधिक्येन पुंभाव इति मतमतः प्रियेणैतासु तत्स-

---

१ रसाधिक्यमितिशेष । २ मानादिरित्यर्थं ।

इत्यपि ज्ञाप्यते भावः सोन्यथा न भवेत्तदा ।
मानापनोदनं स्वस्य यथा युक्तं तथा कृतम् ॥ २१ ॥
उपक्रमोपसंहारौ तत्त्वनिर्णायकौ मतौ ।
अत्र रन्तुं मनश्चक्र इत्युपक्रमतः स्फुटम् ॥ २२ ॥
'रेमे स्वयं' 'सिषेवे' च 'विक्रीडित'मिति स्फुटम् ।
उपसंहारतश्चैतन्मध्यपाति यदेव तत् ॥ २३ ॥
तद्रूपमिति मन्तव्यं पण्डितैर्ज्ञानकाण्डवत् ।

---

म्पादनात्तस्य च प्रियस्वरूपात्मकत्वादन्तःपूरणात्तत्र पुंभावे प्रकटे सति यावन्तः प्रियभावास्ते सर्वेपि अत्र स्वामिनीषु समागता इत्यपि भावो ज्ञाप्यते । तेन मानोभवत् । अन्यथा रसाधिक्यप्रयुक्तपुंभावात्तथा प्रियरूपत्वाभावे स मानो न भवेदित्यर्थः । ननु मानापनोदस्य प्रकारान्तरेणापि सम्भवात् तिरोधानेन तत्कुतः कृतवानित्यत आहुः मानापनोदनमिति । प्रभोरात्मप्राधान्येन लीलया रसाधिक्यतो मानोदय इति तदपनोदनमपि तत्प्राधान्येनैव कर्तुं युक्तमिति तस्यान्तरेव सत्त्वात्तत्रैव प्रविश्य तेन प्रकारेण-तत्कृतवानिति स्वस्यात्मनः यथा युक्तं तथाकृतमित्यर्थः । नन्वत्र प्रकरणे भजनानन्ददानानुरूपलीलैव निरूपयितुमुचिता, तस्या एव तदर्थत्वस्य व्यवस्थापितत्वात् । तथा च मध्ये सर्वात्मभावादिनिरूपणस्यार्थान्तरत्वप्रसञ्जकत्वं भवेदतस्तत्परिहारं वदन्तः प्रकरणार्थनिर्णयमाहुः उपक्रमोपसंहाराविति । उपक्रमोपसंहाराभ्यां योर्थः प्रतिपाद्यते, स एव तत्त्वरूप इति सर्वत्र तन्निर्णायकौ तौ तान्त्रिकाणां मतौ, तेन मध्येर्थान्तरकथनेपि तदुभयानुरोधेन तत्त्वनिर्णयात्तदुपयुक्तार्थनिरूपणेर्थान्तरत्वप्रसङ्गो न भवतीत्यत्र फलप्रकरणे 'रन्तुं मनश्चक्र' इति स्फुटं रमणस्योपक्रमा'द्रेमे स्वयं स्वरति'रिति 'सिषेव आत्मन्यवरुद्धसौरत' इति 'विक्रीडित'मिति च स्फुटम्, तत्तद्भेदविशिष्टस्य रमणस्यैवोपसंहारतश्च तस्यैव प्रकरणार्थनिर्णयेनैतदुपयोगित्वेनैतद्रमणमध्यपाति यदेव सर्वात्मभावादि निरूपितम्, तत्तद्रूपं तत्तल्लीलारूपं पण्डितैः काण्डद्वयार्थनिर्णयनिपुणैः ज्ञानकाण्डवत् ज्ञानकाण्डे यथा ज्ञानोपयोगिचित्तशुद्ध्यर्थमाम्नातं नानाविधोपासनादि ज्ञानरूपमेव मन्वते, अत एवोपासनाकाण्डं न ज्ञानकाण्डात् पृथग्वदन्ति वेदान्तनयकोविदास्तथेदमपि मन्तव्यमित्यर्थः । तेन सर्वात्मभावादिनिरूपणस्य नार्थान्तरप्रसञ्जकत्वमिति सर्वमतिरमणीयम् ।

श्रीवल्लभात्मजश्रीमद्विट्ठलेशाङ्घ्रिसेविना ।
गोपेश्वरेण लिखितमास्तामेतन्मुदे सताम् ॥ १ ॥

---

किञ्च । सर्वात्मभाव एवैतद्रसप्राप्तौ हेतुरिति ज्ञापयितुं सर्वात्मभावोऽत्र पूर्वमुच्यते । तच्च व्याख्याने स्फुटीभविष्यति । एतदभावे त्वितरसाधनवत्त्वेपि नैतत्प्राप्तिरिति ज्ञापयितुमन्तर्गृहगतकथा । हरिवचनान्यप्येतासु तद्भावप्राकट्यार्थमेवं । यत्र स्वरूपसङ्गविरोधि भगवद्वचनमपि नाङ्गीकृतम्, तत्रान्यधर्माङ्गीकारे का शङ्केत्यपि ज्ञापितम् । अत एव धर्माद्धर्मी बलीयानिति ईश्वरवाक्याकरणेप्यदोषोत्र । इतोपि हेतोर्भगवदुक्तिरिति ज्ञेयम् । अन्यथा स्वामिन्यतिरिक्तेष्वेतद्भावाभावादेतद्धदिस्थस्य चान्यावेद्यत्वाद्धर्मिमार्गोऽप्रकट एव स्यात् । कामभावेनागतासु कामं पूरितवानिति किमसाधारण्यमस्यां लीलायामिति भ्रमनिवृत्तिरप्यत एव । यतः सर्वात्मभाववत्त्वेनैव भगवताङ्गीकृताः, न स्त्रीत्वेन । अन्यथा भगवद्रिरंसायाः पूर्वमेवोक्तत्वादेतासां च तद्वत्त्वान्मध्ये मर्यादोक्तिपूर्वकगमनोक्तिरसम्भाविता स्यात् । तादृशयोः स्त्रीपुंसयोर्विलम्बासहिष्णुत्वात् सर्वात्मभावाभावे यज्ञपत्नीवद्गमनमेव च स्यात् । सर्वत्यागपूर्वकागमनस्याविशिष्टत्वात् । इदं च वाक्यविवरणे स्फुटीभविष्यति । कायिकमानसिकप्रपत्तौ सत्यामप्येतावत्पर्यन्तं वाचनिकी सा नासीदिति साप्येवं सम्पन्ना । तेन सर्वथा प्रपन्नेषु प्रसाद इतिलक्षणः शास्त्रार्थोपि सम्पद्यते इति ज्ञेयम् । नन्वियं पुष्टिपुष्टिलीलोच्यते । यदि सर्वात्मभावलक्षणसाधनवत्स्वेव तद्दानं, न तद्रहितेषु, तदा मर्यादैव सम्पद्यत इति चेत्, अत्र वदामः । सर्वात्मभावः साधनत्वेन नोच्यते, किन्तु फलमध्यपातित्वेनेति । अत एव पूर्वं मनश्चक्रे इत्युक्त्वैतत्सर्वात्मभावो निरूपितः । अन्यथा भगवद्रिरंसोक्तेः पूर्वं तन्निरूपणं स्यात् । अत एव भगवतैवायं भावः सम्पद्यते, न साधनैरित्यपि ज्ञाप्यते । रिरंसाविषयेष्वेव तदुत्पत्तेः । अत एव यज्ञपत्नीषु न तदुत्पत्तिः, यतः परावृत्तिस्तासाम् । न'न्वात्मानं भूषयांचक्रु'रित्यादिना पूर्वमपि तन्निरूपणमस्त्येवेति चेत्, सत्यमस्ति, परन्तु तत्पूर्वमपि तद्विषयिणी रिरंसाप्यासीदिति बुध्यस्व । न च मानाभावः । सर्वात्मभावो हेतुपूर्वकः, कार्यत्वादित्यनुमानेन सामान्यतो हेतुसिद्धावपि तस्य दृष्टस्य सर्वत्र साधारणत्वेन सर्वासु तदुत्पत्तिप्रसङ्गभिया वक्तुमशक्यत्वात् कर्मजन्यत्वेनादृष्टस्यापि वक्तुमशक्यत्वादन्यथानुपपत्त्याग्रे कण्ठोक्तत्वाच्च हेत्वन्तरकल्पने गौरवाच्च तस्या एव तथात्वेन सिद्धेः । नन्वेवं फलप्रकरणे तदुक्तिर्व्यर्थेति चेत्, न । यथा व्रतवरदानप्रस्तावे स्वामिनीष्वन्तः सर्वात्मभावं निरूप्यापि 'रंस्यथे'ति वचनाद्भविष्यत्त्वेन तदा फलोन्मुखत्वाभावात् सर्वात्मभावस्य गृहगमनमाज्ञयाभवदित्युक्तम् ।

अत्र त्वाज्ञायां सत्यामपि फलोन्मुखत्वाद्यादृशं स्वकार्यमस्ति, तादृशं स भावः कृतवानिति न तथोक्तम् । एवमेव रिरंसाया अपि फलोन्मुखत्वादधुना तादृशत्वज्ञापनार्थमेवात्र तदुक्तिः । यथादौ भगवत्कृतोद्यमेनैव भजनानन्दः प्राप्यो, नान्यथेति ज्ञापयितुं गमनार्थं भगवदुपक्रमात् भगवानपीति । पूर्वाध्याये मर्यादामार्गीयैकादशीव्रतसम्बन्धि-

१ अन्यथा [illegible] भावः । २ भगवद्रूपे इति पाठः ।

रात्रिप्रसङ्गजभगवदैश्वर्यदर्शनादिना भक्तानां भगवतः परमोत्कर्षदिदृक्षासीदित्युक्तम्, साधनप्रकरणत्वात् । इह तु पुष्टिमार्गीयव्रतसम्बन्धिरात्रिदर्शनेन भगवतोपि रिरंसा जातेति अपिशब्देनोच्यते। भक्तानामयं हि परमोत्कर्षो यत्पुरुषोत्तमेन समं रमणम्। साम्यभावेन तथा कृतिः । स्वस्मिन्नाधिक्यज्ञानेनापि कदाचित् कृतिस्तदनुसारेणैव भगवत्कृतिरपीति । महीश्वरेण समं भक्तैः साम्यं कर्तुं शक्यम्। पूर्णालौकिकवीर्यवता समं च न पराक्रमः कर्तुं शक्यः, अल्पवीर्यवत्त्वेन तस्य स्वानिष्टहेतुत्वात्। नामकीर्तनस्मरणादिमात्रेण दैहिकधर्मनिवर्तकत्वादिरूपयशस्वता समं साक्षात्सकृत्सम्बन्धेप्युत्तरोत्तरं रसाधिक्यप्रकटनं चाशक्यम्। सर्वगुणरूपश्रीमता समं तद्विस्मारणपूर्वकं रमणं चाशक्यम्। ततो न्यूनगुणत्वे तद्विस्मारकत्वासम्भवात्। लोके च तदधिकगुणस्यैवासम्भवात्। पूर्णसर्वरसज्ञानवताऽतथाभूतस्य रमणं च तथा । रसाभासहेतुत्वात्। पूर्णवैराग्यवति विषयत्वेन स्वरागजनकत्वं चाशक्यम्, अतो भक्ताः कथमिदं सम्पादयिष्यन्तीत्येतल्लक्षणपरमोत्कर्षं भक्तानां द्रष्टुं मनः कृतवानिति भगवच्छब्देनोच्यते । यथा पूर्वं भगवता व्यापिवैकुण्ठैश्वर्यप्रदर्शनेन तन्मनोरथः साधितः, तथा पूर्वोक्तं सर्वं भक्तैः सम्पत्स्यत इति परमोत्कर्षदर्शनमपि सेत्स्यति। अत एव 'न पारयेह'मिति प्रियवचनम्। अपरं च। द्वितीयस्यासामर्थ्यं दृष्ट्वा दयया पूर्णं स्वसामर्थ्यं यथा महान् न प्रकटीकरोति, तथात्रापि हरिणा कृतं भविष्यतीत्याशङ्क्य पूर्णतत्प्राकट्यस्य का वार्ता यत्रान्यसहायमपि प्रकटीकृतवानित्याह योगमायामिति । अत्र योगमायेत्युपलक्षणम्। तेनान्या अपि सर्वाः पूर्णाः शक्तयः प्रकटीकृता एतदर्थं इत्युक्तं भवति। भगवानपि। 'भगवानपि विश्वात्मा विदित्वा कंसजं भय'मित्यादिना पूर्वं भक्तार्थं साज्ञप्तेति भक्त[3]पक्षपातिनीत्वेन तदनुगुणमेव करिष्यतीति नाशङ्कनीयम्। यतस्तामाश्रितः। नह्याश्रितपक्षपातस्त्यक्तुं शक्यः, सुतरां स्वस्वामिनस्तथात्वे। भक्तपक्षपातं दूरीकृत्य स्वानुगुणत्वं नाभिप्रेतं भगवतः। तथा सति पूर्ववत् समादिशदित्येवोक्तं स्यात्, किन्तु तत्पक्षपातमनपहायैव मत्कार्यानुगुणा भवत्विति ज्ञापनायाश्रितपदम्। अत एव योगमायैवोक्ता। मुख्यत्वादस्याः कैमुतिकन्यायेनैवान्यासामेतत्कार्यानुगुणत्वसिद्धेः। एवं च सति भक्तिमार्गप्राबल्यमेव निरूपितं भवति। भगवता तादृश एव मार्गोयं कृत इति न शङ्का काचित्। एतादृशत्वाभावे भक्तिमार्गत्वाभाव एवेति सारम्। यथा पूर्वं सङ्कल्पसमानाधिकरणं फलम्, तथात्रापीत्यात्मनेपदेन कर्तृगामिक्रियाफलबोधकेनोच्यते। अत एवा'रीरमद्रेमे स्वय'मित्यादिना भगवतः स्वातन्त्र्यमुच्यते रमणे। यत्रापि नायिकाधीनत्वोक्तिस्तत्राधिकः प्रिये रस इति तयात्वं न क्षतम्। यथा गोवर्धनोद्धरणादिना पूर्वमुत्कर्षज्ञानस्नेहभगवद्दर्शनवत्त्वेप्यतीन्द्रियैश्वर्यादिमद्वरुणदासदर्शनादिनौत्सुक्यविशेषः, तथात्रापि पूर्वमपि सर्वज्ञत्वेन रात्रिदर्शनवत्त्वेप्युद्दीपनविभावयुक्तानां तासां दर्शनमुक्तरूपमिति ज्ञापनाय रात्रिविशेषणम्। ननु रात्रिवद्विशेषणस्यापि नित्यत्वादधुना को विशेष इति चेत्, अत्रेदं

१ सामान्येनेति पाठः। २ भगवानपीति द्वितीयवारं नास्ति। ३ भक्तीति पाठः।

प्रतिभाति । सर्वासां लीलानां नित्यत्वेपि यथा पौर्वापर्यमुच्यते तथाविर्भावतः, तथा विशेषणविशिष्टानां तासामधुनैवाविर्भावतस्तथेति । एतेनापि फलप्रकरणे तद्धुक्तिर्व्यर्थेति शङ्का निरस्ता ज्ञेया । विशिष्टानां तासां पूर्वमनाविर्भावात् । उक्तरीत्या शङ्काया एवासम्भवश्च । यद्वा । स्वरूपात्मकं भजनानन्दं पूर्णं दातुं भगवत इच्छां निरूपयंस्तत्सामग्र्युत्कर्षमप्याह भगवानपीति । उत्कृष्टस्य हि नापकृष्टे मनो भवति । तत्र सर्वेश्वरस्य न काचिन्न्यूनतास्ति येनाधुनिकं किञ्चिद्दृष्ट्वा सज्जेत । तत्राप्यलौकिकवीर्यवतोन्याधीनत्वमसम्भवि, निरवद्यलीलावत्त्वेन हि यशस्वत्वम् । एतच्च खण्डितादिभावहेतुत्वेनातथाभूतं लोक इति न कर्तुं योग्यम् । तद्वतः सदा श्रीमत्त्वेन तस्याश्च सर्वोत्कृष्टत्वेनान्यत्र रमणेच्छाप्यसम्भाविता । ज्ञानवत्त्वेन स्वात्मत्वेनैव सर्वं जानातीति दूरतरोयं तत्र रसः । वैराग्यवतस्तथात्वं स्पष्टम् । यद्यप्येवंभूतः स्वयम्, तथापि स्वामिनीसम्बन्धिनी रात्रीर्दृष्ट्वा तथा चक्र इत्यर्थः । तेन स्वरूपविस्मारकत्वमुक्तं भवति । यत्रोक्तरूपस्य भगवतोपि रसोद्दीपिका एतास्तत्रेतोधिकः क उत्कर्षो वाच्यः । यत्सम्बन्धित्वेन रात्रीणामेवंरूपत्वम्, तत्र तासां रसोद्दीपकत्वं किं वाच्यमिति भावः । एतासां सर्वात्मभाववन्मात्ररमणार्थमेव सृष्टावाविर्भावात् वरदानेन फलोन्मुखीकरणात् स्वामिनीसम्बन्धित्वेन भगवद्रमणस्य रात्रिस्वरूपमध्यपातित्वात् ता इति पदेनोक्तधर्मवत्त्वपरामर्शात् । स्वरूपत उत्कर्षमुक्त्वा सम्बन्धिपदार्थतोप्युत्कर्षमाह शरदेति । रमणं हि जलस्थलभेदेन द्विविधम् । आद्ये शीतं जलकालुष्यं च बाधकम् । द्वितीये चौष्ण्यम् । शरदि तदुभयाभावः । उपरि नैर्मल्यजगगनशोभापङ्काद्यभावजभूशोभापङ्कजत्रिगुणानिलशोभा च भवतीति रसानुगुणत्वं शरत्पदेनोक्तम् । लतादिसत्त्वाधीनत्वेन पुष्पशोभायाः कादाचित्कत्वमाशङ्क्य रसोद्दीपकत्वेन सैव निरूपिता । ऋतुहेतुकानां तेषां सौगन्ध्यरूपविशेषवत्त्वेनोद्दीपकत्वविशेष इति तथोक्तम् । इदं तूपलक्षणम् । रूपगन्धैः शब्दैः शय्यामालाशोभादिभिरनेकधा पुष्पाणां रसोद्दीपकत्वं प्रसिद्धमिति तान्युक्तानि । शृङ्गाररसैकप्रधानवसन्तर्तुसम्बधिमल्लिकोक्त्या रसोद्दीपिका यावती सामग्री सर्वा, तावत्येव च शरदा सम्पादितेति ज्ञाप्यते । मधुरत्वे सत्युद्भटामोदवत्त्वेन गुप्तागुप्तरसोद्दीपिका मल्लिकेति सैवोक्ता । स्वीयत्वाभावात् तथोत्कृष्टता न भविष्यतीत्याशङ्काभावाय तद्वाच्युदित्युपसर्ग उक्तः । स्त्रीणामेवात्र प्रमोदः प्रवेशश्चेति ज्ञापनाय स्त्रीलिङ्गस्यैव प्रयोगो, न पुष्पपददानम्, उत्फुल्लत्वोक्तिश्च । रात्रिविशेषणत्वेनैवोक्त्या पुष्पवतीत्वं धर्मो रात्रिषु लक्ष्यते । अत एव वर्णनप्रस्तावे गवादिपुष्पधर्महेतुत्वं शरदो निरूपितम् । तथा सति तादृशीनां तासां दर्शनेन भगवतो भावोत्पत्तिर्युक्तैवेति भावः । अन्यथेन्दुवत् पुष्पाण्यपि स्वतन्त्रतयोक्तानि स्युः । यथैतद्धर्मवती स्त्री स्वतोनुरक्ता भवति, तथैव सम्पादयति च, यथा प्रियः स्वस्मिन्ननुरक्तो भवति, तथैता अपीति ज्ञाप्यते । एतासामपि

१ करण इति पाठः । २ त्वेन नास्ति अन्यादर्शे । ३ पुष्पामोदमत्तभ्रमरशब्दो रसोद्बोधकः ४ शोभा इति नास्ति अन्यादर्शे ।

देवतारूपत्वेन सर्वमुपपद्यते । सर्वासामेकदा दर्शनात् । अत एव नित्यत्वमपि ज्ञेयम् । पूर्वं हेमन्ततौ रात्रिमात्रोक्तयात्र च शरदुक्त्या तासु शरदो नित्यत्वं ज्ञाप्यते । तेनात्र सदा शारदीत्वं सिध्यति । एवं सति हेमन्तेपि दर्शनेनापि तन्नित्यत्वमायाति । एकदा दर्शनेपि क्रमेणैव तासु रमणं ज्ञेयम् । रजन्येपेति भगवद्वचनात् । यद्यपि सदैवेद-मित्थतया भगवत्स्वरूपं न ज्ञातुं शक्यम्, तथापि यादृशं स्वरूपसौन्दर्यमैश्वर्यादिकं चाधुना प्रकटितवांस्तादृशं तद्दृष्टमपि न ज्ञातुं शक्यं ममापि, किं पुनरदृष्टाश्रुतपूर्वमिति ज्ञापनाय स्वज्ञानाविषयत्वेनेदानीन्तनं स्वरूपं स्वस्य परोक्षमिवेति ज्ञापयितुं लिट्प्रयोगं कृतवान् । प्रत्यक्षविषयत्वस्यैवापरोक्षत्वेन तद्विपरीतस्यैव परोक्षत्वं वक्तुमुचितम् । अत एव 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव' इत्यादिश्रुतिष्वपि तथा प्रयोगः । रिरंसाविशिष्टस्य मनसः करणं ज्ञेयम् । विविधभाववैशिष्ट्यं मनस एवेति रमणे मन एव प्रधानम् । अत्रेच्छां चक्र इत्यनुक्त्वा मनःकरणोक्त्या चाधुनिकी सर्वा सामग्री न पूर्वतनसदृशी, किन्त्विदं प्रथमतया सर्वविलक्षणा कृतेति ज्ञाप्यते । तेन रमणेपि तथात्वं सिध्यति । पूर्णशृङ्गाररसभोक्तुर्मध्यस्थसख्यभावे विविधभावविशिष्टनायिकानां भोगो रसमर्यादया न सम्भवतीति तामाह योगमायामिति । गाढमानवतीमपि चाटुवचनैः सर्वं विस्मारयित्वा समानेतुं शक्तेति योगार्थमेव या माया व्यामोहिका, न तु प्रपञ्चव्यामोहहेतुः, तामाश्रित इत्यर्थः । अयं रस एतादृश एवेति सर्वमुपपद्यते । यद्यपि स्वरूपेणैव वशीकृताः सन्ति, तथाप्युक्तदशादिषु तस्या उपयोग इति कादाचित्कत्वज्ञापनायोपसर्गः । यद्वा । पुष्टिप्रकरणतदनुसारेणैव सर्वं व्याख्येयम् । तथाहि । विरुद्धधर्माश्रयत्वं हि श्रुतिसिद्धम् । तथाच, मर्यादामार्गीयभगशब्दार्थवत्त्वं पूर्वमुक्तमेव लीलायामिति प्रकरणात् पुष्टिमार्गीय-भगशब्दार्थवानपि रन्तुं मनश्चक्र इति समुच्चयार्थोपिशब्दः । कर्तुमकर्तुमन्यथाकर्तुं समर्थो हीश्वरः । न ह्यन्यो जानन्नेवाजानन् भवति । पूर्णकामोऽपूर्णकामो वेत्यादि । तेनेदम-चिन्त्यमैश्वर्यं यद्रसशास्त्रोक्तरीत्या रमणं पूर्णब्रह्मत्वं च । संयोग एकैकेक्षणवेणुवादनभाषणा-दिरसाब्धौ निमग्नानां ततः पृथक्करणम्, ततः पूर्वोक्तद्वितीयतृतीयाब्धिषु मज्जनं च नान्य-शक्यमतो लौकिकं वीर्यं भगवतो येन तथा करोति । अन्यथैकस्यामेव लीलायां लीनानां द्वितीया सा अननुभूतैव तिष्ठेत् । विप्रयोगे च पूर्वदत्तरसस्य स्वान्तःस्थत्वेन तद्वीर्यवशाज्जीवनं संपद्यते । अन्यथा तस्य सर्वाधिकबलवत्त्वात् सर्वोपमर्दित्वेन क्षणमपि स्थितिर्न भवेत् । आर्तानामार्तिनिराकरणेनादेयस्वामृतरसदानेन च यशस्वित्वम् । भूषणभूषणाङ्गस्यापि 'व्यरोचताधिकं तात' इत्यादिवाक्योक्तेस्तथात्वं श्रीमत्त्वम् । प्रियाविप्रयोगे सखीवचनैः प्रबोधात् ज्ञानवत्त्वम् । प्रियासु चासामवस्थायामेवंकृतमेवं भविष्यतीति ज्ञात्वा तथा करोतीति च तथा । एतदतिरिक्ते रागाभावाद्वैराग्यवत्त्वम् । योगपदेन कर्मयोगज्ञानयोगनि-

१ देवताऽरूपत्वे दोषः । २ शरदुक्त्या । ३ तत्पदेन पूर्वोक्तधर्मान् परामृश्य शारदीत्वबोधनात् न हैमन्तीत्वभ्रमः ।

हितभक्तियोगा उच्यन्ते । मायापदेन व्यामोहनस्वभावा शक्तिरुच्यते । तथा च पूर्वोक्तैः पूर्वोक्तेषु वा सर्वमोहिका तयेत्यर्थः । इहायमभिसन्धिः । श्रीगोकुलनाथस्यैव हि स्वतन्त्र-पुरुषार्थत्वम्, अन्येषां तत्सम्बन्धात्तथात्वमि'त्येतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'त्यादिश्रुतिभि'र्नूनं दैवेन निहता ये चाच्युतकथासुधां । हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुज' इत्यादिभिरन्यविषयकश्रवणादिनिन्दापूर्वकं हरिविषयकतरस्वतन्त्रपुरुषार्थत्वोक्त्या कैमुतिकन्यायेनाप्यवगम्यते । एवं सत्याद्ययोः पुरुषोत्तमाविषयत्वात्तन्निन्दावाक्यैश्च तन्मार्गीयाणां मोहोवगम्यते । तृतीये साक्षाद्धरिसङ्गं विनापि श्रवणादिभिरेव स्वास्थ्यात् स्वकृतार्थताभिमानाच्च तथेति गम्यते । तादृशानामप्येवंरूपो मोहोन्तरङ्गशक्तेरेव शक्यो, नान्यस्याः । 'विलज्जमानया यस्य स्थातुमीक्षापथेमुये'त्यादिवाक्यैः शक्तीनां तत्तत्कार्यकरणे दासीवदाज्ञापरत्वमेव, न तु प्रभुस्तत्सङ्गतो भवति । तथा सति पूर्वस्वभावहानिप्रसङ्गः स्यात् । भगवत्सङ्गमस्य तादृक्स्वभावत्वात् । अधुना च पुष्टिमार्गीयो धर्मिमार्गः प्रकटनीयः । स च तदमोहनेन भवतीति तत्स्वभावनिवृत्त्यर्थं तत्सङ्गतो जातः । अत एव स्वामिनीनामेवंभावः । सर्वथा पूर्वस्वभावनिवृत्त्यभिप्रायेण तथाकरणे सर्वेषां तथात्वं स्यादिति तदभावाय साक्षादनुगृहीतेष्वेव तथात्वाभिप्रायेण सङ्गत इति ज्ञापनायोपसर्गः । सङ्गमे वाच्ये यदाश्रितत्वकथनं तस्यायं भावः । भगवतो ह्ययं मार्गः सर्वथा गोपनीय एव । लोके न क्वचिदप्यस्य प्राकट्यमेतदतिरिक्तेषु भगवदभिमतम् । आश्रितो ह्याश्रयधर्मप्राधान्येन तिष्ठति । आश्रयरूपायास्तस्या उक्तरीत्या सर्वामोहनत्वधर्मवत्त्वेन तदनुरोधमपि सहत इत्युक्ततात्पर्यकोपसर्गात् स्वप्रियास्वेव तत्प्राकट्यकरणम्, नान्येषु । आश्रयानुरोधादाधुनिकेषु अपि कतिपयेषु भाग्यवत्सु तथात्वमिति ज्ञापितं भवति । यद्वा । मनसां चक्रं मनश्चक्रम्, मनःसमूहमिति यावत् । तत्र रन्तुं योगमायामुपाश्रितो जात इति योजना । अत्रायं भावः । नायिकाभेदेन भाववैलक्षण्यान्नैकविधं सर्वासां मन इति यत्र यथाकृते मनोनुरञ्जनं भवति, तत्र तथा सम्पादनेन स्वासक्तिसाधिका सेति तामाश्रितो जातो, न तु स्वैश्वर्यबलेन तथा कृतवानिति । तथा सति रसस्वरूपहानिरिति भावः । अत एव लीलाप्रारम्भे ईश्वरभावेन लीलां कृतवानिति योगमायां समादिशदित्युक्तम् । इह तु तदाश्रयणम्, तेनान्तरङ्गत्वं तस्या ज्ञाप्यते । अत एव समूहवाचिपदान्तरसत्त्वेपि चक्रपदोपादानम् । यतश्चक्रं न समगति, किन्तु परिभ्रमणशीलम् । तेनात्रापि तथात्वं ज्ञाप्यते । अत एव पूर्वं तथा प्रपन्ना अप्यग्रे मानवत्यो जाताः । अथवा चक्रं मण्डलाकारं भवतीति चक्रपदेन मण्डलं व्यज्यते । तेन रासमण्डले रन्तुमिति ज्ञापकं चक्रपदं ज्ञेयम् । अत्र योगमायाश्रितत्वोक्तेरिदमप्याकूतम् । पूर्वं हि भगवत्त्वेन प्रादुर्भावं विनापि तद्भयनिवर्तनसमर्थोपि विश्वात्मत्वेन विश्वस्य सर्वस्योद्धारकत्वात् प्राकट्यं विना तदसम्भवाद्भक्त-

१ शक्तेर्मोहकत्वं गच्छेत् । २ भगवत्सङ्गमस्य मोहकत्वनिवर्तकत्वात् । ३ विलज्जमानतानिवृत्त्यर्थमित्यर्थः । ४ मनोरन्तुमित्यर्थ. ।

दुःखनिवृत्तिमपि लीलामृतदानेन करिष्यंस्तत्सर्वसम्पादनाय विलम्बासहिष्णुस्तां समादि शदिति 'भगवानपि विश्वात्मे'ति श्लोके निरूपितम् । इह तु रसरीतिमनुसृत्य लीलां करोति त्यालम्बनविभावसम्बन्धिनीनां तत्राप्युद्दीपनविभावयुक्तानां तासां दर्शनेनोद्दीप्तभाववत्त्वे विलम्बासहिष्णुर्भगवांस्तथेति गर्भवद्रसतया तदानयनं, रतियोग्यस्थानसज्जीकरणं, तत्कृत्य पूर्वस्माद्वैलक्षण्यज्ञानाभावाय पूर्वं तत्र स्वयं स्थित्वा, भगवदागमनमपि सम्पाद्य, तद्गोपना स्वयं बहिरागत्यान्येषां स्वानुभावेन वाचा च व्यामोहनम्, ततोखिलभक्तदुःखदूरीकरणम् भक्तेषु भगवत्सङ्गमज्ञापकज्ञानेपि गृहे तद्विचाराभावः, स्वामिनीवृन्दे तत्समाननेन भगव त्सन्तोषश्चेत्येतत्सर्वकरणं पूर्वसदृशं ज्ञाप्यते । आज्ञायां तु तावन्मात्रकरणं आश्रयेण च स तदधीनमेवेत्यपि । तेन प्रभोर्व्यासङ्गाभावेन पूर्णरसता बोधिता भवति । अत एवान्तेप्ये तस्याः परामर्शः कृतो 'मोहितास्तस्य मायये'ति । एवं करणे 'ये यथा मां प्रपद्यन्त' इ स्वप्रतिज्ञैव हेतुः, यत एता वैदिकलौकिकमर्यादां हित्वा प्रपन्नाः । 'नात्मागाराणि सस्मरु रिति वाक्यात् प्रातर्दर्शनावश्यंभावसद्भावेपि क्षणमात्रविलम्बासहिष्णुतया वने विचयने चानिर्वचनीयभावा अतिक्रान्तस्त्रीस्वभावाश्च । एतत्सर्वं हेत्वन्तर्गर्भेण ता इति विशेषणे ज्ञाप्यते इति शास्त्रविदः । प्रभौ यथा यावदुच्यते तत्सर्वमुपपद्यत एवं । परन्तु 'रसो वै सः' इत्यादिश्रुतेस्तद्रूपस्य तस्य तथात्वमेवेति युक्तैव तथोक्तिः, अन्यथा ब्रह्मत्वमेव स्यादिति विचारकाणां हृदयम् । न च पूर्वमतथाभूतस्य विभावादिभिस्तथात्वमि रसमिति तादृक्स्वभावोक्तेः सकाशादुक्तरीतिमत्त्वं साधीय इति वाच्यम् । एवंभावस रसस्वरूपान्तर्भावेनैव प्राप्तेः । एतादृशस्यैव तस्य नित्यत्वात् । यद्वा । रात्रीणा मुक्तन्यायेन स्वतो धर्मतश्च रसोद्दीपकत्वात् तद्दर्शनेन तथात्वेन प्रियाप्राप्तिं विना मन स्थिरं न जातमिति तासां च परिजनजनितनिरोधसम्भवेनाधुनाग्रे चानागमनशङ्काभावा यथा तान् व्यामोहयित्वा ताः समानयति, तदन्वेषणपराणां चानेन यथा नागमनं भवति तथा सम्पादनसमर्था योगमायेति स्वयमैश्वर्यवीर्यलक्ष्म्यादिगुणवानपि ता रात्रीर्वीक्ष्य रन्तुं मनश्चक्रे सति योगमायामुपाश्रितो[3] जात इत्याह भगवानपीति । स्वामिनीनां पूर्वमे रन्तुं मन आसीत्, तेन प्रभुप्राप्त्यर्थं कात्यायिनीमाश्रिता जाताः । अधुना तु ता रात्रीर्वीक्ष्य भगवानपि रन्तुं मनश्चक्रे, सति योगमायामाश्रितो जातस्तत्प्राप्त्यर्थमिति वा समुच्चयार्थो शब्दः । नायकस्योद्दीपकविभाववशात् सामान्यतो रिरंसोत्पत्तिश्चेत्, सदा नायिकाविशे षास्फूर्त्या यथाकथञ्चिद्रमणमात्रेण तत्पूर्तिः स्यात्, तथासति उत्तमनायकत्वं प्रभौ स्वामि नीनां चासाधारण्येन यो रसविशेषस्तदनुभवश्च न स्यादिति तदभावायोद्दीपनविभावत्वेन वक्ष्यमाणा रात्रयो नायिकाविशेषमात्रविषयकभावोद्दीपिका एव, न तु सामान्यत इति ज्ञाप नाय ता इति विशेषणम् । यथा यथा मनसि भगवदतिरिक्तानारोहः, तथातथोत्तमाधि कारः, तदनुसारेणैव प्राकट्यातिशयोपि । स्वामिनीनां तु सर्वात्मभाववत्त्वेन परमकाष्ठापन्नो-

१ विलंबनिवारककार्येसहशमित्यर्थः । २ एष नास्ति एकस्मिन्नादर्शे । ३ तामिति पाठः ।

समाधिकारवत्त्वात्तदर्थं मूलभूतं य'द्रसो वै स' इत्यादिश्रुतिप्रतिपाद्यं रूपम्, तत्प्राकट्यमेव जातमिति ज्ञाप्यते । एवं सति यादृशा धर्मा अत्रोच्यन्ते, तादृशधर्मवदेव पुरुषोत्तमस्वरूपमिति मन्तव्यम् । (तथा च वीक्ष्य मनश्चक्रे इति कथनादीक्षणस्य मनश्चक्रीभावे हेतुत्वमवगम्यते । सर्वज्ञत्वेन सदा सर्वविषयकापरोक्षज्ञानवत्त्वेप्येतत्कार्याभावादधुना कश्चिद्विशेषो वाच्यः ईक्षणे । स च रसरीत्या नायकभावपूर्वकत्वमेव । अयमेव व्युपसर्गेणोच्यते । अनेवम्भावे विभावादीनां भावोत्पादकत्वादर्शनात्तथा मन्तव्यमिति दिक् । यद्यपि वरदानकालेपि 'मयेमा रंस्यथ क्षपा' इति वाक्यात्तद्भाववत एव तद्दर्शनमायाति, तथापि वरदानमीश्वरभावेनैवेति न तदा नायकभावः शङ्कनीयः, रंस्यथेति प्रयोगाच्च । परदेयपदार्थत्वेन परं तदुद्देशः ।) एवं भगवति भावोत्पत्तिमुक्तोक्तन्यायेन मनःप्रभृति सर्वमपूर्वमिति रसस्वाभाव्यात् स्वयं सखीमाश्रित इति पारतन्त्र्यमिवाङ्गीकृतवानित्यग्रिमकार्ये शैथिल्यं मामूदित्युद्भटभावात्मकपोषणेन स्वतन्त्रतयाप्यग्रिमकार्योपयोगिसर्वकरणसामर्थ्यजनकत्वेन तदधिष्ठातृदेव इवेन्दुस्तदोदितो जात इत्याह तदोडुराज इति । अत एवाग्रे दृष्ट्वा जगाविति वक्ष्यते । अत्रेदं प्रतिभाति । नात्र चन्द्रोदयमात्रं वाच्यम् । अग्रिमदर्शनोक्त्यैव तत्प्राप्तेस्तत्रोक्तधर्मैरेवोद्दीपकत्वादेरपि प्राप्तेरेतत्श्लोकवैयर्थ्यापातात् । किन्तु चन्द्रोदयव्याजेनात्रत्यसर्वसामग्रीस्वरूपं निरूप्यते । अत आह तदेति । नायं ज्योतिश्चक्रभ्रमिवशादुदितः । किन्तु यदैव रन्तुं मनः प्रकटं कृतवांस्तत्रापि शरत्पदात्प्रकाशवति देशे काले च रन्तुम्, अभिसारिकारमणेच्छायां तु नोदयादेव, तथा च तदेकसम्बन्धित्वादयमिन्दुस्तदैवोदगात् । तेन नायं भचक्रगो, मनःप्रादुर्भावाग्रिमक्षणनियतोदयवत्त्वात् । निर्दोषपूर्णगुणभगवन्मनःसम्बन्धित्वाच्च सदा स पूर्णो निःकलङ्कोस्तमयरहितः क्रीडोपरतौ तिरोभाववानिति ज्ञेयम् । अत एवैतत्प्रकाशाभाववतो वनान्निवृत्तिं वक्ष्यति । तदभाववतो लीलानुपयोगित्वात् । एवं सति स्वामिनीमनांस्येवात्रोडुरूपाणीति तदनुरञ्जकत्वात्तद्राजः । एतेन स्वामिनीनां मनांस्यपि न लौकिकानीति ज्ञापितम् । अत एवेन्द्वादिनामानि विहायेदमुक्तम् । तत्राप्युडुपपदं त्यक्त्वैतन्मनोनियामकत्वमप्यस्यैवेति ज्ञापनाय तद्राजपदम् । प्रियसङ्गमनिश्चये सत्येव चन्द्रः सुखद इति तद्रिरंसायां तदावश्यकत्वात्तथेति तदा पूर्वोक्तोडूनां सुखदो यः स तथेत्यपि ध्वनिः । तदा तास्वेव रात्रिषु यान्युडूनीवोडूनि स्फुरद्रूपाणि । अन्यदा त्वप्रकाशमानानीव तेषामेव तथेत्यपि ज्ञेयम् । यद्वा । अस्मिन् रसे नायिकाप्राधान्याद्भक्त्यतिशयवत्त्वेनापि तदधीनं भगवन्मन इति तत्सम्बन्धिचन्द्रस्य सुतरां तथात्वम्, यतस्तन्मनस्तोषार्थमेवास्योदयः स्थितिर्गतिश्चेति, प्रवर्तकत्वनिवर्तकत्वे अपि तन्मनसामेवायाति । तथाचोक्तरीत्या तदोडवो राजानो यस्य स तथेत्यर्थः ।

---

१ चिह्नान्तर्गता. फक्किकाः अन्यपुस्तके २३ तमे चतुर्थपंक्तौ भगवद्वचनादित्यनन्तरं दृश्यन्ते, नात्र, तथापि प्राचीनतमादर्शे एता अत्रैव दृष्टा इत्यस्माभिरत्रैव निवेशिता इति । पूर्वापरसम्बन्धविचारतोपि एतासामत्रैव निवेशनं युक्तमिति प्रतिभाति ।

छन्दस्तोत्रटच् । वस्तुतस्तु 'व्यरोचतैणाङ्क इवोडुभिर्वृत' इत्यत्रोडुसादृश्यं वक्ष्यतीत्युडुशब्देन पूर्वोक्तरीत्या तदोडुशब्देन वा स्वामिन्य एवोच्यन्ते । तथा च रसमर्यादामनतिक्रामन् रसं ददातीति चन्द्रैकसाध्यमुच्यमानं कार्यं कुर्वन्नुक्ततद्राजः स्वयमेवेन्दुरूप उदगादित्यर्थः । अत एवास्मिन् समये स्थितिर्लीलादर्शनं चोपपद्यते । एवमेवात्रत्यं सर्वमितिदिक् । स्थितस्यैव प्राकट्यं ह्युदयः । तथा च मनसः करणमुक्तेन्दावेतन्निरूपणेन भगवद्रमणसामग्री सर्वा नित्यत्वेन सिद्धैवास्ति, न कारणमपेक्षते, किन्तु तदिच्छामात्रम् । तेन तत्प्राकट्ये स्वयमेव सर्वतः प्रकटा भवतीति ज्ञाप्यते । मनःकरणं यथा तथा पूर्वमुक्तम् । प्राच्याः ककुभो मुखमिव मुखं प्रसन्नत्वेन रसोद्दीपकं मध्यभागमिति यावत् । तत्स्वकरैः किरणैररुणेन गुणेन विशेषेण लिम्पन्निति चन्द्रकृत्युक्त्या यत्र रागरहितायामपि तत्सम्पादकः, तत्र किं वाच्यं तद्वतीष्विति कैमुतिकन्यायः सूचितः । लेपनोक्त्या स्नेहस्य सान्द्रत्वं सूच्यते । तत्त्वं च सर्वाधिकत्वम् । अन्यानपनोद्यत्वं विशेषः । यथा पुरुषान्तरकृतस्वप्रियाविषयकस्पर्शादिदर्शनस्य उद्भटभावोद्बोधकत्वम्, तथाधुनिकदिग्दर्शनस्यापीति वक्तुमेतावदुक्तम् । अन्यथा प्राचीमरुणां कुर्वन्नित्येतावदेव वदेत् । न वदेदेव वा, उदयस्वाभाव्यादेव तत्प्राप्तेः । एवं सति पूर्वोक्तन्यायेन चन्द्रोदयोक्तिवदियमपीति ज्ञायते । तथा च यथा भगवन्मनःसम्बन्धित्वं चन्द्रेण लौकिकत्वम्, तथा तच्छोत्रसम्बन्धित्वं प्राच्या इति ज्ञायते । उक्तश्रुतार्थापत्तेः । अत एवाग्रे चन्द्रकिरणस्थानीयैः स्वामिनीवचनशुश्रूषया रचितवचनहेतुकैस्तदुत्तरैस्तद्भावात्मकतद्वचनरूपैः प्रियस्य श्रवणानन्दो वक्ष्यते ।

---

तदोडुराज इत्यत्र । पूर्ण एव स इत्यादि । अत्रायं भावः । अत्रत्याखिलसामग्री रसात्मिका रसलीलामात्रोपयोगिनी रसात्मकेनानेनैव रूपेण प्रकटिता, न साधारणजगत्कारणरूपेणेति बोधयितुं मन आरभ्य चन्द्रान्तानां सर्वेषामेव रसोद्दीपकपदार्थानामधुनैवापूर्वप्रादुर्भाव उच्यते । तत्र स्थालीपुलकन्यायेन चन्द्रस्वरूपमाहुः पूर्ण एव स इत्यादिना । अस्यायमर्थः । भगवता पूर्वं मनः सर्वविषयकं सदपूर्णमप्यधुना पूर्णमेव प्रकटितम् । केवलस्वामिनीमात्रविषयकत्वादंशतोप्यन्यत्राभावात् । अत एव 'नाहं तेभ्यो मनागपी'त्यादिवाक्यानि । ततश्चन्द्रोपि रेतोरूपत्वात् तच्छक्त्याधायकत्वात् तदधिष्ठानात् तादृश एव केवलैतन्मात्रोपयोगी प्रकटो जातः । न कदाप्यन्यविषयको भवतीत्येवकारः । लौकिकस्तु विधुराधिभौतिको विराड्रूपभगवन्मनोरूपोपि सर्वविषयकत्वान्न तथेति ततो वैलक्षण्यम् । वैलक्षण्यान्तरमाहुः निष्कलङ्क इति । यथा लौकिकविधुर्व्यभिचाराद् दक्षशापजन्याखिललोकापकीर्तिकारणकलङ्कयुक्तः, तथा रसिकजननिरूपणीयरसासक्तिविरहजन्यापकीर्तियुतत्वाभावादयं न तथा । अन्यदपि वैलक्षण्यमाहुः आविर्भावतिरोभावहेतुवैलक्षण्याभ्यां मनस्येवेति । यथा भौतिकस्येन्दोः कालाधीनाविर्भावः, स्वकाल एव तस्यो-

दयात्, न तथास्य, भगवन्मनोमात्रोदयहेतुकोदयवत्त्वादित्यर्थः । एतेन लीलासामग्रीमात्र एवैवं व्यवस्थेति निरूपितम् । अत एव नित्यत्वमपि । लीलासामग्री न कालत्रयसत्तारूपे कालान्तत्वात्, किन्तु स्वरूप एव विद्यमानत्वेन स्वरूपनित्यत्ववदेव ज्ञेयम् । एतेन यथा स्वरूपं भक्तेषु, तथा लीला तत्सामग्री च सर्वा तेष्वेवेति बोद्धव्यम् । अनेन स्थितिरपि विलक्षणा बोध्या । एवमुत्पत्तिस्थितिभ्यां वैलक्षण्यं निरूप्य उपरमतोपि वैलक्षण्यं निरूप्यते । तत्रायं पूर्वः पक्षः । ननु व्रजस्थानामनुभूतमहाफलानामपि भगवदाज्ञातो 'वासुदेवानुमोदिता' इति वाक्यादनिच्छयापि गृहागतौ क्रीडोपरतिर्दिवा दृश्यत इति कथं न कालाधीनत्वम्, कथं वा नित्यत्वमपीत्याशङ्क्याहुः क्रीडायामिति । क्रीडायां लीलायां दिवा गुणगाने आन्तररमणार्थमुप समीपे रतायामन्तःप्रविष्टायां तत्संबन्धित्वात्तस्याप्यन्तःप्रवेशे उपरतिरित्यर्थः । एतेन बहिः प्राकट्ये लीलायास्तत्सम्बन्धिपदार्थानामपि बहिराविर्भावः सूचितः । अत्राविर्भावतिरोभावावेव तन्नित्यत्वनिर्वाहकाविति विद्वन्मण्डने प्रभूक्तमनुसन्धेयम् । एतेन बहिः क्रीडोपरतौ शृङ्गारोत्तररसदित्सैव कारणमिति बोद्धव्यम् । एवमुपरतिकारणवैलक्षण्यादपि वैलक्षण्यं निरूपितम् । नन्वेवं बहिरदृश्यत्वेऽस्तमितत्वमायास्यतीति चेत् ? तत्राहुः नास्तमय इति । येषां दृश्यस्तेषां तु दृश्य एव तदिच्छया, बहिर्दृष्टर्या तद्दृष्ट्या वान्येषां तु सर्वदैवादृश्य इति लौकिकविधुवददृश्यस्वरूपास्तमितत्वाभावान्नास्तमय इत्यर्थः । एतेन भगवन्मनस्तज्जनितो भावो वीर्यं चैतत् सर्वं स्वामिनीमात्रविषयकमित्युक्तम् । अत एव तासु व्रजेन्द्रदिक्स्थितासु विधोरस्य तत्रैवोदयः । ततः क्रमेण तासां भगवन्निकटागतावेतस्याप्यागतिः, भगवता सह संयुज्य स्थितासु मध्याकाश एव स्थितिः । तत्रापि रसावष्टम्भभावार्थमुपरिदेश एव । ततो लीलायां विशिष्टप्रभावान्तररमणार्थं तासु प्रविष्टे लीलासामग्रीत्वात् तस्यापि प्रवेशो, नत्वन्यदिश्यपि तस्य गतिः, यथा श्रीमद्यमुनाया लीलामात्रोपयोगिन्या लीलास्थल एव स्थितिः, तथास्यापीत्यर्थः । अत्राकाशस्तु रसात्मकलीलाश्रयभूतः । स्वामिनीहृदयाकाश एव यत्रैतन्मनोनक्षत्रस्थितिः । स एव लीलायां बहिः प्रादुर्भावितायां बहिर्भवति । तस्यामन्तःस्थितायामन्तर्भवतीति तस्मिन्नेवैतन्मनोनक्षत्राधिपतेर्भगवन्मनश्चन्द्रस्याप्याविर्भाव इत्यलमतिप्रसङ्गेनेति दिक् । १०–२६–२.

दीने मयि दयां कुर्वद्दासे भावविबोधनम् ।
स्वमात्रशरणे रक्षां कृष्णास्यं मस्तकेऽस्तु मे ॥ १ ॥

इति श्रीहरिदासोदितो लेखः ।

---

१ रक्ष त्वत्पादाब्जमिति पाठः ।

तदोडुराज इत्यत्र । सा दिग् देवानामिति । अत्रायमाशयः । प्राच्या दिश इन्द्रो देवता अधिपतिश्चोक्तः । इदानीं तमिन्द्रं श्रीगोवर्धनोद्धरणेन निर्जित्य स्वयं तैरभिषिक्त इन्द्रो जातः । इन्द्रश्च देवानामेव भवति, (न) मनुष्याणाम्, 'यथेन्द्रो देवाना'मिति श्रुतेरतो व्रजवासिनां देवत्वमपि सम्पन्नमिति या दिग् देवानां व्रजवासिनां जगत्पूज्यानामलौकिकानामखिलफलसाधकानां भगवत्पक्षपातिनां तस्या दिश इन्द्रो भगवानेव देवता पूज्योऽधिपतिर्भोक्तेति यथाधिकारं कार्यकरणात् साम्प्रतं तु भोक्ता, 'रन्तुं मनश्चक्रे' इति वाक्यात् । अतो भगवांस्तत्सम्बन्धिन्यां दिश्यपि स्वरेतोरूपमलौकिकगूढभावोत्पादकं चन्द्रं प्रकटितवानिति तद्दिक्सम्बन्धिनीष्वपि तादृशभावं मन उत्पादयिष्यति भगवत इति ज्ञेयम् । एतेन ता यत्र सन्ति, सा दिगपि चेत् भगवन्मनःसम्बद्धा, तत्र तासां तत्सम्बद्धत्वे किमाश्चर्यमिति भावः । किञ्च, स्वामिन्यो हि श्रीगोवर्धनसमीपवर्तियमुनोत्तरभागीयवृन्दावनस्थितस्य प्राच्यामेव स्थिता इति तत्रैव भगवन्मन इदानीमस्तीति तत्पोषकत्वेनायं चन्द्रोऽपि तत्रैवोदितः । यदा ता अत्रागत्यालौकिकाखिलसामग्रीविशिष्टनित्यलीलायां स्थिता भवेयुः, तदा चन्द्रोऽपि मध्याकाशे स्थितस्तदुपर्येव स्थितः स्वकार्यं साधयिष्यतीत्यर्थः । ननु किमाकाशस्वरूपमत्रेति चेत्, भगवत्स्वरूपमेवेति बुध्यस्व । 'ब्रह्मैव सगुणं व्योमे'ति वाक्ये तथा निरूपणात् । एवं सति प्रभुहृदयमेवाधिदैविकरूपेण बहिर्निःसृतमिति स्वाधिष्ठानोपर्येव तिष्ठति, तच्चाधिष्ठानं यदा यत्र भवति, तदा तदुपर्येव तिष्ठति, श्येनवत् । तथाच तच्चलने चलति, तत्स्थैर्ये स्थिरीभवतीत्यधुना स्वामिन्यागमनेन भगवतो हृदयं स्वस्थाने मध्याकाशे समागतमिति तस्यापि मध्याकाश एव स्थितिः, एतस्माग्रे गमनाभावाच्चन्द्रस्यापि गमनाभाव इति भावः । क्रीडायामुपरतायामिति तस्यामन्तःस्थिताया मेतस्यापि तत्रैव स्थितिरिति ज्ञेयम् । अत एव एतल्लीलामात्रसम्बन्धित्वादेतद्विधोर्नान्यत्र गमनमित्याशयेनोक्तं नास्तमयसम्भावनेति भावः । १०–२९–२.

श्रीहरिर्जयतितराम् । चर्षण्यः अत्र परिभ्रमणशक्तय इत्यत्र । तत्कृपयेदं प्रतिभाति । पूर्वश्लोके तत्सम्बन्धिरात्रिदर्शनेन भगवन्मनसस्तन्मात्रविषयकचक्षीभावोक्त्या तादृशमनसः स्वविषयकस्वनिकटानयनसामर्थ्यरूपाः शक्तयः चर्षणीशब्दवाच्याः परिभ्रमणरूपाः सर्वासु प्रविष्टाः, भगवन्मनःसामर्थ्येनैव तन्निकटागतिसम्भवात्, तथापि नात्रेश्वरमर्यादया प्रभुः किञ्चित् करोति, किन्तु 'योगमायामुपाश्रित' इति वाक्याद्रसमर्यादयैव । तथा च न केवलमनोमात्रसामर्थ्येन विनैव उद्दीपनविभावचन्द्रोदयगानादिभिः तदानयनं भवतीति प्रभुसम्बन्धनिश्चयाभावेन स्वकार्यासिद्ध्या भवत्येव शोकः । स च भगवन्मनोनियामकभावपोषकोदितालौकिकचन्द्रदर्शनेन प्रभुमनसः सर्वथा आकारणादिकार्यकर्तृत्वनिश्चयेन गानात् पूर्वमेव निवृत्तः । अत एवैतदुभयात् पूर्वं सकलस्वामिनीमध्ये कापि न ताः परमानन्दसम्बन्धिन्यो भगवत्सम्बन्धिन्यो जाताः । इदानीं तु ताः स्वामिनीष्वेव सन्ति । तासां भगवत्सङ्गेन परमानन्दसम्बन्धे ता अपि कार्यसिद्धौ भगवन्निकटमागता इति एतासामपि

परमानन्दसम्बन्धो जातः । तदुक्तं चर्षणीनां शुचो हरन् स उदगादित्यनेन । चर्षणीसहितानामित्येवं व्याख्यायां तच्छब्दार्थानुपपत्तिरूपारुचिस्तु टिप्पण्यामेव प्रभुभिरुक्ता । परं भगवन्निकटानयनलक्षणे कार्ये सम्पन्नेपि पुनस्तत्साहित्यस्य कथने उपपत्तिमाहुः चर्षणीसहितानामेवेति । परमानन्दो हि रासलीलावाच्यः । तत्र च भ्रमणं प्रतीयते । तत्र तासां स्वसामर्थ्यात्, किन्तु प्रभुमनःशक्तिभिरेव सर्वत्र प्रविष्टाभिरित्येतल्लीलाया नित्यत्वेन सर्वदैव तच्छक्तिसाहित्यमित्यभिप्रेत्य तथोक्तमाचार्यैरिति । दिक् १०–२६–२.

---

श्रीहरिः । कामं क्रोधमित्यत्र । सख्यं तेष्वेवेति । सख्ये हि परस्परमुभयोर्भावनया हृदयस्थितत्वं प्रयोजकत्वम्, अन्यथैककरेण तालिकापतनासिद्धिवत्सख्यासिद्धेः । तच्च 'मयि ते तेषु चाप्यह'मितिवाक्याद्भगवतो भक्तेष्वेवेति तत्सख्यस्य तत्रैव सिद्धिरित्यर्थः । एवं सति कामादिभिः साधनैः फलसिद्धौ न ज्ञानभक्त्योः फलसाधकत्वेनोपयोग इति भावः । ननु भगवानेवाविर्भूतः फलं साधयति, 'फलमत उपपत्ते'रितिन्यायात् । तत्र ज्ञानं भक्तिर्भगवदिच्छा चेति त्रयमेव तदाविर्भावे कारणमुक्तमित्याविर्भावकसाधनाभावेऽनाविर्भावात् कथं मुक्तिरित्याशङ्क्याहुः तेषामिति । तेषां कामादीनां मर्यादया भावनाविषयस्योत्कटभावनया प्रत्यक्षत्वमितिलौकिकमर्यादया स्वतन्त्रो ज्ञानभक्तिनिरपेक्षो यः आविर्भावः, अथवा तदुभयसम्पादिताविर्भावभिन्नो वा । मनस एव चक्षुरादिप्रवेशेन तत्र साक्षात्कारहेतुत्वात् । तादृशस्य कामादिभिर्भावनायां नियतत्वेन न तत्राविर्भावार्थं ज्ञानभक्त्योरुपयोग इतिभावः । ज्ञानिनां भक्तानां च ज्ञाने भक्तौ वा भिन्न एवाविर्भावः । अन्यथा स्तुतिकृत्यवसरे भीष्मस्य भावनया हृदि प्रकटेऽपि भगवति पुरःस्थित इतिवाक्यादवतीर्णे सर्वेन्द्रियविषये फलसिद्धिर्नोक्ता स्यादतो भक्तौ ज्ञाने वा भिन्न एवाविर्भावः, कामादिहेतुकभावनामात्रे भिन्न एवेति नानुपपत्तिः काचित् । १०–२६–१५.

---

अथवा मदभिस्नेहादित्यत्र । निरुक्तो भाव इति । अत्र भगवता सर्वात्मभावस्य फलरूपत्वं प्रतिपाद्यते । तस्य फलान्तरसाधकत्वे साधनत्वेन फलरूपत्वं न स्यात् । भगवांश्च फलरूपः, अलौकिकभावस्यातथात्वे भगवद्रूपता न स्यात् । अन्यथा तु लौकिकानां स्वपत्यादिविषयकभावस्येव लौकिकतुल्यत्वेन भगवति भावनात् तदुभयस्यापि लौकिकत्वमेव । यथान्तर्गृहगतानाम् । स भावो न सर्वात्मभावलभ्यं भावात्मकं फलं साधयतीति भगवता निरुक्तो योऽभिमतः स्नेहः सर्वात्मभावो भगवद्विषयकः पुष्टिमार्गविचारेण गुणात्मकः स्वरूपमात्रफलसाधकत्वात्, मर्यादामार्गविचारेण दोषात्मको वा, विहितधर्मविरुद्धत्वात्, उभयविधोपि न तत्फलं भावातिरिक्तं प्रयच्छति, स्वस्य लौकिकाभावतो न मत्तः फलाकाङ्क्षा कर्तव्या, स्नेह एव निरन्तरं कर्तव्य इति, तस्य गृहेपि सम्भवात् गेहे गन्तव्यमिति गमनपक्षे भगवत्तात्पर्यमिति भावः । अत इति । यतस्तत्स्वरूपं भवतीभिर्न

ज्ञायते, अन्यथा न फलाकाङ्क्षां कुर्युः, अतो मया सिद्धान्तरूपोपि भगवद्भावस्तत्स्वरूपकथनार्थं पूर्वपक्षत्वेनानूद्यत इत्यर्थः। स्थितिपक्षे तु सर्वात्मभावेन वशीकृता आगता इति नागमनमनुपपन्नम्। अन्यथान्तर्गृहगतानामिव प्रतिबन्धः स्यात्, अतो निवृत्तः प्रतिबन्धो न पुनर्गृहगमनेन सम्पादनीयोऽत्रैव स्थेयमिति भावः। किञ्च। मम मत्सम्बन्धिन एव जन्तवः प्रीयन्ते, मम परमानन्दरूपत्वात्। अन्येषां 'पतिसुतादिभिरार्तिदै'रिति वाक्यात् दुःखदत्वेन तत्सम्बन्धिनो न प्रीयन्त इति प्रीतलभीप्सुत्वे अत्रैव स्थेयमित्यपि स्थितिपक्षे तात्पर्यं ज्ञेयम्। १०-२६-२३.

---

श्रीकृष्णाय नमः। **एतच्च भजनं न विषयवदित्यत्रायमर्थः** । यथा विषयभोगे कामिनीं भुक्त्वोपपतिस्त्यजति, तथा भगवानपि वदेत्, मयाप्येवमेव भजनं कार्यमित्याशयं प्रभोः परिहर्तुं भजनप्रकारं च शिक्षयितुं देवो यथेत्यादिदृष्टान्तमुक्तवत्यः। तदर्थस्तु। यथा देवः स्वातिरिक्तभजनमसोढ्वा तन्निवर्त्य स्वभजनं सम्पाद्य भजते, तथास्मान् परिगृह्यान्यभजननिवृत्तिपूर्वकं स्वभजनसम्पन्नाः कुरु, न तु स्वत एव निवृत्तान्यभजना अन्यभजने प्रवर्तयसीत्युचितम्। ननु गन्धर्वजनेन भवतीनां पातिव्रत्यभङ्गः स्यादिति स्वाम्याशङ्का तु भजने दोषाभावप्रतिपादकाभ्यामादिपुरुषदेवपदाभ्यां दृष्टान्तप्रकारेण निरस्ता वेदितव्या।

श्रीरघुनाथात्मजश्रीदेवकीनन्दनकृतम्। १०-२६-३१.

---

श्रीकृष्णं वन्दे। मैवं विभोर्हतीत्यस्य व्याख्याने। **एतच्च भजनं न विषयवदिति।** एतदस्माभिः क्रियमाणं, चकाराल्लोके प्रकटीक्रियमाणं च भजनं न विषयवत्, न विषयसम्बन्धि। अस्मत्क्रियमाणभजने प्रार्थ्यमाने च विषयसम्बन्धाभावात्। अस्माकं तत्त्यागेनागतत्वात्। भगवतश्चेन्द्रियविषयत्वाभावात्। किन्तु प्रकारान्तरेण कामप्रकारातिरिक्तप्रकारेण केवलरसरीत्येति विशेषतो वक्तुमशक्ता विविच्य कथने स्वाधिक्यनिरूपणतोभिमानसम्भवेन सर्वात्मभावबाधकसम्भवात् प्रभोश्चास्मदधीनो भूत्वा भजस्वेति कथने नीरसत्वसम्भवात्। अतःपरमतिनिपुणाः रसरीतिवित्तमाः स्वामिन्यो दृष्टान्तेन स्वभजनस्वरूपं निरूपयन्ति देवो यथेत्यादिना। देवो यथा भजत उपासकाधीनः सन् तदभिलषितं साधयति, तस्य महत्त्वमनुसन्धत्ते, यथा चादिपुरुषः पुरुषोत्तमः स्वचरणे ज्ञानिनः स्वस्मिंश्च भक्तान् प्रवेशयन् भजते स्वानन्दं ददाति, तथा त्वया कर्तव्यमिति भावः। भजनेप्येतदेव दृष्टान्तद्वयम्। यथा देवः पूज्यो लौकिकपत्यादिभ्योपि मुख्यो, न भजने दोषावहः सर्वसेव्यः, तथास्माकं भगवान्न जार इवान्यासां सेव्योऽतस्तथास्मान् भजस्व। न तु कामिवत् काममात्रं पूरय, किन्तु अस्मदभिलषितस्वानन्दं देहीत्यर्थः। किञ्च। यथादिपुरुषः पुरुषोत्तमः फलरूपो, न तु तत्साधनम्, निःकाममनोरथविषयः, तथास्माकं भवानिति। स यथा सर्वकामरहितेभ्यो ज्ञात॰

सेवितश्च स्वरूपमेवानन्दरूपं ददाति, नान्यथा, तथा त्वयापि तदेव देयमिति भावः । एतदेव दृष्टान्तद्वयं स्वभजने निर्दोषत्वं मर्यादारीत्यापि बोधयतीत्याहुः नहीति । लौकिकपतिव्रतानामपि तद्देवभजने व्यभिचारः न । नहि देवभजनकर्त्र्यः पत्या लज्यन्ते । न वा तासां नरकः । प्रत्युत पत्यादिभिरन्यैश्च विशेषतो सम्मान्यन्त इति कुतोस्माकं तद्दोषावहं भविष्यतीति भावः । किञ्च । आदिपुरुषश्चास्माकं भवान्, प्रथमतस्त्वयैव परिगृहीतत्वात्, 'कल्पं सारस्वतं प्राप्ये'ति वाक्यात् । अतः कदाचिदस्माकं दुःसङ्गदोषादैदिकधर्मनिष्ठतया वा त्वदनङ्गीकारो लौकिककुलटानामिवोचितो, न तु तासां सम्पत्तिप्राप्तौ तदभजनमिव त्वदभजनमितः पर्यन्तं त्वदप्राप्त्यैव अन्यभजनं बहिरङ्गधर्मनिष्ठतया कृतम्, त्वत्प्राप्तौ कथं तद्विधेयमिति भावः । अथवा । लोकरीत्यापि भ्रष्टा जारपरिग्रहे, अतस्तस्यैव परित्यागो, न त्वादिपुरुषस्येति तदेव दोषावहम्, न स्वभजनम्, प्रत्युत दोषनिवर्तकमपीति भावः । किञ्च । पुरुषोत्तमत्वानङ्गीकृतावप्यनया रीत्या भवानादिपुरुष इति । स यथेतरभजनं न सहते, गतेपि तस्मिन् कुप्यति, कुतस्तत्र प्रेषणम्, त्वयापि तथैव कार्यम्, न वयमन्यत्र प्रेषणीया इति लोकरीत्यापि स्वामिबोधनमिति भावः । इदं तूपपत्तिरूपं लोकरीत्योक्तम् । वस्तुतस्तु इदमस्माकं शृणु इत्याशयेन दृष्टान्तमाहुः यथा मुमुक्षूनिति । यथा मुमुक्षवो गृहेनासक्ता हेयबुद्धयो निर्लेपा विरक्ताः सर्वभोगवर्जिता नाममात्रेण साधनदशायां तत्र स्थिताः भक्तिमार्गीयत्वात्, वस्तुतः संन्यासिन एव, तथा वयमित्यस्मान् विचार्य, यथा तानात्मीयान् कुरुषे, स्वसेवकत्वेन स्थापयसि, मुक्तोपसृप्यव्यपदेशादिति न्यायात्, पुनः तेषामात्मत्वेन स्फुरसि, बहिःसंवेदनं नाशयसि, ततो हृदयस्थितो बहिराविर्भवसि, ततः स्वानन्दं तेभ्यः प्रयच्छसि, न पुनः पूर्वावस्थां सम्पादयसि, तमेव स्वदत्तमानन्दं उत्तरोत्तरं पोषयसि, तथास्मासु विधेयमिति भावः ।

फलत्वेन स्वभावैकविचारं सर्वथा सदा ।<br>
स्वामिन्यः कृपया कुर्वन्त्वाचार्यचेतसि ॥ १ ॥ १०-२६-३१.

---

श्रीहरिः । नन्वत्र भगवतः कामलीला निरूप्यते । सानुपपन्ना । कामस्य प्राकृतशरीराधारत्वनियमेन भगवति तादृशतद्वत्त्वापातात् । न च नायं नियमः । मोक्षदशायामाधिदैविकदेहवतो जीवस्यापि 'यदा सर्वे प्रलीयन्त' इति श्रुत्या तन्निवृत्तिश्रवणात् । 'सोऽश्नुते सर्वान्' इति भगवति प्रविष्टानां तेन सह स्वरूपात्मकतदनुभव एव । अन्यथान्तर्गृहगतानां गोपीनां कामः प्रतिबन्धको नोच्येत । न चाप्राकृतविग्रहेऽप्राकृतः स इति वाच्यम् । स्वरूपातिरिक्तस्य तथाविधस्य तस्याप्रसिद्धेः । न चैवमपि वक्तुं शक्यं नास्त्येव स इति । तदनुकूलक्रियायाः सत्त्वादित्याशङ्क्य समादधते क्रिया सर्वापीति ।

क्रिया सर्वापि सैवात्र परं कामो न विद्यते ।
तासां कामस्य सम्पूर्तिर्निष्कामेनेति तास्तथा ॥ १ ॥

भगवतो 'रसो वै स' इति श्रुत्या रसात्मकत्वादत्र भगवति क्रिया सर्वापि सैव । या रसशास्त्रे रसाविर्भूतिहेतुत्वेन प्रसिद्धा नृत्यबन्धादिरूपा । रसस्य च स्वक्रियाभिव्यक्तस्यैव प्रकटत्वाद् भगवानपि स्वं रूपं प्रकटयितुं स्वस्य रसात्मतां च बोधयितुमेवं लीलां करोतीति क्रियापि तथैवेत्यर्थः । अत एवोक्तं श्रीमदाचार्यैः पञ्चमाध्याये 'रसात्मकस्तु यः काम' इत्यादि । 'रसात्मक' इत्यनेन स्वस्वरूपात्मक उक्तः, स तु गूढ एव, स्त्रीभावत्वादिति तदुद्बोधार्थमेव नृत्यबन्धादिप्राकट्यमित्यर्थः । एतदेव चोक्तं 'वृन्दावनं सखी'त्यस्याभासविवृतौ प्रभुभिरपि 'लीलैव परिचायिके'ति । तत्तद्रसात्मकस्य स्वरूपस्य सा सा लीलैव परिचयसम्पादिकेत्यर्थः । सर्वेतिपदमखिलतद्वत्त्वेन लोकवैलक्षण्याय । नहि लोके कचिदपि सकलक्रियावत्त्वमुपलभ्यते । अपिशब्दः सरसतासिद्धये उत्कृष्टापकृष्टसमस्ततत्सत्त्वबोधनाय । एवकारोऽत्रैतदन्यतदसत्त्वज्ञापनाय । अंशतोऽप्यन्यक्रियासत्त्वे रसात्मकता न स्यात् । एवं सति भगवतो या काचिल्लीला सा सर्वापि तत्तद्रसात्मकस्वस्वरूपाविर्भावायेति मन्तव्यम् । अन्यथा पुरुषोत्तमस्य प्राकृतानुकरणं बाध्येत । वस्तुतस्तु न तत् प्राकृतानुकरणम्, किन्तु तद्रसस्य विशिष्टं रूपमेव तथेत्यर्थः । नन्वेवंविधक्रियावत्त्वे भगवतो लोके सा कामवत्समानाधिकरणा दृष्टेत्यत्रापि कामसिद्धौ पूर्वोक्तदूषणापात इत्याहुः परं काम इति । सन्तु ता एव क्रियाः, तथापि न दोषः । अजन्यत्वात्तासाम् । नहि भगवत्स्वरूपे आनन्दमात्रेऽन्यदस्ति किञ्चित् । स्वस्वरूपमेव भक्तभावनमुपलभ्य तथा तथा भवतीति सिद्धान्तस्य 'विनानुवादं न च तन्मनीषित'मित्यत्र निरूपणात् । व्यासैरप्यभिहितं 'आह च तन्मात्र'मिति । ननु कथमजन्यत्वं तल्लीलानामित्याशङ्क्य तदुपपादयन्ति कामोऽत्र न विद्यत इति । लोके तद्धेतुत्वेनाभिमतः कामोऽत्र न विद्यते । धर्मोरेव तद्रूपत्वात् । 'साक्षान्मन्मथमन्मथ' इति वाक्यात् । नहि भगवतो विग्रहे कामः । विग्रहः काम इति तु सुवचम् । एतेन हेत्वभावेनाजन्यतया तत्क्रियाणां नित्यत्वमलौकिकत्वं स्वरूपात्मकत्वं च समर्थितम् । एवंविधलीलाकरणेऽपि भगवतो निष्कामत्वमप्राकृतत्वं चोक्तम् । अत एव कामाभावादेव न लौकिककामुकवत् सापेक्षता भगवतः, प्रत्युत मानश्च । गीतगोविन्दाद्युक्तप्रकारेण लौकिकीषु

रात्रिषु रमणे सापेक्षता च तद्रसस्वरूपस्य तथात्वबोधनाय । लौकिकत्वं हि लोकनिर्वचनीयत्वम्, न तु लोकसिद्धत्वम् । लोके रसस्यैवाभावात् । 'दर्शयन् कामिनां दैन्य'मित्यत्र तथा निरूपणात् । लोकानां तु महाराजलीलानुकरणे बालानां तदभिमान इव सरसताभिमानमात्रमिति निगर्वः । ननु भक्तानां तु कामसत्त्वेन सकामत्वं प्राकृतत्वं च दुष्परिहरमिति तत्सम्बन्धेन भगवतो लीलायाश्च तथात्वं सिध्येदित्याशङ्क्याहुः तासां कामस्येति । तासां स्वामिनीनां यः कामः सोऽपि स्वरूपात्मक एव, न लौकिकः । यतो निष्कामेनाधेयतासम्बन्धेन कामाभाववता सम्यक् सर्वभावेन तस्य पूर्तिरिति । प्रतिमायां स्वरूपस्थित्या तत्त्वमिव तास्वपि स्वरूपात्मककामस्थित्या तद्रूपत्वमिति ताः स्वामिन्योऽपि तथा भगवानिवाप्राकृतविग्रहा निष्कामाश्चेति तथाभूतासु रमणात्रांशतोऽपि लीलायाः स्वरूपस्य च प्राकृतत्वशङ्केत्यर्थः । अत एव दृश्यन्तेऽत्र सर्वत्र तथाविधान्येव तासां वचांसि 'सन्त्यज्य सर्वविषया'नित्यादीनि । नहि कामिन्य एवं वदन्ति । न वा भगवतोऽन्यः सर्वथा निरपेक्षो भवति । द्वितीयाध्यायीयसापेक्षता तु भगवत इवोत्तररसप्राकट्ये तद्धर्माविर्भावरूपेति भावः ॥१

नन्वेवमपि भक्तानामलौकिककामवत्त्वे किं प्रमाणम् । भगवतः परमकृपालोरन्यथाकर्तुमपि समर्थत्वेन तदर्थं प्राकृतविग्रहं कामं च स्वीकृत्य प्राकृतमपि तदीयं तं पूरयेदित्याशङ्क्याहुः कामेनेति ।

कामेन पूरितः कामः संसारं जनयेत् स्फुटम् ।
कामाभावेन पूर्णस्तु निष्कामः स्यान्न संशयः ॥ २ ॥

कामेनाधेयरूपेण स्वरूपभिन्नेन पूरितः प्राकृतः कामः संसारं पुत्रपौत्रादिसम्पत्त्या विशेषाहन्ताममतात्मकं जनयेत्, न तु तदभावम् । 'न जातु कामः कामाना'मिति वाक्यात् । कामाभावेन कामस्याधेयस्याभावो यत्र । तादृशेन स्वरूपेण पूर्णस्तु कामो निष्काम आधेयकामरहितः स्वरूपात्मक एव स्यात् । अत एव तादृशकामवतां यथायथा भगवतो विशेषलीला, तथा तथा दृश्यतेऽत्यन्तनिरपेक्षतैव । यतो भगवतोऽप्यग्रे निरपेक्षा जाताः स्वतन्त्रभक्त्यैव स्थिताः । यदि लौकिक एव कामः स्यात्, तदा नैवं स्यादिति स्वरूपात्मककामवत्य एवैता इति सर्वमनवद्यम् ॥ २ ॥

नन्वेवं भगवतो भक्तानां च निष्कामत्वे रसशास्त्रमर्यादा भज्येत, कामवतोरेव तथा भावनिरूपणादित्याशङ्क्याहुः अतो न कापीति ।

अतो न कापि मर्यादा भग्ना मोक्षफलापि च ।
अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेत् ॥ ३ ॥

यतो भगवानेव कामः स्वस्वरूपमेव विग्रहरूपेण कामरूपेण चाविर्भाव्य भक्तेषु च स्वस्वरूपं प्रतिष्ठाप्य प्रसादरूपशक्तिप्रवेशेन स्त्रीभावं दत्त्वा स्वस्वरूपस्य च तत्सम्बन्धित्वं विधाय स्वरूपात्मिकाभिः सह रमत इत्यतो रसमर्यादा निष्कामत्वान्मोक्षफलापि सा न

भग्नेत्यर्थः । अत एतच्छ्रुताविति । यतो नेयं कामलीला, अपि तु स्वरूपानन्ददानलीला । अत एतच्छ्रवणेन वेदान्तश्रवणेनेव लोकः साधारणोऽपि निष्काम एव सर्वथा सर्वप्रकारेण भवेत् ॥ ३ ॥

नन्वेवमप्राकृतत्वमविदुषां काव्यादिश्रवण इवैतच्छ्रवणेऽपि कामोद्बोध एव स्यादित्याशङ्क्याहुः भगवच्चरितमिति ।

भगवच्चरितं सर्वं यतो निष्काममीर्यते ।
अतः कामस्य नोद्बोधस्ततः शुकवचः स्फुटम् ॥ ४ ॥

यतः सर्वमेव भगवतः परमकाष्ठापन्नस्य चरितम्, अतो निष्कामं ईर्यते कथ्यते । प्रभोर्निष्कामतायाः पूर्वं प्रतिपादितत्वात् । नहि भगवान् परमकाष्ठापन्नः शरीरं गृह्णाति, न वा कामम्, न वा तच्चेष्टाम् । यतो ज्ञानिनोऽपि तत्यजन्ति । तस्मात्तस्य भगवतश्चरितं चेत्, तदा निष्काममेवेति साधारणानामपि ज्ञानसम्भवादेतच्छ्रवणे क कामोद्बोधसम्भावना, प्रत्युताप्राकृतत्वनिष्कामत्वादिज्ञानं च तत्स्वरूपे लीलायां च सेत्स्यतीत्यर्थः । अत एव शुकोऽपि प्रवृत्तः, परित्यज्य ज्ञाननिष्ठाम्, प्राह च 'कामं हृद्रोग'मिति प्रकरणान्ते स्फुटमेवं वाक्यमिति सर्वमनवद्यम् ॥ ४ ॥

श्रीमदाचार्यदासेन हरिदासेन रूपितः ।
अर्थः स्वाचार्यवाक्यानां स एवेशः प्रसीदतु ॥ १०-२६-४२.

इति श्रीहरिरायविरचितस्वाचार्यकारिकाशयविवरणम् ॥

---

श्रीहरिः । तत्रैवान्तरधीयतेत्यत्र । यूथमध्ये वेति । अत्रैवकारेण यत्र यूथेपि सौभगमदमानौ दृष्टौ, तत्र तथा कृतवान्, अतः कस्याश्चिन्मदमानयोरभावेन यूथबहिर्भावे प्राकट्येनापि स्थितिरिति गम्यते । अत एव 'यां गोपीमनयत् कृष्ण' इति सङ्गच्छते । सजातीयभावेन हि यूथस्थः, बहिर्भावस्तु तद्विजातीयभावेन, साम्प्रतं सौभगमदेनैव सर्वासामेकजातीयत्वम्, अतो यत्र स नाभूत्, तत्र प्राकट्येनापि स्थितिरिति 'गोपीमनय'दित्यनेनोक्तम्। ननु तत्र मदानुत्पत्तौ किं कारणमिति चेत्, तदाकाङ्क्षाया अपूरणादिति बुध्यस्व । तत्र समुदायरमणमेवाभूदिति तत्र रमणाकाङ्क्षैव स्थितेति न स्वस्मिन्पूर्णत्वमाननमितो मदाभावेन प्रशमनीयाभावान्न तत्रान्तर्धानम् । ननु पश्चात्कथं मानोत्पत्तिः, सम्बन्धस्य तुल्यत्वेपि प्रकारविशेषाकाङ्क्षापूरणादित्यवेहि । अत एवाचार्यैस्तत्र गोपीपदेन मुग्धभाव उक्तो, न प्रौढभावः, अत्र तु 'एवं व्रजस्त्रिय' इतिवाक्यात् स्त्रीत्वेन प्रौढभाव उक्तः, अतः प्रौढानामेव सङ्कोचाभावेन समुदायरमणे स्वमनोरथपूर्तिः, मुग्धायास्त्वप्रौढत्वादग्रे पतनासम्भवेन समुदायरमणे स्वमनोरथपूर्तिरिति प्रत्येकरमणाकाङ्क्षैव स्थितेति तदपूरणे मदाभाव उचित इति

---

१. एवैव इति पाठः ।

भावः')। किञ्च। मानो हि द्विविधः, प्रियसम्बन्धिपरमानन्दप्राप्तिजनिततृष्या निरपेक्षत्वेन, स्वस्मिन्नतिशयितप्रियकृपावत्त्वज्ञानेन च। तत्र सर्वासु रसशास्त्रीयाखिलक्रियाभी रसात्मकाखिलप्रभुधर्मावेशेन भगवत इव निरपेक्षत्वात्तत्सम्भवः। अत एव 'भुवि स्त्रीणां मध्ये आत्मानं पूर्ण मेनिरे मानिन्यश्च जाता' इत्युक्तम्। तस्यां तु 'हित्वा गोपी'रितिवाक्यात्स्वस्मिन्कृपातिशयसत्त्वज्ञानेन तदुत्पत्तिः, प्रभुस्तूभयविधोपि स सर्वात्मभावविरोधीतिज्ञापयितुमुभयविधमपि तं दूरीकृतवानिति वक्तुं 'यां गोपीमनय'दित्युक्तमितिभावः। १०–२९–४८.

कृपा मयि निजाचार्याणां साधनाभाववत्यपि ।
यादृशी तामहं नैव जाने जीवस्वभावतः ॥ १ ॥
समर्था सा कृपात्वेन मामज्ञमपि सर्वथा ।
सामर्थ्यमपि सम्पाद्य स्वात्मानं ज्ञापयिष्यति ॥ २ ॥

---

श्रीहरिः। तृतीयेध्याये। 'जयति तेऽधिकं जन्मना व्रज' इत्यादिवाक्यवक्तृनिर्णये। पूर्वं वाक्यचतुष्टयेन सपूर्वा उक्ताः, ततस्तच्चतुष्टयेनासपूर्वा उच्यन्ते। तत्र तद्वाक्ये विवरणग्रन्थानुसारेण सङ्ग्रहकारिकोक्तः पाठक्रमो न विवक्षित इति ज्ञेयम्। तत्र 'विरचिताभय'मित्यनेन केवलसात्विक्यो निरूपिताः। तत्र धाष्टर्यस्य स्पष्टनिरूपणाद्यभावात्। 'व्रजजनार्तिह'न्नित्यनेन धाष्टर्योत्तामस्य उक्ताः। 'प्रणतदेहिना'मित्यनेन किञ्चिद्व्यक्ततया निरूपणाद्राजस्यः। 'मधुरये'त्यनेन सकलस्वामिन्यर्थे प्रार्थनात्स्वदासीत्वनिरूपणाच्च गुणातीता उच्यन्त इत्यन्यपूर्वावदत्रापि क्रमो ज्ञेय इत्यर्थः। गुणातीतभावस्य कामरसाभिनिविष्टानां प्राप्यस्यानुदयादिति सर्वत्र पश्चात्तन्निरूपणे तात्पर्यं ज्ञेयम्॥ १०–२८–१.

---

न खलु गोपिकानन्दन इत्यत्र। भगवतो नन्दसूनुत्व इत्यादि। तत्रायमाशयः। अत्र पद्ये गुणातीतभावाः स्वामिन्यो वक्त्र्य उच्यन्ते। स च भावः केवलभगवत्स्वरूप एवोच्यते, 'मन्निष्ठं निर्गुणं स्मृत'मिति वाक्यात्। तस्मिन् सति भगवत्स्वरूपं वस्तुतो यादृशम्, तादृशमेव भासते भावविषयत्वेन, न तु स्वभावाधीनाविर्भवनं तदानीमेव तथाविर्भूतम्। तथा च गोपिकानन्दन इति निषेधार्थमनुवादेपि स्वामिनीतात्पर्यविषयतया तेन पदेन नन्दसूनुरेव वाच्यः। भगवति स्वतो गोपिकानन्दनभावान्नन्द एव लीलार्थमाविर्भावावसरे पुत्रत्वबुद्धेरुत्पादितत्वात्। तत एव जन्मोत्सवकरणं तथाबुद्ध्या। 'स्वपुत्रस्योदयाय चे'ति वाक्यात्। अत एव 'नन्दस्त्वात्मज उत्पन्न' इति भगवत्कृत्यनुवादकं शुकवचः। स्वज्ञानानुसारेणानुवादे भगवल्लीलावक्तृत्वं शुकस्य न स्यात्। भगवत्कृतलीलोपयोगिपुत्रत्वबुद्धेरनुवादात्। यशोदापुत्रत्वं तु प्रभौ स्वामिनीभावविषयत्वेन। 'गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भव'मिति वाक्येन तासां तथाविधभगवद्भावनिरूपणात्। नन्दसुतत्वं द्रोणदत्तात्मभूवरसार्थकत्वाय भगवता स्वयमेव प्रकटितम्। अवतारस्यालौकिकरी-

स्यैव सम्पत्तिरिति ज्ञापनाय च । अन्यथा मातुः पुत्रत्वेन जनने लौकिक्येव रीतिः स्यात् । अत एवाचार्यैः 'नन्दस्त्वात्मज उत्पन्न' इति ग्रन्थसन्दर्भे 'पितुः पुत्रः, अतो नन्दः जातकर्म कारयामासेति सम्बन्ध' इत्युक्तम् । लौकिकरीत्या जननं तु न भगवति पुरुषोत्तमे सम्भावितम्, अलौकिकत्वात् । तादृशे हि प्राकट्यस्यैव जन्मशब्दवाच्यत्वात् । अत एवोक्तं 'नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधे'ति । अतो मायावेष्टितस्यैव यशोदायां भगवत्स्थितिरिति तस्या एव ततः साक्षाज्जन्म । भगवांस्त्वावृत एव जातो, मायागमनपर्यन्तं च तथैव स्थित इति न यशोदाया जननसमये सुतत्वबुद्धिः । अनावृतप्राकट्यं तु पश्चादावरकगमनोत्तरमिति पुत्रत्वं नन्दभावविषयत्वेन । अन्यथा श्रीनन्दस्येव मादृणामप्यात्मजबुद्धिरुच्येत । तत्र तु 'जातं परमबुध्यते'ति वाक्यात् सामान्यतोपि जननज्ञानम्, न तु भगवद्विषयकम् । अन्यथा भगवति साक्षादाविर्भूते तद्भावे च सति निद्रारूपं कथमुपपद्यते । देवक्यां तु प्रद्युम्नांशेनापि पुत्रत्वम् । प्रकृते तु मायावरणान्न तथा । व्यूहानामप्यत्राप्राकट्यात् । तत्कार्यस्यापि वंशसम्बन्धस्याप्यत्राचिकीर्षितत्वात् । अत एवोक्तं विवृतौ प्रभुभिः 'पुरुषोत्तमस्तु नन्दगृह एव मायया सह जात' इति । जननस्य मायापर्यवसायित्वबोधनायैव तत्सहभावोक्तिः । अत एव 'निरीक्ष्यमाणेऽजननी ह्यतिष्ठता'मित्यत्र नञ्प्रश्लेषेण व्याख्यानं कृतम् । नन्दे तु 'नन्दः स्वपुत्रमादाये'त्यत्र भगवत एवोदितः । तत्रापि स्वपदेन स्वसम्बन्ध एव भावः, अतो न यशोदासम्बन्ध इति निरूपितम् । ननु 'तन्मातरौ निजसुता'वित्यत्र मात्रोः स्वसुतत्वभावानुवादः कथमुपपद्यते इति चेत्, तत्र तदानीमेव बाललीलाभिर्भगवता निरोधार्थं पुत्रभावोत्पादनात् । अन्यथा पुत्रभावस्य सार्वदिकत्वे तत्र दुःखजनककृतिरूपमग्रे बन्धनं न कुर्यात् । नहि पुत्रे जनन्य एवं कुर्वन्ति । ननु तदा पुत्रभावे 'स्वार्भकस्य कृतागस' इति शुकोक्तिर्न घटते इति चेत् । न । तदा मातृचरणेषु भगवति पुत्रबुद्धिरित्यन्यथा बुद्धिनिरूपणार्थमेव तथोक्तत्वात् । अन्यथाग्रे भगवति पुत्रभावबोधकतादामापरिच्छेद्यत्वादिब्रह्मधर्मान् शुको न वदेत् । अत एव दामबन्धनानन्तरं यशोदाया भगवति स्नेहकला निवृत्तेति निरूपितमाचार्यैः । पूर्वमपि जननाभावेन सहजस्नेहो न स्थित इति कलात्वकथनम् । सापि बाललीलया निरोधार्थं भगवतोत्पादितैव । सिद्धे साधारणनिरोधे प्रयोजनाभावात्तन्निवर्तनम् । 'शृण्वन्त्यश्रूण्यवास्राक्षी'दित्यत्र समाधानं 'गुणानां माहात्म्य'मित्याचार्यैरुक्तमेव, अन्यथा सहजत्वे स्नेहस्य कथं निवृत्तिः स्यात् । स्वामिनीनामिव व्यसनभाव एवोदियात् । स च मुख्यरसलीलाङ्गीकृतावेव सम्पद्यत इति भावः । अतो लीलाभिरागन्तुकः पुत्रभावो यशोदायाः । नन्दे तु प्रादुर्भावरसोत्पन्नत्वेन स्थायिभावात् सहज एव । अत 'एवाहं ममासौ पतिरेष मे सुत'इति सुतत्वबुद्धेः कुमतित्वेन गणनं श्रीयशोदायाः श्रीनन्दानामिति । तत्परिचायकं तु तत्र बन्धनमोचनम् । 'विलोक्य नन्दः प्रहसद्वदनो विमुमोच हे'ति वाक्यात् । अत एव श्रीनन्दस्याग्रे श्रीमदुद्धवं प्रति स्वव्यसनभावबोधकानि 'स्मरतां कृष्णवीर्याणि' इत्यादिवचनानि । सर्वज्ञगर्गेणापि 'तस्मान्नन्दात्मजोयं त' इति निःसंशयमभिहितम् । 'अयं हि रोहिणीपुत्र' इत्यत्र निश्चय-

वाचकाव्ययकथनेन भगवद्वृत्तियशोदापुत्रत्वे सन्देह एवोक्तः । लीलया पुत्रत्वदर्शनात् स्वसर्वज्ञेन मायावृतप्रादुर्भावस्य स्फुटकरणाच्च संशयोत्पत्तेः। अत एवं भगवति रौहिणेय इतिवद्याशोदेय इति मातृसम्बन्धे न नामापि, गर्गेणाप्रकटितत्वात्। नन्दात्मज इति तु 'तस्मान्नन्दात्मज' इति वाक्याद्भवत्येव नाम । स्वामिनीभावविषयत्वेन यशोदासुतत्वं देवकीसुतत्ववत्। 'देवकीजठरभू'रितिवत् 'तव सुत' इत्युक्तेः। अत एव 'गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भव'मिति वाक्यं शुकेनापि तद्भावविषयत्वेनैव भगवति तथात्वमुक्तम्। तस्मान्नन्दसूनुरेव वस्तुतो भगवानिति निर्गुणभावापन्नायाः स्वामिन्यास्तात्पर्यम्। गोपिकानन्दनत्वोक्तिस्तु श्रवणकर्त्रीणां भावस्तथैवेति तद्भावमादाय ताः प्रति निर्बन्धार्थं तथानुवादायेति स्वामिनीतात्पर्यमादाय विवृतावाचार्यचरणैर्भगवतो नन्दसूनुत्व इत्यभिहितमेतत्तात्पर्यविद्भिस्तदीयैरत्र निःसंशयैर्भाव्यमिति दिक्। १०–२८–४.

प्रसीदन्तु निजाचार्या मयि निःसाधने स्वतः।
स्वकीये तु स्वदासे तु स्वसम्बन्धिकृपालवः ॥ १ ॥

---

अपरं च । अङ्गीकृतपालने तव युक्तायुक्तविचारं न पश्यामो, यतस्तृणचराणामप्यनुगम् । तज्जीवनं तृणैरेव । तानि चामार्गेपि भवन्ति । स्वानुरोधेन न तान् वारयसि, किन्तु ते स्वभक्ष्यं यत्रैव पश्यन्ति, तत्रैवाविचारं गच्छन्ति मुञ्जाटव्यामिव । तदनु स्वयमपि गच्छसि, तदधीनः सन् । एतेनास्मज्जीवनहेतुस्त्वत्पदाम्बुजम् । तस्य मकरन्दो मादक इति तेनैव मानरूपोन्मार्गगमनेपि नोपेक्षोचिता, यतो वयमङ्गीकृताः । नो चेज्जीवनमेव न सम्पत्स्यत इत्यतिक्लिष्टा वयमित्युक्तं भवति । एतेन त्वयैवेयं रीतिः प्रकटीकृतेति नान्ततोस्मद्दोष इति ज्ञापितं भवति । अन्यथा कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पूर्वं पीत्वातिसुखितानां लोके लौकिकत्वेन परिदृश्यमानेषु वस्तुतस्त्वलौकिकेषु तृणेषूक्तपीयूषातुल्येषु तेषां प्रवृत्तिः कथं स्याद्यदि भवान् स्वलीलाविशेषार्थं तथा तथा तान्न प्रवर्तयेत् । वस्तुतस्तूक्तरूपाणां तेषां तृणे रुच्युत्पत्त्यर्थं त्वदनुगमनम् । तेन भक्तिरसपोषितानि तृणानि भवन्तीति तेषां तत्र रुचिर्भवति । तादृशस्यास्मासु स्थापनेस्माकमप्यभीष्टं पालकं च तद्भविष्यति स्वस्वभावादिति भावः । अपरं च, श्रियः स्थानं तदिति तज्जातीयास्वस्मास्वेव स्थापयितुमुचितम् । किञ्च । तस्या अपि नायिकात्वाद्रसपोषसामयिक एव सम्बन्धोभीष्टो, न तु तृणसंचारः । क्रमेणैतद्विशेषणद्वयोक्त्येदमेवं ज्ञाप्यते । अत्र स्वयं साक्षात् सम्बन्धसमयमलभमाना श्रीर्विचारितवती, प्रभुः पशूनातृप्ति चारयित्वा सायं व्रजं नीत्वा निशि स्वप्रियाभिः क्रीडिष्यत्येव, तदा तत्सम्बन्धेन रमणमिव ममापि भविष्यतीति श्रियो दूरपर्यन्ते हृदयम् । तदनुगरेन रजसा श्रमेण च सौन्दर्याभावशङ्कापि निरस्ता द्वितीयेन । तेन यथा यथा चारणम्, तथा तथा शोभातिशय उक्तो भवति । अथवा । तृणचरानुगमने स्नेहभरेण कण्टकादिस्पर्शशङ्कया स्वयं सूक्ष्मरूपेण चरणाम्बुजतले स्थित्वा तत्सम्बन्धं वारयतीति तदा श्रीनिकेतनं भवतीति तथोक्तम् । अपरं च । यदि स्वेच्छया स्वयं नयेत् पशूंस्तदाग्रे विषपानात्मकानिष्टसम्बन्धो न स्यात्, किन्तु ते स्वेच्छया गच्छन्ति, प्रभुस्तदनु तदधीनः सन्नागच्छतीत्यग्रेनिष्टसम्बन्धे तन्निवारणाय अम्बुजत्वेन अतिसुकुमारमपि पदमतिक्रूरेपि तत्रार्पयसि । तदा हि व्रजवासिस्नेहपरीक्षायां सम्पन्नायामतिसन्तोषात् तद्द्वारा सा सम्पन्नेति तस्मिन् सन्तुष्टस्तच्छिरस्सु ब्रह्मादिदुर्लभरजस्काभ्यां पदाभ्यां अनृत्यत् । अल्पकालमात्रं तथा नृत्यमात्रं न कृतवान्, किन्तु तद्विषुभयं सार्वदिकं निवारितवान् । गरुडः सदा तच्छिरस्सु पदाम्बुजं पश्यतीति । अत एवार्पणमुक्तम्, न स्पर्शमात्रम् । अस्मत्परीक्षायाः पूर्वमेव सम्पन्नत्वात् दुःखदनिवारणमेव कार्यम् । स शयानोन्तश्चोरवद्बाधते । पदाम्बुजसम्बन्धेनास्मद्द्वारा सोपि तापरहितः सन्नस्मानपि न तापयिष्यतीति भावः । तापयतीति तस्मिन्नपि तापो लक्ष्यते । क्रूरे तस्मिं वा स्वामिनं न विक्रूनं भवतीति ज्ञापनाय त इति । त्वं यतोऽविकृतः । सर्वात्मना स्वलरान् स्वार्थपरान् सहजदोषदुष्टानपि कृपयसीत्यस्मास्वपि स्वतो दोषरहितासु कृपा कार्येति भावः । अपरं च । विषगिनरले पूर्वविशेषणवतीनामतिभारेण अविक्षेपसम्भवे तदा स्वोद्वेजकत्वेन तदिव वेणीरूपं कर्षति । स्वामहं जेष्यामीति जिगीषावचनेन मनसो वचमश्च वतत्वाभावात् देहमात्रमुक्तम् । पुलि-

ङ्गप्रयोगश्च । तद्भावप्राधान्यात् तृणचरेषु स्वभोग्यरससम्पादकम् । गवां तद्भक्षणेन तृणचरत्वम् । उक्तरूपाणां तु लीलोपयोगिशाड्वलप्रदेशगमनेन तथात्वम् । अथवा । तृणं सर्वतो लघु, तद्वच्चरन्तीति तदा चलनातिलाघवेन रसातिशयात् पुनस्तत्प्राकट्यार्थं प्रेरयन् पृष्ठतस्तद्धापारयतीति तदनुगत्वम् । निःसहनिपतनेनाग्रिमं विशेषणम् । ततश्चाग्रिमविशेषणेन विविधबन्धेषु नृत्यदिव ते पदाम्बुजं तथा कुर्विति हार्दो व्यञ्जितोर्थः । १०–२८–११.

मयेदमुक्तं युक्तं वाऽयुक्तं नैव विचारितम् ।
तत् क्षमतां प्रियायुक्तश्रीकृष्णोसत्कुलेश्वरः ॥ १ ॥

---

श्रीकृष्णाय नमः । पाल्यानां चर्म च न परिधेयमित्यत्र । ननु भूम्याद्यनुग्रहाय पादुकापरिधानाभावेन चरणयोरवसादः किमिति सम्पाद्यते । यद्यपि पादुकापरिधाने चरणभूम्योर्मध्येन्तरालसम्भवात् व्यवहितस्यापि तस्यास्पर्शात् तदनुग्रहासिद्धिः, तथापि व्यवधायकान्तरेण तत्सिद्धेः । श्रीकुङ्कुमलिप्तपदस्पर्शेपि तथा सुखस्य हृदये स्वानुभवसिद्धत्वात् । अतः किमित्यवसादं प्राप्येतेति पदे तदभावार्थं तदनुग्रहार्थं च चर्मादिकमेव न कुतः परिधीयतेऽस्मद्धृदयकठिनतामवगत्य कुङ्कुममिवेत्याशङ्क्याहुः पाल्यानां चर्म चेति । ते हि गवादयो 'अजा गावो महिष्यश्चे'तिवाक्यात् सर्वभावेन पाल्याः । तच्च जीवतामेव घटत इति तच्चर्मपरिधाने ते मृत्योरपालिता एव स्युः । अतो न तत् परिधेयम् । अन्येषां तु चर्मणः चरणसम्बन्धायोग्यत्वमेवेत्यपरिधानमेवेत्यर्थः । किञ्च, चर्मणश्च चरणसम्बन्धे भक्तिरसालोडिततृणभक्षणजनितपरमानन्दाभावेन तदंशेऽपालितत्वं स्यादिति पाल्यानां तत्परिधानमनुचितमिति भावः । अत एव 'तृणचरानुग'मित्यत्र तृणचरपदं ताभिरुक्तमिति दिक् । १०–२८–११. श्रीहरिरायाणाम् ।

---

**तासामाविरभूत् शौरिः स्मयमानमुखाम्बुजः ।**
**पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः ॥ १०–२९–२**

अथवा, तासामाविः तत्सम्बन्धिप्राकट्यम्, तत्सजातीयस्त्रीवेश इति यावत् । तथाच तेन वेशेन पूर्वमन्तर्हितस्तासु स्थितः, अधुनापि तथा प्रकटोऽभूदित्यर्थः । यद्यपि

---

१. तृणचरेष्वित्यत्रायं भावः । भगवान् हि गवां सङ्गे गच्छंस्तृणानि भक्तिरसामृतयुतानि चरणसम्बन्धेन विधाय तन्निष्पादिततन्निष्ठं दुग्धादिरसं स्वभोग्यं विदधाति, तथात्र स्वभोग्यो यो रसः पुरुषत्वेन तत्सम्पादकं यद्रसाधिक्यं तत्सम्पादकं चरणमिति । तथा चरणे (तथाचरणे) सम्बन्धे भगवद्भोग्यत्वपुरु (षत्वेन) सम्बन्धोस्मासु भविष्यतीति भावः । श्रीहरिरायविरचितमिति ।

ज्ञापनसमये न तत्प्रयोजनम्, तथापीयदवधि भवतीनां मध्येऽहमनेन वेशेन स्थितः, परं न लक्षित इति तत्प्रदर्शनेन ज्ञापितम् । अत एव 'कस्याः पदानि चैतानी'त्यादिसमुत्प्रेक्षा, अन्यसम्बन्धदोषोपि न तदानीमस्फुरत् । अन्यथा खण्डितानामिवाधिकखेदेन तथोक्तिः स्यात्, न तु दृशां श्रीत्युत्फुल्लता । अतस्तथाविर्भाव इति लक्ष्यते । श्रीशुकोक्तिरपि तथा 'सहसैव व्रजाङ्गना अतप्यन्' इति । यदि परस्परं मुखानि दृष्ट्वा विचारयेयुः, तदा वैलक्षण्यात् स्वमण्डले तमालोक्य तापं न कुर्युः, परं न तथा कृतमिति सहसेति पदादवगम्यते । अग्रे च 'पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्त'मिति भूतेषु तेषु भक्तेषु तज्जातीयवेशेनान्तस्तन्मण्डले सन्तं रूपान्तरेण तन्मध्यपातिन्या कयाचित् सह तन्मण्डलाद् बहिः सन्तमित्यर्थः । ननु सौभगमदेन मानवतीनां तासामनुरोधेनेश्वरस्य कथमात्मवेशपरित्यागः सम्भवति, तद्व्यतिरेकेणापि कर्तुं समर्थत्वादित्याशङ्क्याह शौरिरिति । अत्रायमाशयः । यथा श्रीवसुदेवः स्वापेक्षितं प्रभुप्राकट्यं साधयितुं तदाधारभूतदेवकीसापेक्षतया शूरस्य पुत्रत्वेन तादृशोपि भूत्वा स्वधर्मं युद्धं परित्यज्य कंसस्याग्रे दैन्यं प्रदर्शितवान्, अन्यथा भक्तदुःखाभावेन स्वापेक्षितासिद्धेः, तथा 'रसो वै सः' इति श्रुतेरीश्वरोपि स्वापेक्षितरसप्राकट्यार्थं तदाधारसापेक्षतया स्वधर्ममैश्वर्यं परित्यज्य तदनुरोधमङ्गीकृतवान्, अन्यथा 'रसमेव लब्ध्वानन्दीभवती'त्येवकारेण रसरूपत्वेपि सत्यन्यतो लाभाभावे रसवत्त्वं न सिध्येत् । अतो यथैव तासु रसः प्रकटो भवति, तथाकरणेपि नैश्वर्यहानिः, प्रत्युत रसभोक्तृत्वेन तत्सिद्धिरेवेति न किञ्चिदनुपपन्नम् । किञ्च । यथा भक्तेषु लीलारसप्रकटनार्थं पूर्वं तद्विलक्षणचतुर्भुजरूपेण वसुदेवादाविर्भूतः, तद्दर्शनेन लीलाविरोधिमाहात्म्यज्ञानेन लीलारसासम्भवं मत्वा भक्तसजातीयप्राकृतभावमङ्गीकृत्य लीलारसं प्रकटितवान्, तथात्रापि पूर्वं नायिकासु लीलारसप्रकटनार्थं तद्विलक्षणनायकरूपेणाविर्भूतः । तद्दर्शनजलीलाविरोधिमदमानात्मकदोषेण रसासम्भवं मत्वा तत्सजातीयनायिकाभावमङ्गीकृत्य लीलारसं प्रकटितवानितिज्ञापनाय शौरिपदम् । अथवा । स्त्रीवेशेन तदलक्षितस्थितिकौशलं यथा सविषयत्वाद्रसशास्त्रविदः क्षत्रियस्य सम्भवति, तथा नान्यस्येतिज्ञापनाय शौरिपदम् । तथाच दुष्टमारणलीलानुकरणं भगवद्भावापन्ननायिकानां सम्भवति, परं रससम्बन्धिलीलानुकरणं नायिकाभावापन्नभगवत एव सम्भवति । तत्र चात्मानमज्ञापयित्वा कश्चिदनिर्वचनीयरसानुभवो भवतीति तथा कृतवानिति भावः । अनिर्वचनीयत्वात्तल्लीलानुकरणं स्पष्टतया तथा नोक्तम् । ननु येन वेशेन पूर्वं तिरोहितः, तेनैव वेशेन कथमाविर्भूत इत्याशङ्क्याह स्मयमानमुखाम्बुज इति । कपटवेशो हि हास्यसङ्कोचेन । यावन्मुखे रौक्ष्यं भवति, तावदेव न लक्ष्यते इति भावः । ततः स्मितेन लक्षित इति भावः । यथा सहस्रपत्रं कमलं प्रतिदलमुपविष्टषट्पदानां रसपूरकं भवति, तथाग्रे प्रतियुगलं प्रत्येकं चाविर्भूय तासां रसपूरकं श्रीमुखमपीति ज्ञापयितुमम्बुजत्वोक्तिः । यद्वा । स्मयः तासां गर्वः, तस्यापि मानोऽहङ्कारो यस्मात्, तादृशं मुखाम्बुजं यस्येति । शास्त्रमर्यादया

न कदाचिदहङ्कारस्य भगवत्प्रापकत्वं जातम्, इदानीं तु तद्वतीनां 'तासामाविरभूत्' इति तत्प्रापकत्वात् तस्यापि तदभिमानोऽभूदिति स्मयमानत्वम्। सोपि भक्तावेव भवितुमर्हति। तत्रापि रसरीत्येति ज्ञापयितुं मुखाम्बुजे तदुक्तिः । यद्वा । तासां स्मयमानौ मुखाम्बुजे यस्येति । यथा सङ्गमदशायां भवतीनां हृदये स्मयमानौ अभूताम्, तथा विप्रयोगेपि न मम हृदये, किन्तु मुखे । तत्रापि तौ भवतीभ्यो निर्गतौ मत्सम्बन्धित्वादन्यत्र गन्तुमशक्तौ मम हृदये च भवदीयदोषरूपत्वात् स्थितिमलभमानौ भक्तेः स्वसम्बन्धिदोषसहिष्णुत्वात् मुखे तिष्ठत इति ज्ञापयन्निव तथेति भावः । यद्वा । स्मयमानाः मुखे अम्बुजाः श्रमजलकणाः यस्येति । तेषां स्मयमानत्वमीषत्स्फुटत्वम् । तासामिवान्वेषणादिपरिश्रमः स्वस्यापि जात इति सूचयन्निव तथेति भावः। अथ च ताभिरन्विष्यते, श्रमश्च प्रियेणानुभूयत इति विरोधाभासं दर्शयन्त इव ते तथा जाताः । यद्वा । स्मयमाना मुखे अम्बुजा लक्ष्मीर्यस्येति । यद्यपि तस्याः स्थानं वक्षः, तथापि तत्र स्थितां मां दृष्ट्वा गोपिकासङ्गमप्रतिबन्धकतयाद्य प्रभुर्निराकरिष्यति । मुखे स्थितां तु दर्पणाभावान्न ज्ञास्यतीति विचार्य तत्र स्थिता । अहं कियता साधनेन चरणरजोपि न प्राप्तवती, एतासामनुरोधेनेश्वरः कथं कथं करोतीति सा हसन्ती जाता, परमीश्वरो ज्ञास्यति चेत्, किं वा करिष्यतीति भयेन तज्ज्ञापनाय हासे मन्दता । अथ च । तासां विरहेण कार्श्यवैवर्ण्यादीनामङ्गान्तरेभ्यो निःसरन्ती शोभात्मिका सा । ततोपि निर्गमसमये तासां दर्शनेन तत्र स्थिरा जातेति हर्षेण तथेति भावः । अथ च, मम वशे न जातः, परं मत्सजातीयानां तु वशे जात एव इति साम्प्रतं हतस्वातन्त्र्यमिति तथा जातेति भावः । यद्वा । स्मयमानः प्रकटायमानो मुखाम्बुजो मुखचन्द्रो यस्येति । यथा प्रावृषि घनेन पीडितश्चन्द्रः शरदि घनाभावात् प्रकटो भवति, तथा श्रीमुखमपि ताभ्योप्यधिकखेदादिव पूर्वं नीलनिचोलेन पीडितम्, आविर्भावसमये तदुद्घाटनात् प्रकटमभूत्, अन्यथा श्रीमुखस्य स्फुटीभावे वर्णे वैसादृश्यात् कान्तिविशेषाच्च वेशपरिवर्तनमात्रेण तिरोधानासम्भवादिति भावः ।यद्वा । स्मयमानमुखा अम्बुजा भूमिः यस्मादिति । 'अद्भ्यः पृथ्वी'ति श्रुतेः । अत्रेदमाकूतम् । गोपिकाकर्तृकरमणदशायामेव भूमेः समग्रतत्प्रियस्वरूपसम्बन्धो भवति, अन्यथा तु चरणसम्बन्धमात्रम् । अतस्तद्विरहे सापि विरहिता पूर्वं स्थिता । ततः प्रादुर्भावे जाते ता इव सापि हसन्ती जाता । यद्यपि भूमेश्चरणकमलस्पर्शादज्ञानसम्भवेन विरहाभावात् पूर्वं खेदोऽसंभावितः, तथापि पूर्णस्वरूपसम्बन्धाभावलक्षणो विरहोऽस्तीति तथोक्तम् । यद्वा । स्मयमानमुखः अम्बुजो यमुनानिलो यस्मादिति । विप्रयोगे रतिश्रमाभावेन स्वस्यानुपयोगित्वादधिकखेदहेतुत्वाच्च स पूर्वं खिन्नः, तदानीं तथा जात इति भावः । यद्वा । स्मयमानमुखाः फुल्लकुसुमाः अम्बुजाः सरसवृन्दावनभूमेर्जाता वृक्षलतादयो यस्मादिति । पूर्वं स्वतले क्रीडाभावात् मालाकेशपाशाद्यर्थमनङ्गीकाराच्च खिन्नाः, तदानीं तथा जाता इति भावः । यद्वा । स्मयमानमुखानि विकसितानि अम्बुजानि कुमुदानि कमलानि च

यस्मादिति । पूर्वं शयनाद्यर्थमनङ्गीकाराच्चेदानीं तथेति भावः । यद्वा । स्मयमानमुख-प्रकाशविशेषवान् अम्बुजः चन्द्रः यस्मादिति । स हि भगवतः तत्प्रियाणां च रसोद्दीपना-र्थमाविर्भूतः, तेन तद्विरहे रससम्बन्धि सर्वमसमञ्जसं वीक्ष्य पूर्वमतथाभूतः, तदानीं तथा जात इति भावः । यद्वा । स्मयमानमुखाम्बुजाः भ्रमराः यस्मादिति । प्रभोः श्रीमुखमेव अम्बुजं रसात्मकं येषां ते तथा । अर्थात्तद्रसैकपातारः । तथा च 'एतेऽलिनस्तव यशोऽ-खिललोकतीर्थं गायन्त आदिपुरुषानुपदं भजन्ते' इति प्रभुवाक्यान्निरन्तरं तत्सङ्गता एव ते तिष्ठन्तीति तद्विरहेण पूर्वमतथाभूताः, तदानीं तथा जाता इति युक्तमेवेति भावः । एवमु-क्तरीत्या भगवद्विरहे यत्र रससम्बन्धिनामप्यन्यादृशत्वं जातम्, तत्र साक्षाद्रसानुभवकर्त्रीणां श्रीमद्व्रजरत्नश्रेयसीनां यद्यज्जातं तत्तत् किमाश्चर्यमिति तात्पर्यसमुदायेन सूचितम् ।

ननु तदनन्तरं तेनैव वेशेन स्थितः, स्ववेशेन वेत्याशङ्क्याह पीताम्बरधर इति । स्त्रीवेशसमये त्यक्तस्य पुनर्ग्रहणं धरपदेनोक्तम् । अन्यथा बहुव्रीहिणा तावानर्थः सिद्ध एवेति धरपदं न वदेत् । यद्वा । उक्तवेशसमये पीताम्बरं किं कृतमित्याशङ्क्य क्वचिदेकान्ते निकुञ्जे वृक्षक्रोडे वा धृतवानित्याशयेनाह पीताम्बरधर इति । यद्वा । भवतीनां परि-रम्भसम्भ्रमसमारम्भशोभितमिदं वक्षोऽन्या मा द्राक्षीदपीति तद्गोपनायेव तथा । यद्वा । पीताम्बरस्य स्वरूपावरकत्वेन मायारूपत्वात् तस्य च बहिर्धारणोक्त्या अन्तःकापट्या-भावो ध्वनितः । प्रश्नोत्तरपर्यन्तं तासामन्तस्तदस्तीति च । अन्यथाग्रे 'भजतोऽनुभज-न्त्येक' इत्यादि प्रश्नं न कुर्युः । स्वस्य च तदभावं प्रश्नोत्तरे स्वयमेव वक्ष्यति 'न पारयेऽह'मिति-वाक्येन । अन्यथा भवतीभिरभिमानः कृतः, मयापि कृत इति स्फुटमेव वदेत् । 'ये यथा मां प्रपद्यन्ते' इतीश्वरस्वभावात्, न तु स्वस्य ऋणित्वमङ्गीकुर्यात् । अनियम्यत्वात् । तथा सति भगवतः तासु निरुपधि प्रेम । तस्य चैकरसत्वम् । न तु ईश्वरत्वात् कापट्यसम्भावनापीति ज्ञापितम् । वस्तुतस्तु तासामपि नान्तस्तत्सम्भावना, अग्रिमरसोपयोगिमानांशस्य स्थापितत्वात् प्रश्नकरणम् । अत एव 'ईषत्कुपिता' इति वक्ष्यते । कोपः स्वाभाविकः, न तु प्रियकारितः । तथा चेत्, कोपिता इति वदेत् । परमीश्वरे कापट्यं सम्भवतीति पीताम्बरस्य बहिर्धारणेन तदभाव उक्तः । ननूक्तवेशग्रहणमपि तदानीमेवेति ज्ञायते, अन्यथा 'रेमे तया चात्म-रत' इति पूर्वोक्तमन्यया सह रमणमनुपपन्नं स्यात् । अथ कथं न कापट्यमिति चेत् ? सत्यम् । अग्रे प्रत्येकमाविर्भावस्य वक्ष्यमाणत्वादेकेन रूपेणास्मत्स्वामिन्या सह रमणं कुर्वन्, इतरेण तथावेशं कृत्वा तासु स्थित इति रूपद्वयोक्तेरनुपपन्नत्वात् 'रेमे तया च' इति चकारेण ताभिः सह उक्तवेशेन प्रकारान्तरीयरमणस्योक्तत्वाच्च न त्वदुक्तदूषणमिति सर्वमवदातम् । यद्वा । पीतं ताभिर्ग्रस्तं, तदेकव्याप्तमिति यावत् । तादृशमम्बरं हृदयाव-च्छिन्नमाकाशं धरतीति तथा । परमब्रह्मण एकरसत्वेन धर्मधर्मिणोरभेदात् स्वरूपमिव हृदयमपि व्यापकमिति वक्तुमम्बरपदोपादानम् । अन्यथा एकविषये लग्नं विषयान्तरे न गच्छतीति मनसोऽनेकनायिकाव्याप्यता न स्यात् । तदपि तासां स्वविरहजक्लेशदर्शने

यथाकथञ्चित् पुनः सञ्जिगमिषया धृतं तिष्ठतीति धरणोक्त्या व्यज्यते । ननु भगवानच्युतत्वात् स्त्रीरहितः कदाचिदपि न तिष्ठतीत्यनुभवन्तीनां तासां मनसि लक्ष्म्या अस्मन्मध्यपातिन्या वा कयाचित् सह स्थित इति वितर्कः कथं नाभूदित्याशङ्क्याह स्रग्वीति । कयाचित् सह स्थितौ तदङ्गसङ्गप्रतिबन्धकतया स्रगेव न तिष्ठति । स्थितापि विलक्षणा भवति । अतो न तथेति भावः । किञ्च । स्रजः कीर्तिरूपत्वेन तद्वत्तया गोपिकारमणसमये तदर्पितया स्रजा तत्सम्बन्धिनी कीर्तिर्भवति, न तु अन्यथापीति ज्ञापितम् । इतो हेतोरपि न तथा । अथ च । तासां विरहे स्वतापनिवृत्त्यर्थं तदर्पितामेव स्रजं हृदि यो बिभर्ति, स कथमन्यथा करोतीति भावः । अपि च । यथा स्वयंवरे वरतनुर्वरस्य कण्ठे स्रजमर्पयति, तथैता अपि प्रेमलक्षणां स्रजमर्पयामासुः । अतस्तद्वान् कथमन्यथा करोति । सापि न कण्ठमात्रे, किन्तु बहिरन्तश्चेति कण्ठपदानुक्तिः । तेन यथैकया वृतोन्ययापि व्रियते, तदा सापत्न्यमिव नात्र तदिति सूचितम् । यत्र निकटमागतानां विप्रपत्नीनामपि तदशक्यम्, तत्रान्यासां का वार्तेति भावः । ननु काममोहितः किं किं न कुर्यादित्याशङ्क्याह साक्षान्मन्मथमन्मथ इति । मन्मथो हि सर्वानेव मोहयति विषयद्वारा, न तु साक्षात् स्वयम्, अनङ्गत्वात् । भगवांस्तु प्रकटरसरूपत्वात् साक्षात् स्वयमेव तं मोहयति । कुतस्तरामस्य तत्कृतो मोह इति भावः । किञ्च । स्मितपीताम्बरयोः मोहकत्वेन तद्वत्त्वात् यथा यथा यद्यत् करोति, तथा तथा तत्तत् सर्वमुपपद्यत एव, ईश्वरत्वात् । अतो नानुपपन्नं किञ्चिदिति दिक् ।

ननु 'भगवानलौकिकरीत्या तासां मानापनोदनार्थं बहिस्तिरोभूय अन्तरे प्रकट' इति व्याख्यातमाचार्यचरणैः, अतस्तद्विरोध इवाभातीति चेत् । न । तात्पर्यानवबोधात् । तथाहि । बहिस्तिरोधानपक्षेपि बहिर्नास्तीति न वक्तुं शक्यम्, व्यापकत्वात् । तस्माद 'आकाशवदन्तरं बहिर्भूतेषु सन्त'मिति शुकोक्तिरपि । अतस्तासामदर्शनमेव तिरोधानम् । तच्च माययैव वेशान्तरेणापि सम्भवतीति नोक्तविप्रतिपत्तिः । अथ च फलप्रकरणे हि यथा पूर्वमलौकिकीषु रात्रिषु रमणमलौकिकरीत्या उक्तम्, तथाग्रे लौकिकीषु रात्रिषु रमणं लौकिकरीत्यापि 'एवं शशाङ्कांशुविराजिता निशा' इत्यत्र निरूपयिष्यते । तस्मादलौकिकीनां रात्रीणां तदाधिभौतिकलौकिकीषु रात्रिषु स्थापनात् लीलानित्यत्वाच्च युगपदुभयत्र लीला सम्भवतीत्येकदा प्रकारद्वयकथनमुक्तविरोधं नानुसरतीति सर्वमनवद्यम् ॥

प्रसीदतु मयि श्रीमत्कृष्णः प्राणप्रियोत्सवः ।
येन भाति जगत् सत्यं विना येन न तत् तथा ॥ १ ॥

इति श्रीमद्विठ्ठलेश्वरप्रभुकृतः तासामाविरभूदिति श्लोकोपरि लेखः सम्पूर्णः ॥

---

तासामाविरभूदित्यस्याभासे । ब्रह्मा विष्णुश्च रुद्रश्च भूत्वा पुनः कृष्ण एव

---

१. सरावेतु इति पाठः संदिग्धः ।

जात इत्यस्यां विवृतावयमाशय इति तत्कृपयैव प्रतिभाति । तथाहि । भगवतो रूपेपि त्रैविध्यमस्ति नामरूपरसभेदेन, तत्र नामात्मकं रूपं वेदात्मकं शब्दब्रह्म, रूपात्मकमवताररूपम्, रसात्मकं भावरूपम् । तेषु त्रिविधेष्वपि रूपेषु ब्रह्मणोनन्तमूर्तित्वादनन्तभेदवत्त्वम् । यथा विश्वात्मकस्य वैकुण्ठवासिनोवतरणेऽवतारभेदेनानन्तमूर्तित्वम्, तथैकस्य वेदस्यानन्तशाखाभेदेनानन्तमूर्तित्वं मूलसाम्यं च । प्रकारभेदेपि वेदत्वात् । यथा वा रूपात्मकमवतारसाम्यं च तथा स्थायिभावात्मकस्यापि भगवतो भक्तहृदयगतभावभेदेनानन्दमूर्तित्वं भगवतो न साम्यं च ? । प्रकारमात्रं परं भेदः, यथावताररूपेषु मत्स्यत्वादिप्रकारः । एवं सति स्वामिनीषु ये भावास्तद्रूपेण रसात्मको भगवानेवेति स्वयं मानभावेनाविर्भवन् ब्रह्मा जातः । ततो निजरक्षार्थं गुणगानहेतुभूतभावेनाविर्भवन् विष्णुः । तदा रोदनात्मकः सन् सर्वनिरासकत्वेन प्रलयकर्ता रुद्रो जातः । तदनन्तरं परमदैन्येन सन्तुष्टः स्वसत्तां स्वानन्दं च भक्तेषु प्रकटीकृत्य सदानन्दः कृष्ण एव जात इत्यर्थः । अत्रायमभिसन्धिः । सत्ता द्विविधा, जीवसत्ता भगवत्सत्ता वा । तत्र जीवसत्ता परिच्छिन्ना, अपरिच्छिन्ना तु सा भगवतः । अत एव जीव एकत्र विद्यमाना तत्र सत्येव परत्र नेति निगद्यते । भगवांस्तु न तथा । एवं सति पूर्वं तेषु स्वसत्तैव स्थिता, न प्रभौ, अत एव भगवत इव तासां न सर्वमाविर्भावादौ सामर्थ्यम्, इदानीं तस्याप्यतिदुःखेन तिरोधानाद्भगवानेव सरसो यशस्वी कृपयाविर्भूय स्वसत्तां स्वानन्दं चैतेषु स्थापितवानिति सदानन्दप्रकटनेन कृष्ण एव जात इति । एवकारेणैतद्रूपप्राकट्ये पूर्वरूपाणां ब्रह्मादीनां तिरोधानं गम्यते, मानभावादीनां तिरोधानादित्युक्तम् । तथाचैतासामतः परं भगवद्रूपमानन्दमात्रत्वं सर्वत्र विद्यमानत्वं भक्त्याविर्भाव्यत्वं सदातत्सहितत्वं च मन्तव्यम् । अत एव व्याकृतावस्मत्सदाचार्यैरुक्तम्, 'तासां मध्य एव भगवानाविर्भूत' इति । तदर्थस्तु यथा काष्ठान्तर्गतोग्निः स्वाच्छादकं दूरीकृत्य प्रकटो भवति, काष्ठं च स्वस्वरूपभूतं करोति, तदाकारत्वं यथास्थितं स्थापयति, तथा भगवानप्येतदन्तः स्थितः कृपया स्वाधारकमायाजवनिकां दूरीकृत्य तासु स्वयमेव प्रकटः शरीरेन्द्रियादिकं तासामेवेति । एतेनातः परमाविर्भूतभगवत्स्वरूपात्मिका एता इति निरूपिताः । अत एवैतन्मात्रसेवया भगवत्सेवा कृता भवति । एवमेव असदा-(चा)र्येषु तदात्मजेष्वपि बोद्धव्यम् । आगमनं तु पूर्वरूपेण येन रमारमणम्, आविर्भावस्त्वेतद्भावस्य तदुत्तरं तद्रूपमधिष्ठानं प्राप्य पुनर्मिश्ररूपत्वसिद्ध्या तथा रमणम्, पश्चात् भ्रमरगीतप्रसङ्गे केवलस्थितिरितिदिक् ।

इतिश्रीस्वाचार्योदितो दीनदीनेन हृद्गतः ।
भावः प्रकाशितस्तेन सन्तु ते प्रियवत्सलाः ॥ १ ॥ १०–२९–२.

---

श्रीहरिः । ताभिर्विधूतशोकाभिरित्यत्र । अन्यथा स्वार्थमेव तिरोधानं स्यादिति । अयमाशयः । अत्र हि स्वामिनीनामप्राकृतत्वं निरूप्यते, भगवति तत्सम्बन्धज-

प्राकृतत्वशङ्कापरिहाराय तत्सम्बन्धयोग्यत्वाय च। तच्चाप्राकृतत्वं ब्रह्मभूतत्व एव सम्भवति। तच्च पुनः शोकाद्यभावेन तल्लक्षणभूतेन ज्ञेयम्। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षती'ति वाक्यात्। एवं सति स्वामिनीनां सांसारिकशोकस्यासम्भवेन प्रभुरेव तदर्थं तिरोभूय दर्शनमदत्वा स्वविरहे शोकमुत्पाद्य पश्चात् प्रादुर्भूय तन्निवार्य विधूतशोकत्वेन ब्रह्मभूततया तासामप्राकृतत्वं ज्ञापितवान्। अन्यथा साधारणजगति क्रीडार्थं स्वस्य तत्र प्रवेशरूपस्वतिरोधानवदत्रापि कृतं तदिति स्यात्। तथाचेतरसाधारण्येन प्रत्युत प्राकृतत्वमेव स्वामिनीषु स्यादिति न पूर्वोक्तशङ्कोद्धारः। स्वार्थतिरोधानं तु 'स नैव व्यरम'दिति श्रुत्यैवोक्तमिति श्रुतिरुपन्यस्ता। प्रकृते तु तासामानन्ददानार्थमेव तत्र प्रवेशो न स्वक्रीडार्थम्। अत एव वृत इत्युक्तम्। नहि जगति प्रविष्टो बहिराविर्भूय तेन वृतो भवति, न वा तत्सम्बन्धेन स्वशोभां वा सर्वतोऽधिकां प्रकटयति। एवं सत्यत्र शोकनदभावयोर्विलक्षणत्वादत्राप्राकृतत्वबोधार्थमेव प्रभुणैवं कृतमित्यस्मदाचार्यचरणतात्पर्यमवगन्तव्यमव्यग्रैस्तदीयदासानुदासैरिति संक्षेपः।

---

श्रीहरिः। कुण्डलैर्गण्डलोलैरित्यत्र। गण्डे हीति। भगवन्मुखारविन्दे हि भक्तिरूपे द्विविधो रसः केवलः काममिश्रितश्च। तत्र गण्डे केवलः, कामोदयाभावेपि केवलसौन्दर्यदर्शनमात्रेण वक्त्रसंयोगेन पेयत्वात्। अत एव बाललीलादिष्वेतासां मात्रादीनामपि तथाकरणमुपपद्यते। तथा च प्रभोर्नृत्यसमये स्वामिनीकपोलयोः कुण्डलकान्तिप्रकाशितयोः सौन्दर्यविशेषाभिव्यक्त्या तथा कृतिर्भवतीति तदर्थमेव कुण्डलाभ्यां तत्स्थलप्रकाशनमिति भावः। कामलीलाया अग्रे वक्तव्यत्वादिदानीं न लोभस्वरसग्रहणमिति न तत्प्रकाशनम्। नृत्यमध्ये तथाकरणानुपपत्तेः। लोभात्मके हि कामसहितो भक्तिरसः, तदुदयेनैव तत्पानसम्भवात्। ननु स्वामिनीगण्डाह्लादिष्वेव प्रभोरपि तथाकृतिरस्त्विति कुण्डलप्रकाशोपि तत्रैवास्त्वामिति चेत्, तत्राहुः गण्ड एवेति। 'स्मितमुख' इत्यनेन अन्तर्गतस्य सर्वस्य स्मितरसस्य तत्रैव प्राकट्यनिरूपणेन पानसम्भवात्। एतस्य सम्यक्स्फुरणया तत्रैव यत आभिः प्राप्तिरिति पानार्थं तत्रैव प्रकाशनमित्यर्थः। पद्म। पेयो यत्र स्नेहरसः, तस्य तत्रैव सुगमतः, हृदयादुत्पन्नस्य मुख एव पर्यवसानम्, स्नेहमात्राभिनिविष्टानां मुखदर्शनमात्रेणैव सकलमनोरथपूर्तेः। तथा च कामोदयहेतुभूतनृत्ये पूर्वं तदनुदयात् स्नेहमात्रस्थैव तत्रैव तद्रसपानमिति तदानीं कुण्डलाभ्यामपि गण्डदेशे तत्कान्तिप्रकाशनमिति मुख्यमाचार्यैर्गण्ड एवेत्यादीनि सर्वमनवद्यम्। १०-३०-८.

---

'सा च मेने तदात्मान'मित्यादौ मूले । ननु तस्याः सदोषत्वेपि तद्भावसजातीयत्वेन ततो भिन्नत्रिविधगोपिकाकल्पने किं मानमिति चेत् । उच्यते । 'स्वयं त्वयुक्तकरणात् प्रकृत्याद्यधिकारिणः । बुद्धिं स्म नाशयामासुः साप्यन्येवाभवत्तत' इति सुबोधिनीस्थानत्यकारिकैव मानमस्त्येव । अत्र अन्येवेति दृष्टान्तेन पूर्वोक्तगोपिकाया यावन्तो भावभेदाः, तेऽत्राप्यभिप्रेता इति तस्याः स्वसहिताश्चत्वारो भेदा इति ज्ञेयम् । एवं सति सगुणनिर्गुणभेदेन षोडश भवन्ति । तदेतदुक्तं षोडशगोपिकानामिति । एवं भगवत्यपि अष्टसङ्ख्यातात्पर्यं सुबोधिनीतोऽवगन्तव्यम् । तथाहि । 'इति विक्लवितं तासा'मित्यत्र 'षड्गुणैश्वर्यभावेन षोढा रेमे हरिः स्वयम् । स्वरूपेणापि शृङ्गारो द्विविधोपि निरूपित' इत्यत्राष्टविधत्वं भगवति साधितम् । तथा च षोडशगोपिकानामष्ट कृष्णा भवन्तीति सूपपन्नम् । ननु गोपिकागीते प्रत्येकसमुदायाभ्यामेकोनविंशतिभेदाः सिद्धा इति कथमत्र षोडशविधत्वमिति चेत् । मैवम् । गोपिकागीते हि तासां प्रकारत्रयेणैकोनविंशतिभेदाः सन्ति । तत्र प्रथमं सगुणा नव अन्यपूर्वाः । सगुणा नव अनन्यपूर्वाः । एतद्द्वयोः समुदायश्चेत्येकोनविंशतिः । तदेवोक्तं 'श्रीकृष्णगोपिकास्तत्र द्विविधा नवधा गुणैः । समुदायेन भिन्ना वा गतगर्वा असाधना' इत्यनेन । द्वितीयपक्षे सगुणनिर्गुणभेदेनैकोनविंशतिः । तदपि 'एकोनविंशतिविधा गोप्य' इत्यारभ्य, 'नास्तीत्येकोनविंशति'रित्यन्तेनोक्तम् । तृतीयपक्षे 'अथवा प्रार्थनाद्या याः सप्तान्ते द्विविधा पुनः । चतुर्थ्यस्तु समास्तत्र तत एकोनविंशति'रित्यनेनोक्तम् । अत्रापि परस्परं विरोधमाशङ्क्य परिहरन्ति 'तत्तद्वाक्यानुसारेण तासां भावो निरूप्यते । अन्यथानेकता स्तोत्रे प्रकारैर्नोपयुज्यते' इति । तथा च यथा भावानामत्र व्यभिचारित्वादनेकधात्वमिति न परस्परं विरोधः, तथा क्रीडायां भावानां स्थायित्वात् षोडशत्वमेवेति भावः । न च रसशास्त्रे व्यभिचारिभावाः स्थायिभावाश्चैकैकस्या एव पर्यायेण भवन्ति, अत्र त्वनेकनिष्ठत्वात् कथं तद्दृष्टान्तेनाविरोध इति शङ्क्यम् । तत्र तथा नियमाभावात् । तत्तद्भावविशिष्टनानोदाहरणानामुक्तत्वाच्च । किंच । श्रीभागवतोक्तलीलानामत्यलौकिकत्वात् तत्प्रकारबोधनं सङ्क्षेपेणोच्यते, नतु सामस्त्येनेति न तद्विरोध इत्यर्थः । इदमेवोक्तं 'इति गोप्यः प्रगायन्त्यः प्रलपन्त्यश्च चित्रधा' इति मूले, सुबोधिन्यां च 'अस्माभिरेकः प्रकार उक्तः, तास्तु चित्रधा विलापयुक्ता जाता' इति । एवं संयोगरसेपि 'एवं शशाङ्कांशुविराजिता निशा' इति मूले, सुबोधिन्यां च 'शशाङ्कांशुमिश्चन्द्रकिरणैर्लौकिकैः याः विराजिताः निशाः ताः एवं रेमे । पूर्वोक्तप्रकारस्तु सर्वदा लीलारूपः, स केनापि न विरुध्यते' इति । तथा चैकैकस्या एकैकभावनिरूपणं श्रीभागवते इति न रसशास्त्रविरोध इत्यर्थः ।

न च 'काचित् कराम्बुजं शौरे'रित्यत्र पूर्वमनेकविधा अपि भगवत्प्रादुर्भूते सप्तधा एव जाता इति सप्तविधात्वमेव क्रीडायामप्यङ्गीकार्यमिति वाच्यम् । तासां तदानीं भगवदावेशेन भगवद्रूपत्वबोधनार्थं सप्तधात्वस्य विवक्षितत्वात् । अत एवात्र हेतुः सुबो-

धिन्यामुक्तः 'एको भगवान् सर्वार्थे प्रकटीभूत'इति । भगवदावेशोपि क्रीडायोग्यत्वार्थमावश्यकः । तदुक्तं 'प्रदीपवदावेशस्तथा हि दर्शयती'ति सूत्रभाष्ये इति ततोऽवधेयम् । आनन्दमयाधिकरणेपि द्वितीयवर्णके 'अथेदं विचार्यत' इत्यारभ्य, 'उक्तप्रकारकप्रवेशाश्रयाणामपि तत्तदात्मकत्वमित्युच्यत'इत्यन्तेनोक्तः । तथा चायं प्रवेशः प्रतिगोपिकां ज्ञेयः । तत्रापि ऐश्वर्यादिधर्मप्राधान्येन प्रवेशः, स्वरूपेण च । तथा च भगवतः सप्तविधत्वात् तासामपि सप्तविधत्वम् । अत एव ( गोप्यः ) स्त्रियोप्यनुकृत्यधिकरणन्यायेन सप्तविधा एव । तदेवोक्तं 'स्त्रीरत्नै'रित्यत्र, 'स्वभावतः स्त्रियस्त्रिविधाः लोकभेदेन । तत्रापि मानुषीषु जातिभेदाश्चत्वारः पद्मिन्यादय इति । तासामपि प्रत्येकं वासनाभेदाश्चतुर्दश अश्वप्रकृत्यादयः । ते च रसशास्त्रेभ्योवगन्तव्याः ।' एतासां सर्वासामपि भगवद्भोग्यत्वमस्त्येव । उक्तं च भ्रमरगीते ताभिरेव, 'दिवि भुवि च रसायां काः स्त्रिय' इत्यनेन । एतत्सुबोधिन्यां च व्याख्यातम् । इदं प्रसिद्धिमादाय व्याख्यातम् । एतन्मूलमप्यनुकृत्यधिकरणन्यायेन वाच्यमिति न प्रत्यवस्थातव्यम् । तथाच 'भोगमात्रसाम्यलिङ्गाच्चे'ति सूत्रभाष्योक्तप्रकारेण भगवत्साम्येन सप्तानां तासां मर्यादापुष्टिभेदेन भगवत इव वासनाभेदेन चतुर्दशानामपि भावा भिन्ना एव वाच्याः । ते च सगुणनिर्गुणदृष्टान्तेन षोडश इति तत्तद्भावविशिष्टाः षोडश गोपिका भवन्तीत्युक्तं षोडश गोपिकानामिति । ननु भगवतो गुणैः स्वरूपेण च सप्तविधत्वमुक्तमित्यत्राष्टविधत्वं कथमिति चेत्, मैवम् । पूर्वं 'स्वरूपेणापि शृङ्गारो द्विविधोपि निरूपित'इत्युक्तत्वात् । ननु तत्र विप्रयोगसम्बन्धितत्स्वरूपेण सहाष्टविधत्वम्, अत्र तु संयोग इति कथं तत्स्वरूपमत्रेति चेत् । मैवम् । अत्रापि स्वसन्मुखस्थितगोपिकाकण्ठालिङ्गितभगवत्स्वरूपादर्शनेनोभयरसस्यानुभवात् । एवं च सति नित्यलीलात्वमुभयलीलाया अपि सिध्यतीति विवक्षितत्वात् । इदमेव 'स एकधा भवति, त्रिधा भवति, पञ्चधे'ति श्रुतितात्पर्यं भाष्ये सिद्धम् । नन्वभेदवादानुरोधादेकस्य भगवत एतावत्त्वं वक्तव्यम्, तत्तु दृष्टान्ताभावात् कथमङ्गीकार्यमिति चेत् । उच्यते । गुणसाम्यावस्थायाः प्रकृतेर्गुणकार्याभावात् निर्गुणत्वम्, पुनस्तस्या एव गुणवैषम्ये सगुणत्वं त्रित्वं च, तेषां परस्परं मिश्रितत्वे नवविधत्वम्, तेषां केवलत्वे तत्तन्निर्गुणत्वं गुणसाम्यदशायामपि प्रकृतेः स्वभावतस्तादृशकार्यकर्तृत्वं च भगवच्छक्तित्वादङ्गीकार्यमेव । तस्याश्च भगवत्सम्बन्धिसच्चिदानन्दमलरूपत्वाङ्गीकारस्य द्वितीयसुबोधिन्यां सिद्धत्वात् । तेषां सच्चिदानन्दानां यथा प्रत्येकसमुदायाभ्यां चतूरूपत्वम्, तेषां चाधिभौतिकाध्यात्मिकाधिदैविकमूलभेदेन प्रत्येकमक्षर(अक्षर-काल-कर्म-स्वभाव-)वत् चतूरूपत्वात् षोडशत्वम्, एवं तन्मूलभूतायाः प्रकृतेः षोडशत्वमिति दृष्टान्तसद्भावात् पूर्वोक्तं सुस्थमेव ।

न चात्र काचन कल्पना संभवति । नृसिंहोत्तरतापनीयश्रुतावोङ्कारमुपक्रम्य, तस्य पादचतुष्टयमुक्त्वा, तेषां प्रत्येकसमुदायाभ्यां भेदचतुष्टयमुक्त्वा, आनन्दामृतरूपं प्रणवं षोडशान्ते इतिवदत्रापि षोडशत्वं श्रुतिसिद्धमेव । प्रकृतेरप्येतन्मूलत्वबोधनमत्रैवाग्रे श्रुतौ

'नह्यस्ति द्वैतसिद्धिः, आत्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव, स वा एष आत्मा पर एवैपैव सर्व'मित्युपक्रम्य, 'तस्मादात्मन एव त्रैविध्यं सर्वत्रे'त्यन्तेन तथात्वं बोधितमित्येतत् सर्वमस्मद्गुरुचरणकृतशिवतत्त्वविवेकदूषणे प्रहस्ताख्ये ग्रन्थे द्रष्टव्यमित्यलं प्रसङ्गानुप्रसक्त्या।

एवं चैतासां भगवतश्चाभेदोपि तादात्म्यरूपः सिध्यति। अत एव श्रुतावपि 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभु'रित्युक्तम्। भ्रमरगीतेपि 'भवतीनां वियोगो मे नहि सर्वात्मना क्वचित्। आत्मत्वाद्भक्तवश्यत्वात् सत्यवाक्त्वात् स्वभावत'इति भगवद्वाक्ये तादात्म्यबोधकमात्मत्वादिहेतुचतुष्टयमुक्तम्। एवं 'कृत्वा तावन्तमात्मान'मित्यत्र समसङ्ख्यायामपि 'आनन्दामृतरूपं प्रणवं पोडशान्ते'इत्यत्र प्रणवस्येव भगवतः पोडशत्वं ज्ञेयम्। विप्रयोगे संयोगे च 'स एकधा भवति त्रिधा भवति पञ्चधे'ति श्रुत्युक्तरीत्या भक्तानां भगवतश्चानेकरूपत्वेन तेषां चाभेदेन रससम्भवात् न मत्यवस्थातव्यमिति। एतासां पोडशसहस्रसङ्ख्यापि, रसशास्त्रे उत्तमस्त्रीणां सहस्रं भेदाः सन्तीत्यत्रापि प्रत्येकं पोडशविधानां सहस्रभेदवत्त्वात् पोडशसहस्रत्वमपि रसार्थमेवेति तासां सजातीयानां मण्डलानीति ज्ञेयम्।

इति श्रीपुरुषोत्तमजीचरणान्तेवासितुलजारामकृतं रासमण्डलस्थितपोडशगोपिकासंख्यातात्पर्यवर्णनम्।

---

श्रीहरिः। अतः परं राधादामोदरवदित्यत्र। इदं विचार्यते। अग्रे 'एवं परिष्वङ्गे'त्यादिना समुदायरमणं निरूप्य 'कृत्वा तावन्त'मित्यनेन प्रत्येकरमणं निरूप्यते। तच्च तादृक्प्रकारेण रसोद्बोधे भवति। तत्र रसोद्बोधकं तु नृत्यमेव। तदपि प्रत्येकमपेक्षितम्, अन्यथा प्रत्येकरमणोपयोगिप्रत्येकरसानुद्बोधे तन्न स्यात्। अतोत्र प्रत्येकनृत्यं निरूप्यते। नृत्ये हि केवलभावात्मकोभिनीयमानो रसो, रमणे तु क्रियया सर्वेन्द्रियैरनुभूयमानः। अत एव 'यं मन्येर'न्नित्युक्तम्। तथा च 'पादन्यासै'रित्यनेन स्वामिनीनां गाढनृत्यमुक्तम्, यत्रान्यस्फूर्त्यभावः, तदुत्तरं भगवत्स्फूर्तिसहितं मध्यनृत्यमुक्तम्। तत्र नटानां सामाजिकसन्तोषोत्पादनवद्भगवत्सन्तोषो(र्यो)त्पादनं तत्र प्रयोजनम्, स्वविषयकभावोत्पादनार्थं तथाभावेन प्रत्येक गानं च। ततः 'काचि'दिति पङ्क्तिर्भगवद्गुणैर्भगवद्धर्मावेशेन गानादिकमुक्तम्। ततः सर्वासां गानरसावेशेन शास्त्रमर्यादापूर्वकनृत्यपरित्यागेन भावेनैव विहारो मुख्यलीलाभिनयनरूपः, तदुत्तरं तत्परित्यागेन भावेनैव केवलं स्वरूपं परिगृह्य युग्मनृत्यं प्रत्येकरसोद्बोधाय, तत् 'कर्णोत्पले'त्यादिना निरूप्यते। तत्रायं प्रकारः। यस्य भगवतः स्वनिकटवर्तित्वेन माननम्, तस्याधुना स्वसम्बन्धित्वेन, तथाच राधादामोदरौ यथा सर्वथैकीभूतावालम्बनद्वयरूपत्वेनैकरसात्मकत्वात्, तथा स्वामिन्यः सर्वा अपि भावेन भगवतैकीभूताः सत्यो नृत्यं चक्रुः। तच्च नृत्यं यथा लोके मण्डलनृत्ये हस्तं विहायालिङ्गिताः प्रत्येकं नृत्यन्ति, तथैव मण्डलमनुवर्तयन्ति हस्तैरसम्बद्धाः, तथा स्वामिन्योपि भावेन हस्तपरित्यागेन भगवन्तमालिङ्ग्य नृत्यन्तीति तथाभूतम्। तया च हस्तपरित्यागेन मुख्य-

मुख्यमण्डलाभावेपि मण्डलानुवर्तनाद्रासगोष्ठ्येवेति गोष्ठीमात्रमुक्तमित्युक्तमाचार्यैः । गोष्ठी हि यथानृत्यार्थमेकीभूतानां नृत्यारम्भात्पूर्वं भवति, तथात्रापि पूर्वनृत्यपरित्यागाद्भगवता सम्बद्धानां भावनया लीलानुकरणे नर्तनान्नृत्यगोष्ठ्येव । एवं सत्यत्र गाढनृत्ये स्वामिनीनां भगवतश्च विनियोगा'न्नृत्यन्त्य उच्चैर्जगुः' 'नृत्यती गायती'त्यत्रैव गानसम्भवो, न वा 'समं मुकुन्देने'त्यत्रेव भगवतोपि । गन्धर्वपतीनां तु मुख्यलीलानुकरणनृत्यस्यायोग्यतया दर्शनाभावादेव न तदुपयोगिगानम्, किन्तु स्वामिनीकेशपाशस्थितस्रग्विस्रंसने तत उद्गानस्य भ्रमरस्येव गानं गुञ्जारवरूपम् । एकवचनं तु सर्वैरेकरूपतया गानसूचकम् । अथवा । प्रत्येकनृत्ये प्रत्येकमेकैकस्य तस्य गानसूचकम् । इदं च गाढनृत्यमिति तत्र 'कर्णयोरुत्पलस्थापने तदपातनमशक्यमिति तत्कर्तृत्वार्थं 'कर्णोत्पले'त्याद्युक्तम् । मुखसरसिजसम्बन्धिमकरन्दसदृशस्वेदकणिकाशोभोक्तिरपि श्रमाभावसूचिका, अत एव 'कृष्णाभिमर्शमुदिता' इत्यत्र श्रीहस्तमात्रसम्बन्धेन श्रमाभावे सम्पूर्णस्वरूपसम्बन्धे क तत्सम्भावनेति कैमुतिकन्यायबोधनाय । तथाचैवं नृत्येन प्रत्येकरसोद्बोधे प्रत्येकरमणमग्रे निःप्रत्यूहमुपपद्यते, अन्यथा समुदायनृत्येन समुदायरसोद्बोधे तथा रमणमेव स्यात् । तत्प्रकारकरमणे तथा रसोद्बोधस्य कारणत्वं निरूपितमिति सर्वप्रकारकरमणमग्रे सकारणं सेत्स्यतीति तदर्थमेतन्नृत्यं भिन्नप्रकारेण निरूपितमिति तत्स्वरूपमस्मदाचार्यैरतिगूढतया 'अतः परं राधादामोदरव'दित्यनेन दृष्टान्तेनोक्तमिति दिक् ॥ १०-३०-१६.

---

भ्रमरगायकरासगोष्ठ्यामित्यत्र । अथवा । गायकास्तु भ्रमरा निरूपिताः, ते च मकरन्दार्थिनः, स च पुष्पेष्वेव तिष्ठति, तानि च वियुक्तानि तद्रहितानि भवन्तीति स्वनृत्यानुरूपगानकरणादतिप्रसन्नास्तेभ्यः स्रज एव दत्तवत्यः । अन्यथा रसार्थं स्वकेशेषु शोभाहेतुत्वेन धृतानां तासामुपेक्षा न भवेत् । तेन भ्रमराणां गाननैपुण्यं प्रभुप्रियाणां च तदभिज्ञत्वं च ध्वन्यते । भ्रमराश्च भ्रमर्यश्चेत्येकशेषः । तेन स्त्रीपुरुषभेदात् ज्ञाने द्वैविध्यमुक्तं भवति । किञ्च, तत्र शोभार्थमर्पिताः स्रजोपि वैचित्र्यहेतुभूता बहवः सन्ति, तन्मध्यस्थैकैका स्रगेताभिस्तेभ्यो दत्ताः । तथा सत्यग्रिमरसार्थं तत्र शोभासम्पत्तिरपीति ज्ञापयितुं केशपाशपदं विहाय केशपदोक्तिः । न चाल्पदानेनौदार्यगुणहानिः । अलीनां भक्तत्वेन प्रभुरसोपयोगिवस्तुनोऽजमिलषितत्वात् स्वकृतगानजनिततोषख्यापकैकस्रग्दाने शोभाप्रतिबन्धाभावेन तत्प्रसादत्वेन च तद्ग्रहणस्योचितत्वात् तावतैव मनोरथपूर्तेः । न च गानप्रतिपन्थकत्वेन स्रजामनुपयोगात् किं तद्दानेनेति वाच्यम् । रासगोष्ठीतो यत्र गानानवसरे तेषां भक्तत्वेन पुष्पान्तरापेक्षया प्रभुप्रभुक्तस्वगुणलब्धस्रजामेवोपजीवनं युक्तमित्युपपत्तेः । न च प्रभुप्रभुक्तत्वज्ञानं तेषामत्र कथमिति शङ्कनीयम् । यत्र यत्र व्रजकनकलताधरपिपासुप्रियनमकरन्दहीनाकृष्णा केशपाशेषु स्रजां त्रुटिः, ततस्ततः स्रंसनमपीति तेषामनुग्रहणे तयोपष्टम्भात् । अतोपि तदुपभुक्तरजः सम्बन्धित्वमेव तेषा'मङ्गसङ्गघृष्टरजः स्वकुचकुङ्कुमरञ्जितायाः गन्धर्वपालिभि'रित्यत्र प्रकाशयिष्यते । अन्यथा तत्र स्रजो विशेषणद्वयानुपपत्तेः । एतासां

सर्वस्रजां दानेऽभिप्रेतेऽपि हस्तयोर्मण्डलव्यापृतत्वेन ताभ्यां दानमशक्यम् । अत उक्तप्रकारककेशशैथिल्ये जाते यासां स्रजां स्रंसनमभूत्, ता एवोपेक्षाकरणात् दत्ताः, शेषाणामतथात्वात् क्षितिरिति हेतोर्न तदौदार्यहानिप्रसङ्गः । किञ्च, रासगोष्ठी नृत्यसमाजः, तत्र चावश्यं गायकापेक्षा, गायकत्वं च नृत्यकर्तृत्वात् तासामनुपपन्नम् । देवानामन्येषां पुरुषाणां स्त्रीणां च तत्र प्रवेशानधिकारादेव तत्तथा । भ्रमराणां पुरुषत्वेऽपि बलवत्प्रयोजनानुरोधात् विजातीयत्वाच्च विरोधाभावात् तथात्वमुपपद्यते । अत एव रासगोष्ठीपदम् । अतिरहस्यलीलान्तरे तु तेषामपि प्रयोजनाभावादप्रवेशोऽनुक्तसिद्ध एव । वस्तुतस्तु रासे भगवता समं मण्डलाकारेण परितो भ्रमन्तीनां तासां नृत्यमुच्यते । तथा सति नृत्योपयोगिगायकत्वं तत्सङ्गे परिभ्रमतामेव वाच्यम् । अन्येषां स्वल्पचलनेऽपि गानं न सम्भवति परिभ्रमतामेव, स्वरतानतालादिभङ्गप्रसङ्गात् । भ्रमराणां तु तथास्वभाववत्त्वे विशेषतस्तदानीमेव गायकत्वं युक्तमिति भ्रमरपदोक्त्या व्यज्यते । तेषां तद्रससमाजानुकूलभाववत्त्वाय 'भ्रमरगायकरासगोष्ठ्या'मिति समस्तं पदमुक्तम् । अत एव पुरुषत्वेपि तेषामत्यन्तरङ्गत्वेन निरन्तरं स्वसान्निध्यं प्रभुरप्याह । 'प्रायो अमी मुनिगणा भवदीयमुख्या गूढं वनेपि न जहत्यनघात्मदैव'मिति किमतोऽधिकविस्तरेण । १०–३०–१६.

---

एवं शशाङ्कांशुविराजिता निशा इत्यत्र । ता एवं रेम इति । लौकिकीर्निशा एवं कामलीलया चन्द्रप्रवेशेन क्रीडया तदंशनिवर्तनप्रकारेण रेम इत्यर्थः । पूर्वोक्तप्रकारस्त्विति । नृत्यादिना केवलरसात्मकगूढभावप्रकटीकरणेन । भावात्मकरमणं तु केनापि गृहगमनादिनापि न विरुध्यते । सर्वदा हृदि गृहे परोक्षेपि तदनुभवात् । नाट्ये हि रसोदयभावेनैव सर्वानुभवसम्पत्तेः । अत एव 'आन्तरं तु महाफल'मित्यस्य टिप्पण्यां 'येऽन्तर्भावविशेषा उत्पद्यन्ते, न ते समागमेपी'त्युक्तं प्रभुचरणैः । एवं रमण इति । नित्यलीलाश्रयभूतासु स्वामिनीषु कामलीलया रमण इत्यर्थः । स सत्यकाम इति । सत्यः कामो यासां यस्य वेति बहुव्रीहिसमासेन तासु भगवति च सत्यकामत्वेन तथा रमणेपि नित्यलीलात्वाक्षतेः । एषापि लीला भगवतो नित्यैव । परमियान् विशेषो यदत्र बहिःप्राकट्यपूर्वकतादृक्क्रियाभिव्यञ्जकत्वम्, तत्र भावमात्राभिव्यञ्जकत्वमिति । कामलीलया रमणहेतुं प्रकारान्तरेणोपपादयन्ति स तथा प्रार्थितो चेति । 'पतिं मे कुरु' इत्यादिना कामलीलानुभवहेतुत्वेन प्रभुः पूर्वं ताभिः प्रार्थितः । 'कामिनीभावमासाद्ये'ति श्रुतिरूपाभिरपि । अत एवोक्तं 'लब्धकामाः कुमारिकाः ।' 'एवं भगवतः कृष्णाल्लब्धकामा' इत्यादि । तथा च तत्प्रार्थनमेव प्रभोः कामलीलाकरणे हेतुरिति भावः । एवमपि क्रीडायामिति । चन्द्रांशुनिवर्तनप्रकारेण क्रीडायामपीत्यर्थः । सत्य एवेति । निवृत्तानामपि चन्द्रांशानां भगवत्येव स्थितत्वादिति भावः । अत एवाग्रे वक्ष्यति 'आत्मन्यवरुद्धसौरत' इति । सत्यत्वमेवाहुः नतु क्षीणः, असद्विषयको वा जात इति । क्षये हि सत्यत्वं न सिध्यति,

संसारस्येव। प्रकृते तु कामस्य द्रवणे तदंशनिवर्तनेपि भगवत्येव स्थित्या न क्षीणत्वमित्यर्थः। यथैकस्मिन्नेव पात्रे स्थितस्य नवनीतस्य घर्मादिना द्रवीभूय तत्रैव स्थितौ न क्षीणत्वमुच्यते, तथात्रापीति भावः। नन्वत्र नैसर्गिकसुखाय सहस्त्वर्णं वाच्यम्, तथा सतीतरत्रैव तत्सम्बन्ध आवश्यक इति कथमक्षीणत्वं पूर्वोक्तरीत्या वाच्यमित्यरुच्या पक्षान्तरमाहुः असद्विषयको वा जात इति। स्वामिनीषु तत्प्रवेशेपि लौकिककाम इवायमसद्विषयको न जातः। तत्रापि भगवत्कामस्यैव सत्त्वात्। तत्र पूर्णे सद्विषयकत्वमेव तस्य। अत एवोक्तमाचार्यचरणैः 'तासां कामस्य सम्पूर्तिर्निष्कामेनेति तास्तथे'ति। प्रभुणाप्यभिहितं 'न मय्यावेशितधिया'मित्यादि। अत एव तथाकरणेपि न ततः पुत्राद्युत्पत्तिः। एतदेव पूर्वमुदितमाचार्यैः 'कामाभावेन पूर्णस्त्वि'त्यादिना।

अथ तासु लौकिककामसत्त्वेपि न क्षतिः। सर्वथा भगवत्परत्वेन तत्कामस्य दग्धबीजत्वादित्यभिप्रेत्याहुर्विशेषणार्थम्। अनुरता अबलागणा यस्येति। अत्र हि त्रयो गणाः, श्रुतिरूपाणामन्तर्गृहगतानां कुमारिकाणां च। तेषां सर्वेषामेव सर्वथा प्रपन्नत्वं समानो धर्मः। स च सर्वभावेन शरणागतत्वम्। तेषु सर्वेष्वेवानुरतत्वम्। तत्र श्रुतिरूपगणेनुरतत्वं भगवद्रतत्वानन्तरं रतत्वम्। अत एवोक्तं 'त्वयाभिरमिता' इति। अन्तर्गृहगतगणे लक्ष्मीवन्नित्यसम्बद्धत्वमेव। कुमारिकागणे पूर्वधर्मसत्त्वेपि स्वेनैव, नतु भगवता विवाहितत्वम्। तथा च सर्वेषां भगवत्परत्वात् सर्वभावेन न लौकिककामसत्त्वेपि शङ्का कापीति भावः। नन्वेवं सति कामलीलोत्तरं 'इभराडिव भिन्नसेतु'रिति गजदृष्टान्तकथनेन मर्यादाभङ्गकरणं न युज्यते। नहि शास्त्रोक्तदेशकालमर्यादाभङ्गे कामरसस्तथानुभूयते। तद्भङ्गस्तु गजदृष्टान्तेन तथाविधस्पर्शात् स्वामिनीनां कामनिवर्तनेनाभिहितः। नहि कामनिवृत्तौ तच्छास्त्रोदितदेशकालमर्यादा (न) तिष्ठति, तदभावे वा तथा रमणं सम्भवति। निवृत्तकामानां तद्देशे तावत्कालं प्रभुणा सह स्थितेरित्याशङ्क्याहुः अग्रे मर्यादाभङ्ग इति। कामलीलायामेवाग्रे मर्यादाभङ्गः काममर्यादाभङ्गो रसपोषाय, न सर्वथा कामनिवृत्तये। उन्मर्यादभोगस्य रसपोषकत्वात्। तदेवोक्तं तदुक्तमित्यादिना। अन्यथा कामनिवृत्तावेतल्लीलाया नित्यत्वं न भवेत्। यद्यप्येवं सम्भवति समाहितिः, तथापि स्वामिनीषु न लौकिकः कामः स्थापितः। तथा सति संयोगरसेच्छोदियात्। देयश्चात्रात्यन्तिकवियोगः। तत्र च कामो गूढः स्थायीभावः, अत एव मोक्षपर्यवसायी, नित्यसुखानुभूतिहेतुत्वात्। ततश्च स्वरूपमात्रप्राप्तिः। अत एवोक्तं 'ज्ञात्वात्मानमधोक्षज'मिति। फलमप्यत एव एतल्लीलाश्रवणस्य लौकिककामनिवृत्तिः। तथा च 'सत्य एव कामः स्थापित'इत्युक्तमतिरमणीयमाचार्यैरिति नानुपपत्तिः काचित्। १०–३०–२६.

---

श्रीगोपीजनवल्लभाय नमः। ननु देवस्त्रीणामपि वेणुनादेन विस्मयोत्पत्तिपूर्वकं कामोद्रेकात् मूर्छया विस्मृतनीवीत्वात् तासु भगवद्रससम्बन्धाभावात् इयं दशा रसाभा-

सदशेति निश्चीयते यथा, तथा 'निजपदाब्जदलै'रिति युगले व्रजसीमन्तिनीनामपि वेणुनादात् नीवीकबरविस्मृतिरप्युच्यत इति कथं न देवस्त्रीतुल्यत्वमिति चेत् । तत्र वदामः । यद्यपि देवस्त्रीणां मूर्छया नीव्यनुसन्धानाभावात् उच्यते, तस्य भगवद्भावाजन्यत्वात् केवलकामभावजन्यत्वेन रसाभासत्वम्, न तु रसात्मकत्वम् । ननु वेणुनादश्रवणानन्तरभावित्वात् तदवस्थायाः कथं न भगवद्भावजन्यत्वम् । सत्यम् । यत्र यत्र वेणुनादजनितं कार्यमुच्यते, तत्र तत्र तदनुगुणं भगवत्स्वरूपमुच्यते । अत्र यद्ययं वेणुनाद एतासां भावोत्पादनहेतुः स्यात्, तदा स्वरूपस्यापि तद्भावोत्पत्त्यनुगुणत्वमप्युच्येत । अत्र तु भगवतः प्रवेशत्वनिरूपणात् स्वरूपस्य न नादानुगुणत्वमिति न भगवद्भावहेतुत्वं नादस्य । एतासां भगवद्भावाजन्यत्वे हेत्वन्तरमप्याह विस्मिता इति । नादश्रवणमेतासां विस्मयोत्पादकमेव जातम्, न भगवद्भावोत्पादकम् । विस्मयस्य सर्वविस्मारकत्वेन वस्तुस्वरूपाज्ञानात् लौकिककामजनकत्वमेव, न स्वलौकिकभगवद्भावात्मकतज्जनकत्वम् । अत एव लौकिकः कामः अतिप्राचुर्येणास्मान् मारयिष्यतीतिभयेन दयया स यथा न मारयेत्, तदर्थं स्वयमेव समर्पितचित्ता जाताः । यद्ययं भावः भगवद्भावात्मकः अलौकिकः स्यात्, तदा भगवत्प्राप्त्यर्थमेव यत्नं कुर्युः, न तु स्वरक्षार्थं काममार्गणेषु चित्तं समर्पयेयुः । तस्मादियं दशा एतासां लौकिकभावजन्यैव, न भगवद्भावजन्येति महदेव वैलक्षण्यम् । व्रजसीमन्तिनीषु तु वसनकबरानुसन्धाने हेतुत्वेन युगलारम्भ एव स्वरूपनादयोस्तद्धेतुत्वेनैवोपक्रान्तत्वात्, अग्रिमश्लोके च भगवत्कृतगतिविलाससहितेक्षणयोः मनोभववेगहेतुत्वेनोक्तत्वात्, अत्र च एतद्रसभावस्य मनोभवपदोक्त्या अस्य भावस्य अलौकिकभगवद्भावात्मकत्वात् तद्वेगजनितवसनकबरानुसंधानस्यापि भगवद्भाववेगजन्यत्वात् तत्कृतदशाया अपि अलौकिकभगवद्रसभावजन्यत्वात् रसात्मकत्वमेव, न रसाभासहेतुत्वम् । देवस्त्रीणां तु भगवद्भावरहितकेवललौकिककामजन्यत्वात् भगवदनुपयोगित्वात् रसाभासहेतुत्वमेव, न रसात्मकत्वमिति सर्वमनवद्यम् । शुभमस्तु । १०–३२–०.

---

श्रीहरिः । ननु यथा यथा भक्तानां स्वविषयकामार्तिं पश्यति, तथा तथा मुदितो भवतीति वस्तुस्थितिरित्यत्र । यद्यपि परमकृपालोर्भगवतस्तथा स्वभावकथनमनुचितम्, तथापि तदोक्तेरयमाशयः । भगवतो भक्तेषु परमानुरागात् परोक्षे तद्धृदये स्वस्वरूपप्रकटनेन गुणगानश्रवणानन्दानुभवेच्छा, सा च तदार्त्यैव पूर्यत इति तादृशानन्दविशेषेण मुदितो भवतीति तथा स्वभाव इत्यर्थः । टिप्पणी १०-३२-०.

---

श्रीहरिः । अथवा । यथा स्वस्य भगवद्विप्रयोगे तत्स्वरूपगुणलीलागानानुभवैर्यथाकथञ्चित् कालनिर्वाहः, तथा भगवतोपि स्वविप्रयोगे यथा कथञ्चित् कालनिर्वाहकस्वसम्बन्धिधर्माविष्कारहेतुभूतपदार्थानाहुः मणिधर इति । भगवान् मणीन् धारयति, तेषां

स्वरूपं गवामांधिदैविकरूपत्वेन निरूपितम् । कदाचित् तेगाः गणयतीति हेतुना यन्नि-रूपितम्, तद्वस्तुस्वरूपगोपनार्थम् । वस्तुतस्तु तेषां स्वरूपमन्यदेव । यथा कौस्तुभ-स्वरूपं जीवतत्त्वम्, तथा एतन्मणीनामपि एतद्भक्तस्वरूपतत्त्वज्ञापकत्वात् एतद्भक्तस्वरूप-तत्त्वरूपत्वम् । इदं तत्स्वरूपत्वमेतद्भक्तगणनया ज्ञाप्यते । ननु एतद्भक्तगणनाया अनुक्तत्वात् कथमेतद्गणना ज्ञायत इति चेत्, तत्राहुः क्वचिदागणयन् गा इत्यनेन । भक्तगणनाया एव मुख्यत्वम्, न तु गोगणनायाः । अन्यथा क्वचित्पदं न वदेयुः । अत एव क्वचिदेव गा गणयति, सदा ता एव गणयतीत्युक्तं भवति । अयमेकः कालनिर्वाहहेतुधर्मो निरूपितो भगवतः । तस्य च व्यभिचारिभावत्वात् चिरकालास्थायित्वेन सर्वथा कालानिर्वाहात् ततोप्यधिकमनुभावकं कालनिर्वाहकमाहुः मालया दयितगन्धतुलस्या इति । दयित-गन्धायास्तुलस्या मालया उपलक्षितः । ननु सर्वपुष्पापेक्षया तुलसीमालाया एव दयितत्वे को हेतुः? तत्र हेतुमाहुः । अत्र मालास्थतुलसीगन्धस्य दयितत्वोक्त्या एतन्मालायाः साक्षाद्व्रजसीमन्तिन्यङ्गसङ्गसम्बन्धिलीलासम्बन्धित्वमुच्यते । लीलायां तदङ्गसम्बन्धिकम-लगन्धस्य तत्कुचकुङ्कुमगन्धस्य च मालायां सत्त्वात् सात्त्विकभावजनितस्वेदेन तत्कुङ्कुमले-पयुक्तत्वात् तद्गन्धग्रहणेन तत्सम्बन्धिसर्वलीलानुसन्धानेन तदा तल्लीलात्मकत्वात् प्रभो-स्तद्गन्धस्य दयितत्वमुक्तम् । तेन चिरकालमेतद्रसावेशात् कियत्कालनिर्वाहः सूचितः । तथाप्येतद्भावस्य व्यभिचारिभावत्वात् पुनर्बाधानुसन्धाने तत्सम्बन्धव्यतिरेकेण स्थातुम-शक्त्या तल्लीलानुकरणेनापि कियत्कालगमनं ज्ञापयन्ति प्रणयिन इति । प्रणयित्वात् तल्लीलानुकरणयोग्यत्वम् । तस्य प्रणयिनोत्यन्तस्नेहवत्त्वात् भगवतोपि तस्मिन् स्नेहवल्ली-लानुकरणयोग्यत्वं ज्ञाप्यते । अनुचरत्वेन भगवदिच्छानुसारि भगवत्करणाविरोधित्वं ज्ञाप्यते । तेन तद्भावपूर्त्यर्थमंसे भुजस्थापनं तद्भावापत्त्या वेणुगानं चेत्तस्य गानस्याकस्मि-कत्वम्, यतस्तद्भावापत्त्या उत्पन्नम् । अत एव तस्य क्वणनात्मकत्वमुक्तम्, पूर्वनिरूपित-नादवैलक्षण्याय । वैलक्षण्यं च तन्नादकार्यादध्यवसीयत इति तत्कार्यस्यापि पूर्वनादजा-तकार्यवैलक्षण्यं हरिणीष्वाह वेणुरववञ्चितचित्ता इति । रवपदेन तस्य नादस्याभ्यमृत-बीजरूपत्वं ज्ञापितम् । तेन हरिणीनां नादश्रवणमात्रेण भगवद्विषयकार्तिजनकत्वमभि-रूपत्वम् । भगवतैव तदार्तिशमनज्ञानवत्त्वममृतबीजकार्यम् । तेनोभयकार्यकर्तृत्वान्नादस्य तदुभयरूपत्वम् । ननु कथमस्या आर्तेर्भगवद्विषयकत्वमेवेति चेत्, तत्राहुः कृष्णमन्व-सत्तेति । यदि भगवद्विषयिण्येवार्तिर्न स्यात्, भगवतैव तच्छान्तिज्ञानं न स्यात्, तदा भगवन्निकटे गत्वा नोपविष्टा भवेयुः । आसां स्वस्मिन् हरिणीत्वज्ञानस्य विद्यमानत्वा-द्भगवति च स्वसजातीयत्वज्ञानाभावात् कथं तद्विषयिण्यार्तिर्भगवतैव च तच्छान्तिज्ञानमिति चेत्, तत्राहुः वञ्चितचित्ता इति । रवेण तासां वञ्चितचित्तत्वं, यतः जातं तत एव तदुभयस्फूर्तिः । वञ्चनं च स्वस्मिन् स्वजातिभावास्फूर्त्या रसयोग्यनायिकाभावेन च । तेन च भगवति स्वसजातीयत्वस्फूर्तिरिति तन्निकटोपवेशनम् । उपवेशनं च फलमननुभूयो-

स्थानरहितम् । इदमेव चित्तवञ्चनम् । ननु भर्तृषु विद्यमानेषु कथं तान् विहाय भगवत्समीपोपवेशनमिति चेत्, तत्राहुः कृष्णगृहिण्य इति । यद्यपि भर्तृसन्निधानमस्ति, तथापि स्वस्मिन् भर्तृजातिविजातीयनायिकाभावस्फूर्त्या भगवति च स्वसजातीयभावस्फूर्त्या स्वस्मिन् भगवद्भोग्यत्वज्ञानेन कृष्णगृहिणीत्वस्फूर्तिरिति कृष्णसमीप एवोपवेशनम् । तत एव भगवति गुणगणार्णवत्वस्फूर्तिरपि । अनुगत्वेति कथनात् पूर्वभावदार्ढ्यात् भगवतः स्थलान्तरगतावपि स्वयमपि तत्र गत्वा तद्भावापन्ना एवोपविशन्तीति ज्ञापितम् । ननु कथमेतासु पूर्वोक्तैतावती योग्यतेति चेत्, तत्राहुः हरिण्य इति । एतास्तु भगवता पूर्वं स्वस्मिन् रसभावजनकत्वेन स्तुताः 'कुर्वन्ति गोप्य इव ते प्रियमीक्षणेने'ति । 'गोप्य इवे'ति कथनादेतदीक्षणेन तत्सजातीयत्वेन व्रजसीमन्तिनीक्षणस्मरणात् स्वहृदये तदीयसर्वभावाविर्भावात् तासु कृपाविशेषः सूच्यत इति तासां पूर्वोक्तसर्वभावयोग्यता हरिणीपदेन ज्ञाप्यते । अत एव स्वसजातीयत्वमुक्तं गोपिका इवेति । अत एवान्योपि सजातीयो धर्म उक्तः विमुक्तगृहाशा इति । यथा फलप्रकरणे गृहगमनाज्ञप्तौ 'आशा विसृज्य वसतीरि'ति गृहगमनाशापरित्यागपूर्वकं स्वयं भगवन्निकटे स्थिताः, अधुना तथैवैतासां स्थितिरिति विमुक्तगृहाशा इत्युक्तम् । ननु तादृग्भाववत्त्वेपि कथं वञ्चितचित्तत्वमिति चेत्? यद्यप्यस्य भावस्य वेणुनादद्वारा जनितत्वात् तस्य च रवात्मकत्वात् पूर्वं रेफस्याग्निबीजत्वादार्तिजनकत्वम् । तत एव भगवत्समीपगमनम् । पश्चादमृतबीजत्वाद्वकारस्य पश्चात्कृतवेणुनादस्यामृतरूपत्वेन तदार्तिशमनम् । तत्रार्तिशमनप्रकारः निकटोपविशनां स्वरूपदर्शनात् । पश्चात्कृतवेणुनादस्य श्रोत्रद्वारा अन्तः प्रवेशसमये नादद्वारा स्वरूपस्याप्यन्तःप्रवेशात् तस्य चान्तरेव सम्बन्धानुभवज्ञानात् आर्तिशमनं यद्यपि तासाम्, तथापि स्वामिनीनां साक्षात् स्वरूपसम्बन्ध एवार्तिशमनमिति तत्प्रकारकार्तिशमनं वस्तुतो वञ्चनमेवेति तथोक्तमिति भावः ॥ १०-३२-१८.



# एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः ।

# एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमः।

# उपन्यस्तवाक्यानां सूचिपत्रम् ।

| उपन्यस्तवाक्यम् | पृष्ठम् | पंक्तिः | कुत्रत्यम् । |
|---|---|---|---|
| १ मयेमा रंस्यथ क्षपाः | ३ | ४ | भा. १९-२२-२७ |
| २ सा दिग् देवानाम् | ५ | ८ | |
| ३ तस्माद् गायन्तं स्त्रियः कामयन्ते | ८ | ६ | |
| ४ व्यत्यासो मार्गगतौ | १० | १६ | |
| ५ रक्षेत् कन्यां पिता- | ११ | २ | याज्ञवल्क्यस्मृतिः १-८५ |
| ६ प्रक्षालनाद्धि पङ्कस्य | ११ | ११ | न्यायः { म. भा. ३-२-४९ / पं. त. २-१५७ |
| ७ तमेव विदित्वातिमृत्युमेति- | १३ | १३ | श्वे. उ. ६-१५ |
| ८ भक्त्यैव तुष्टिमभ्येति | १३ | १४ | |
| ९ ज्ञानयोगश्च मन्निष्ठः- | १३ | १५ | भा. ३-३२-३२ |
| १० भक्त्या मामभिजानाति | १३ | १६ | भ. गी. १८-५५ |
| ११ एकस्य तूभयत्वे संयोगपृथक्त्वम् | १६ | ५ | पू. मी. न्यायः ४-३-५ |
| १२ अन्ते या मतिः सा गतिः | १६ | ६ | न्यायः |
| १३ स्वमूर्त्या- | १७ | ११ | भा. ११-१-६-७ |
| १४ सत्त्वात् सञ्जायते ज्ञानम् | १७ | १४ | भ. गीता १४-१७ |
| १५ ये यथा मां प्रपद्यन्ते | १७ | २५ | भ. गीता. ४-११ |
| १६ गोप्यः कामात्- | १७ | १८ | भा. ७ १ ३० |
| १७ सर्वरसः | २० | ५ | छान्दोग्यम् ३-१४-२ |
| १८ नाहमात्मानमाशासे | २० | १५ | भा. ९-४-६४ |
| १९ कृषिर्भूवाचकः- | २० | २७ | गो. ता. उपनिषद् |
| २० अहृयापूर्ते निशि शयानम् | २१ | २ | भा. २-७ ३१ |
| २१ ता मन्मनस्काः- | २१ | २३ | भा. १०-४३-४ |
| २२ एताः परं तनुभृतः | २१ | २४ | भा. १०-४४-५८ |
| २३ नोद्धवोऽण्वपि मन्न्यूनः | २१ | २४ | भा. ३-४-३१ |
| २४ संत्यज्य सर्वविषयान् | २१ | २६ | भा, १० २९-३१ |
| २५ तव पादमूलं प्राप्ताः | २१ | २८ | भा. १० २९ ३१ |
| २६ इति प्रणयबद्धाभिर्गोपीभिः | २२ | १ | भा. १०-६-३० |
| २७ सात्त्विकं सुखमात्मोत्थम्- | २२ | ४ | भा. ११-२५-२९ |
| २८ भजेदपतितं पतिम् | २८ | ४ | भा. ७-११-२८ |
| २९ काममयश्चाय पुरुषः | ३१ | १३ | बृ. उ. ४-४-५ |
| ३० ये यथा मां प्रपद्यन्ते | ३२ | १६ | भगवद्गीता ४-११ |
| ३१ एष ह्येवानन्दयाति | ३३ | ७ | तै. उ. २-७ |
| ३२ स्वाप्ययसम्पत्त्योराविष्कृतं हि | ३३ | ७ | ब्र. सू. ४-४-१६ |
| ३३ द्रव्यसंस्कारविरोधे द्रव्यं बलीयः | ३५ | २ | पू. मी. न्यायः ६-३-३८ |
| ३४ भवाय नाशाय | ३५ | ५ | भा. ५-१-१३ |
| ३५ तथात्मने प्रतिमुखस्य | ३७ | १ | भा. ७-९ ११ |
| ३६ यतो यतो निवर्तेत | ३७ | ४ | भा. ११-२१-१८ |
| ३७ आशाबन्धो हृदयं रुणद्धि, | ३८ | १ | पूर्वमेघ १० |

| उपन्यस्तवाक्यम् | पृष्ठम् | पंक्ति. | मूलग्रन्थम् । |
| --- | --- | --- | --- |
| ७० सोमः प्रथमः | १४७ | १३ | |
| ७१ सहृद्दर्शनान्मुक्तिः | १४८ | ७ | |
| ७२ नन्दगोपसुतं देवि पतिं मे कुरु | १४८ | ११ | भा. १०-१९-४ |
| ७३ अधिकं तत्रानुप्रविष्टं नतु तद्धानिः | १४९ | ७ | न्यायः |
| ७४ शाखाणां विषयत्वाद् याव-न्मन्द्रासाः | १५४ | ५ | यामसूत्रम् २-२-२२ |
| ७५ धर्मसंस्थापनाय च | १५५ | ७ | |
| ७६ न हि दृष्टेऽनुपपन्नं नाम | १५७ | ३ | न्यायः |
| ७७ तेजीयसामपि क्षेतन्न सुखोवयम् | १५७ | १२ | भा. ३-१२-३१ |
| ७८ यद्वृत्तमनुतिष्ठन् वै लोकः क्षेमाय | १५७ | १२ | भा. ३-१२-३१ |
| ७९ परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् | १५९ | ११ | तै. सं. १-६-९ |
| ८० ब्रह्म वा इदमग्र आसीत् | १५९ | १२ | बृहदारण्यकम् १-४-१९ |
| ८१ स आत्मानमेवावेत् | १५९ | १२ | बृहदारण्यकम् १-४-१० |
| ८२ अयं हि परमो धर्मः | १६० | ६ | याज्ञवल्क्यस्मृतिः १-८ |
| ८३ यद्यदाचरति श्रेष्ठः | १६० | १८ | भगवद्गीता ३-२१ |
| ८४ न स्त्री न षण्ढो न पुमान् | १६० | २८ | भा. ८-३-२४ |
| ८५ कृष्ण तवास्मि | १७० | ६ | गद्यमन्त्रः |
| ८६ न मे द्वेष्योऽस्ति न प्रियः | १७० | २१ | भगवद्गीता ९-२९ |
| ८७ अस्थानान्मणिरुत्तमः | १७८ | २० | |
| ८८ तरुविजृम्भः परमेष्ठिधिष्ण्यम् | १८१ | १४ | भा. २-१-३० |
| ८९ यथा वृक्षस्य दूराद्गन्धो वाति | १९२ | ३ | तै आ. १०-९ |
| ९० दयितगन्धतुलस्या | १९२ | १५ | भा. १०-३२-१८ |
| ९१ बाहुं प्रियांसे | १९२ | १५ | भा. १०-२७-१२ |
| ९२ तुलसिकालिकुलैर्मदान्धैरन्वीयमानः | १९२ | १६ | भा. १०-२७ १२ |
| ९३ दशहूतो ह वै नामैष – | १९२ | २० | तै. ब्रा. २-३-११-१ |
| ९४ परोक्षप्रिया इव हि देवाः | १९२ | २१ | तै ब्रा. ३-२-८ पृ. १२ |
| ९५ परोक्षं च मम प्रियम् | १९२ | २१ | भा. ११-२१-३५ |
| ९६ आशंसायां भूतवच्च | १९९ | ६८ | पाणिनिसूत्रम् ३-३-१३२ |
| ९७ भर्ता सन् भ्रियमाणो बिभर्ति-पुनरस्तमेति | २०३ | ११ | तै. आ. ३-१४-१ |
| ९८ पशवो वा एकशफाः | २०४ | १ | |
| ९९ अदितिर्देवकी | २०४ | ६ | ऋग्वेद १-८९-१० |
| १०० गोप्यो दिदृक्षितदृशोऽभ्यगमन् समेताः | २०४ | १९ | भा. १०-१२-४२ |
| १०१ कर्तुरीप्सिततमं कर्म | २०५ | १० | पाणिनिसूत्रम् १-४ ४९ |
| १०२ अदितिर्द्यौरदितिरन्तरिक्षम् | २०४ | | तै. आ १-१३-६ |
| १०३ ऐश्वर्यस्य समग्रस्य | ९८ | ७ | वि पु. ६-५-७४ |